यस्य चित्ते सति विद्यमाने प्राक् चित्तसम्बन्धलक्षणसंसारावस्थायां इत्यर्थः । अहं स्वतन्त्र इति परमात्माभेदप्रतीतिर्नास्ति । स्वयमेवात्मा तस्मिन् **स्वात्मनि** केवलात्मनि प्राकृतचित्तविनिर्मुक्ते वा मोक्षे वा 'परोऽहम्' 'पूर्णोऽहं भविष्यामि' इति **अभिदा** परमात्माभेदप्रतीतिर्नास्ति यः **सर्वभूतसमः** सर्वभूतेषु समः= यथोचितं वर्तमानः यथोचितं बहुमानादिकर्ता इत्यर्थः । सर्वभूततारतम्यज्ञानवान् इति भावः । **शान्तः** परमात्मनि न्यस्तचित्तः **भागवत्तोत्तमः** ॥ ५२ ॥

**त्रिभुवनविभवहेतुभिर्विकुण्ठस्मृतिभिरजेशसुरादिभिर्विमृग्यात् ।**
**न चलति भगवत्पदारविन्दाल्लवनिमिषार्धमपि स्म स वैष्णवाग्र्यः ॥ ५३ ॥**

विकुण्ठस्य स्मृतयः= निरन्तरानुसन्धानानि येषां ते तैः, अत एव भुवनस्य= सज्जनसमुदायस्य हेतुभिः ज्ञानादिविभवकारणैः अजादिभिः **विमृग्यात्** ध्यानादिभिः प्रसादेन प्राप्यात् इत्यर्थः । समीपस्थत्वेऽपि चक्षुराद्यव्यक्तत्वात् इति भावः । यः भगवत्पदारविन्दात् **लवनिमिषार्धमपि न चलति** लवनिमिषयोरर्धं लवार्धं निमिषार्धं वा न चलति, पदारविन्दं ध्यायतीत्यर्थः स वैष्णवाग्र्यः ॥ ५३ ॥

श्रीहरिचरणध्यानं सर्वानिष्टनिवर्तकमिति हर्षात् स्तौति- **भगवत** इति ।

**भगवत उरुविक्रमाङ्घ्रिशाखानखमणिचन्द्रिकया निरस्ततापे ।**
**हृदि कथमुपसीदतां पुनः स प्रभवति चन्द्र इवोदितेऽर्कतापः ॥ ५४ ॥**

**विसृजति हृदयं न यस्य साक्षाद्धरिरवशाभिहितोऽप्यघौघनाशः ।**
**प्रणयरशनया धृताङ्घ्रिपद्मः स भवति भागवतप्रधान उक्तः ॥ ५५ ॥**

**॥ इति श्रीमद्भागवते एकादशस्कन्धे द्वितीयोऽध्यायः ॥**

**भगवतः** वामनस्य उरु विक्रमः । महापादविन्यासो यस्य सः **उरुविक्रमः** यः अङ्घ्रिः तस्य शाखाः तस्य नखमणयः= नखश्रेष्ठाः नखमणय इव नखमणय इति वा अङ्गुलिगता इति भावः । तेषां चन्द्रिका चन्द्रिकेव चन्द्रिका उद्यत्पूर्णचन्द्रकान्तिसदृश-कान्तिः, तया **हृदि निरस्ततापे** सति **उपसीदतां** परमात्मानं शरणं गतानां सेवमानानाम् इति वा । सदा चन्द्रिका सुधा शशिकान्ता इति भावः । **पुनः स तापः कथं प्रभवति?** पुनः नोत्पद्यत इति अर्थः । तत्र दृष्टान्तः चन्द्रे पूर्णचन्द्रे **उदिते** सति **अर्कतापः** इव, स यथा न प्रभवति । एवं अन्यत्र वा सक्तेनापि अभिहितः= स्वनाम्ना कीर्तितः बह्वभ्यासादिति भावः, **साक्षाद्** अघानाम्= अत्युत्कृष्टमहापाताकानाम् ओघाः= समूहाः, तेषां **नाशो** येन सः । **प्रणयरशनया** भक्तिलक्षणश्लाघ्यदाम्ना हृदये धृते= नियोजिते अङ्घ्रिपद्मे= यस्य सः तथाविधः सन् **यस्य हृदयं न विसृजति स भागवतप्रधान** इत्युक्तो भवति ॥ ५५ ॥

॥ इति श्रीयादवेन्द्रयतिविरचिते एकादशस्कन्धव्याख्याने द्वितीयोऽध्यायः ॥

# 3 | तृतीयोऽध्यायः

**राजोवाच-**

**परस्य विष्णोरीशस्य मायिनामपि मोहिनीम् ।**

**मायां वेदितुमिच्छामो भगवन्तो ब्रुवन्तु नः ॥ १ ॥**

**मायिनां** तमोगुणादिप्रेरकाणाम् अर्थकामानाम् । अहङ्कारभ्रमः माया तत्प्रवर्तकानां **मायिनां मोहिनीं** चित्तविक्षोभकरीम् । **ईशस्य** ईशाधीनां **मायां** प्रकृतिं **वेदितुं** विविधकार्य-रूपेण परिणतां ज्ञातुम् अथवोपायं सर्वकरणव्यापारमूलकारणरूपां ज्ञानादिशक्तिं बलशक्तिं वा वेदितुम् इच्छामः ॥ १ ॥

रसज्ञस्य श्रीमद्धरिगुणप्रश्नपर्यवसानं नास्ति इत्याशयेनाह- **नानुतृप्य** इति ।

**नानुतृप्ये जुषन् युष्मद्वचो हरिकथामृतम् ।**

**संसारतापनिष्टप्तो मर्त्यस्तत्तापभेषजम् ॥ २ ॥**

युष्मद्वचोरूपं **हरिकथामृतं तत्तापभेषजं जुषन्** सेवमानः **मर्त्यः** अहं **नानुतृप्ये** अथ **मर्त्यः** संसारे तापेन= तापकरणेन निष्टप्तः= अत्यन्तं तप्तः तत्तापस्य भेषजं= निवर्तकं **जुषन्** कः तृप्येदित्यर्थः ॥ २ ॥

**अन्तरिक्ष उवाच-**

**एभिर्भूतानि भूतात्मा महाभूतैर्महाभुजः ।**

**ससर्जोच्चावचान्यादौ स्वयमात्मप्रसिद्धये ॥ ३ ॥**

**एभिः** गुणमहदादिभिः सृष्टिकामेन ब्रह्माण्डसृष्ट्यनन्तरं सृष्टैरित्यर्थः । **महाभूतैः महाभुजः** महान्तः भुजाः यस्य सः विराण्मूर्तिः **स्वयं** चतुर्मुखात् पूर्वमिति भावः । उच्चावचानि सुरान् **भूतानि** चेतनान् ज्ञानाधिकारेन्द्रियसङ्घातलक्षणदेहोपेतान् इति भावः । **आत्मप्रसिद्धये** भूतानां भगवद्ज्ञानार्थं **ससर्ज** कृतवान् ॥ ३ ॥

**एवं सृष्ट्वा स भूतानि स्थविष्ठैः पञ्चधातुभिः ।**
**एकधा दशधाऽऽत्मानं विभजन् जुषते गुणान् ॥ ४ ॥**

**गुणैर्गुणान् स भुञ्जान आत्मप्रद्योतितैः प्रभुः ।**
**मन्यमान इदं सृष्टम् आत्मानमिह सज्जते ॥ ५ ॥**

**स्थविष्ठैः** घनीभूतैः **धातुभिः** भूतैः **एवं भूतानि** चतुर्मुखस्थः सन्नपि भूतानि **सृष्ट्वा सः** सर्वभोक्ता श्रीहरिः **आत्मानम् एकधा** मनोनियामकत्वेन, **दशधा** दशेन्द्रियनियामकत्वेन **विभजन्** विभक्तं कुर्वन् **गुणान्** शब्दस्पर्शादीन् **जुषते** भुङ्क्ते । मनोगतस्य तत्स्मृतिविषयसुखं विषय इति भावः । अथवा स्वप्नभोक्तृतैजसवत् मनोगतः परमात्मा प्रविविक्तमनोरथभोक्ता इति भावः । यः अन्तर्यामी आत्मना= स्वसामर्थ्येन प्रद्योतितैः= ज्ञानजननोन्मुखैः **गुणैः** स्वाधीनैः इन्द्रियैः । गुणान् विषयान् भुञ्जानः **प्रभुः** विषयभोगप्राप्तदोषनिरसनसमर्थः सन् देहकारणेषु यः आस्ते । देहे परमात्मव्यापारमुक्त्वा जीवव्यापारमाह- **मन्यमान** इति । **इदं** विषयभोजनमुद्दिश्य **सृष्टं** कर्मभिः तं सृष्टं स्वात्मानम् अहमेव भोक्ता इति स्वातन्त्र्येण भोक्तारम् **आत्मानं मन्यमानः** सन् आस्ते । अतः **इदं** विषयजातं **सृष्टं** परमात्माधीनम् आत्मानं स्वाधीनमेवेति मन्यमान इति वा । जीवः **इह** नरकभूम्योः तमसि वा **सज्जते** लग्नो भवति । स्वस्मिन् स्वातन्त्र्यारोप एव परमात्मत्वारोप इति भावः ॥ ५ ॥

**इह सज्जत इति एतत् विवृणोति- कर्माणीति ।**

**कर्माणि कर्मभिः कुर्वन् सनिमित्तानि देहभृत् ।**
**तत्तत्कर्मफलं गृह्णन् भ्रमतीह सुखेतरम् ॥ ६ ॥**

**देहभृत् कर्मभिः** कर्मेन्द्रियादिभिः **सनिमित्तानि** पूर्वकर्मादिप्राप्तानि **कर्माणि** शुभानि कर्माणि **कुर्वन्** सुखाद् इतरं तत्तत्कर्मफलं दुःखं **गृह्णन्** अनुभवन् **इह** भूम्यादौ **भ्रमति ॥** ६ ॥

**इत्थं कर्मगतीर्गच्छन् बह्वभद्रावहः पुमान् ।**
**आभूतसंप्लवात् स्वर्गप्रळयावश्नुतेऽवशः ॥ ७ ॥**

**इत्थं** दुःखमनुभवन् **कर्मगतीः** गम्यत इति गतिः, कर्मप्राप्यतिर्यगादीनि च **गच्छन् पुमान्** सन् **बह्वभद्रावहः** रागद्वेषादिना बहुपापकर्ता सन् **आभूतसम्प्लवात्** सम्प्लवो नाशः, भूतसम्प्लवपर्यन्तं महाप्रलयपर्यन्तं **सर्गप्रलयौ** जन्ममरणे **अवशः** स्वेच्छानधीनः कर्मवशः **अश्नुते** जन्मादिप्राप्तदुःखादिकं भुङ्क्ते इत्यर्थः ॥ ७ ॥

परमात्ममायायाः लयकारणत्वमाह- **धातूपप्लव** इति ।

**धातूपप्लव आसन्ने व्यक्तं द्रव्यगुणात्मकम् ।**
**अनादिनिधनः कालो ह्यव्यक्ताय विकर्षति ॥ ८ ॥**

आदिः= उत्पादकं, निधनं= नाशः, ताभ्यां कदाऽपि रहितः **कालः** संहरणसमर्थः परमात्मा धातूनां= भूतादीनाम् उपप्लवे= नाशे आसन्ने सति लयकाले प्राप्ते सति इत्यर्थः । द्रव्याणि= भूतानि गुणाः= रूपरसादिगुणाः, सत्वादयो वा एतत्समुदायरूपं

व्यक्तं ब्रह्माण्डम् **अव्यक्ताय** प्रकृतिमात्रेणावस्थाय **विकर्षति** ब्रह्माण्डसृष्टावयवान् शिथिली-करोति इत्यर्थः ॥ ८ ॥

ब्रह्माण्डस्य नाशे कारणान्तरं च वदन् ब्रह्माण्डान्तःस्थपृथिव्यादिलोकनाशे कारणन्तरं च आह- **शतवर्षम्** इति ।

**शतवर्षमनावृष्टिर्भविष्यत्युद्बणा भुवि ।**
**तत्कालोपचितोष्णार्को लोकांस्त्रीन् प्रतपिष्यति ॥ ९ ॥**

**पाताळतळमारभ्य सङ्कर्षणमुखानलः ।**
**दहन्नूर्ध्वमुखो विष्वग्वर्धते वायुनेरितः ॥ १० ॥**

**संवर्तको मेघगणो वर्षति स्म शतं समाः ।**
**धाराभिर्हस्तिहस्ताभिर्लीयते सलिले विराट् ॥ ११ ॥**

**उद्बणा** सर्वभूतानाम् असह्या **भविष्यति,** ब्रह्मणः द्वितीयपरार्धानन्तरम् इति भावः । तत्काले= प्रळयकाले, उपचितः= अभिवृद्धः उष्णः उष्णांशो यस्य सः, स चासौ अर्कश्च विश्वं पृथिव्यादिकं दहति । अनलः **वायुनेरितः वर्धते** ब्रह्माण्डं दहन् वर्धते । संवर्तः= प्रळयः, तत्रभवः संवर्तकसंज्ञोपेतः हस्तिनः= गजस्य हस्ताः= शुण्डाः तत्सदृशाभिः स्थूलाभिः **अम्बुधाराभिः वर्षति ।** ततः सम्पन्ने सलिले विराड्ब्रह्माण्डं **लीयते** अग्निना दग्धम् उदकेन शिथिलं नष्टं भवतीत्यर्थः ॥ ११ ॥

**ततो विराजमुत्सृज्य वैराजः पुरुषो नृप ।**
**अव्यक्तं विशते सूक्ष्मं निरिन्धन इवानलः ॥ १२ ॥**

**ततः** ब्रह्माण्डनाशानन्तरं **वैराजः** विराट्पुरुषः ब्रह्मा **विराजं** स्वाधिष्ठानं ब्रह्माण्डम् **उत्सृज्य, अव्यक्तं** कारणे स्थितं **सूक्ष्मं** वह्निदाहाद्यविषयं परमात्मानं **विशते । निरिन्धनः** शुष्ककाष्ठरहितः आश्रयरहित इत्यर्थः । **अनलः** वह्निः **अव्यक्तं** मूलकारणं प्रधानवह्निम् **इव** ॥ १२ ॥

'अव्यक्तं विशति' इत्युक्त्वा तस्य विस्तारो **वारिणेत्यादि** ।

**वारिणा हृतगन्धा भूः सलिलत्वाय कल्पते ।**
**सलिलं तद् हृतरसं ज्योतिष्ट्वायोपकल्पते ॥ १३ ॥**

**हृतरूपं तु तमसा वायौ ज्योतिः प्रलीयते ।**
**हृतस्पर्शोऽवकाशेन वायुर्नभसि लीयते ॥ १४ ॥**

कार्यस्य उत्पत्तिक्रमविपरीतक्रमेण नाश इति ज्ञापनायाह- **भूरिति** । गन्धनाशोपेतेन 'कार्यस्य कारणे लय' इति ज्ञापनाय 'सलिलत्वाये'ति । ज्योतिषा हृतः च **तमसा** तमोगुणानुसृतेन वायुना इत्यर्थः ॥ १४ ॥

**कालात्मना हृतगुणं नभ आत्मनि लीयते ।**
**इन्द्रियाणि मनो बुद्धिः सह वैकारिकैर्नृप ॥ १५ ॥**
**प्रविशन्ति ह्यहङ्कारं स्वगुणैरहमात्मनि ॥ १६ ॥**

**कालात्मना** संहारमूर्तिना श्रीहरिणा **हृत** शब्दलक्षण**गुणम् आत्मनि** परमात्मनि **लीयते** । 'नभ आत्मनि लीयते' इत्युक्त्वा, 'इन्द्रियाणि' इत्यपि विस्तराय । **बुद्धिः** अन्तःकरणप्रभेदः । **वैकारिकैः** देवैः । **अहङ्कारं** त्रिविधं विशति । **अहं** स्वगुणैः

स्वापेक्षया अप्रधानैः स्वस्मिन् प्रविष्टैः आकाशादिभिः सह **आत्मनि** बुद्धौ प्रविशति ॥ १६ ॥

**एषा माया भगवतः सृष्टिस्थित्यन्तकारिणी ।**
**त्रिवर्णा वर्णिताऽस्माभिः किं भूयः श्रोतुमिच्छसि ॥ १७ ॥**

**भगवतः** पूर्णैश्वर्यादिसम्पन्नस्य अधीना, स्थितिः= अन्नादिविषयदानेन देहादि-पालनं तत्कर्त्री **माया** चित्प्रकृतिः **त्रिवर्णा** त्रयाणां= रजःसत्वतमसां वरणात्= स्वीकारात् सृष्ट्याद्यर्थं तत्स्वीकारादिति भावः । **त्रिवर्णा** माया परमात्मनः विविधशक्तिः वर्णिता । **किं भूयः श्रोतुमिच्छसि?** रसज्ञस्य तव मुखप्रसादविशेषः प्रश्नाभिलाषं ज्ञापयति इति भावः ॥ १७ ॥

**राजोवाच-**
**यथैतामैश्वरीं मायां दुस्तरामकृतात्मभिः ।**
**तरन्त्यञ्जः स्थूलधियो महर्ष इदमुच्यताम् ॥ १८ ॥**

**मायां** देहबन्धलक्षणप्रकृतिम् **ऐश्वरीम्** ईश्वरस्य यथेष्टविनियोगार्हां शक्तिञ्च **अकृतात्मभिः** कृतः= ईश्वरे न्यस्तः आत्मा= मनो यैः ते, तदन्यैः **दुस्तरामपि स्थूलधियोऽपि** बहूपदेशार्हमपि **अञ्जः** सम्यक् **यथा** येन साधनेन **तरन्ति** बन्धे अप्रवृत्तां कुर्वन्ति इत्यर्थः । **इदं** स्थूलधियाम् उत्तारकञ्चोच्यताम् ॥ १८ ॥

विषयरागादिना निषिद्धकरणं च बन्धसाधनम्, तत्परित्याज्यमित्याशयेन आह- **कर्माणीति ।**

**प्रबुद्ध उवाच-**

**कर्माण्यारभमाणानां दुःखहत्यै सुखाय च ।**

**पश्येत् पाकविपर्यासं मिथुनीचारिणां नृणाम् ॥ १९ ॥**

**मिथुनीचारिणां** स्त्रीपुंसां विषयासक्तानामिति भावः । **दुःखहत्यै कर्माणि** परद्रव्यापहारादीनि **आरभमाणानां** कुर्वतां पाकस्य= फलपरिपाकस्य विपर्यासं= व्यत्यासम् अनिष्टनिवृत्त्यर्थं कृतस्य अनिष्टकारकत्वादि **पश्येत्** । एतादृशान् दृष्ट्वा स्वयं तथा न कुर्यादिति भावः ॥ १९ ॥

ननु परवित्ताद्यपहर्तॄणां तेन सुखमपि दृश्यते इत्याशङ्क्याह- **नित्यार्तिदेनेति ।**

**नित्यार्तिदेन वित्तेन दुर्लभेनात्ममृत्युना ।**

**गृहापत्याप्तपशुभिः का प्रीतिः साधितैश्चलैः ॥ २० ॥**

**वित्तेन** साधनेन **साधितैः** पोषितैर्वा गृहं= भार्या अपत्यपश्वादिभिः **चलैः** नाशादिदोषग्रस्तैः **का प्रीतिः?** न काऽपि । ततः सुखम् अल्पम्, शतं दुःखानीत्यर्थः । जायादिहेयतोक्तिः देवादिव्यतिरिक्तानां इति भावः ॥ २० ॥

इह द्रविणादिश्रेयसां यथा दुःखनियतत्वं एवं स्वर्गादीनामपि दुःखनियतत्वं इत्याह- **एवमिति ।**

**एवं लोकं परं विद्यान्नश्वरं कर्मनिर्मितम् ।**

**अतुल्यातिशयध्वंसाद् यथा मण्डलवर्तिनाम् ॥ २१ ॥**

अतुल्यातिशयैः देवैः ध्वंसात्= स्वर्गादधःपातनात्, पुण्यकर्मक्षये देवाः इतो गतान् पातयन्ति इति भावः । **मण्डलवर्तिनां** युद्धरङ्गस्थानां यथा ध्वंसः एवमिति भावः ॥ २१ ॥

**तस्माद् गुरुं प्रपद्येत जिज्ञासुः श्रेय उत्तमम् ।**
**शाब्दे परे च निष्णातं ब्रह्मण्युपशमाश्रयम् ॥ २२ ॥**

**तस्मात्** विषयभोगार्थं निषिद्धाद्याचरणे दुःखस्यैव प्राप्तेरित्यर्थः, तत्परित्यागं कृत्वेति भावः । **उत्तमं श्रेयः** श्रीहरिं **जिज्ञासुः** सन् उप= अधिकः शमः= परमात्मभक्तिः येषान्ते जिज्ञासवः, तेषाम् आश्रयम्, विषयतृष्णारहितमिति वा । **परे** ब्रह्मणि **निष्णातं** सक्तम्, सदा स्वामित्वेन तदनुसंधानकर्तारमित्यर्थः । **शाब्दे** वेदादिषु **निष्णातं** वेदार्थ-त्वेन श्रीनारायणगुणप्रवचनासक्तमित्यर्थः । **गुरुं** जिज्ञासितोपदेष्टारं **प्रपद्येत** शरणं गच्छेत् । उपायान्तरेण दुःखबन्धपरिहारस्य असम्भवादिति भावः ॥ २२ ॥

**तत्र भागवतान् धर्मान् शिक्षेद् गुर्वात्मदैवतः ।**
**अमाययाऽनुवृत्त्या यैस्तुष्येदात्माऽऽत्मदो हरिः ॥ २३ ॥**

**तत्र** गुरुसमीपे गुरुः आत्मा= अन्तर्यामी, दैवतानि यस्य सः । त्रिषु यथोचितं भक्तिमान् इत्यर्थः । गुरौ आत्मदैवतानि यस्य सः, गुरौ परमात्मा देवाताश्च सन्ति इति बुद्धिमान् इत्यर्थः । देवा यदि स्वप्रयोजनमात्रोद्देशेन स्तुताः तदा मायेत्युच्यते । तद्भिन्नया अमायया विष्णुसम्प्रीतिसम्पादकयेति भावः । **अनुवृत्त्या** तदिष्टसेवनया । यदा **आत्मदः** गुरौ स्थित्वा स्वज्ञानप्रदः हरिः, सर्वानिष्टपरिहर्ता आत्मदः गुरुश्च **तुष्येत्,** तदा **भागवतान् धर्मान् शिक्षेत्** उपदेशेन प्राप्नुयात् । गुरुप्रसादस्य गौप्योपदेशकारणत्वादिति भावः ॥ २३ ॥

विषयविरागज्ञानभक्तीनां निरन्तराभिवृद्धये अवश्यं सम्पादनीयगुणानाह- **सर्वत** इति ।

**सर्वतो मनसोऽसङ्गम् आदौ सङ्गं च साधुषु ।**
**दयां मैत्रीं प्रश्रयं च भूतेष्वद्धा यथोचितम् ॥ २४ ॥**

**सर्वतः** परमात्मज्ञानानुपयुक्तविषयेभ्यः **मनसः असङ्गं** विषयान्तरसञ्चारराहित्यं **आदौ शिक्षेत्** स्वयमभ्यसेत् । **साधुषु** देवादिस्वोत्तमेषु **सङ्गं** शिक्षेत् । अन्येषु साधुषु प्रयोजनं चेत् **सङ्गः** भवेदिति भावः । **प्रश्रयं** विनयम् । **अद्धा** सम्यक् ॥ २४ ॥

**शौचं तपस्तितिक्षां च मौनं स्वाध्यायमार्जवम् ।**
**ब्रह्मचर्यमहिंसां च समत्वं द्वन्द्वसञ्ज्ञयोः ॥ २५ ॥**

**शौचं** मृज्जलाभ्यां कर्तव्यशौचं कुर्यात् । **तपः** यथेष्टभोजनाभ्यङ्गादिराहित्यम् । **तितिक्षां** सहिष्णुतां, **आर्जवं** सतां बुद्ध्याऽनुसरणम्, स्वस्य पूजोत्कर्षानपेक्षत्वं वा, हिंसा= प्राणिदुःखकरव्यापारः तद्राहित्यम्, **द्वन्द्वसंज्ञयोः** शीतोष्णयोः सुखदुःखयोः प्राप्तयोरपि **समत्वं** तत्प्राप्तविकाराभावः, धैर्येण स्थगनादिना अभ्यसेत् ॥ २५ ॥

**सर्वत्रात्मेश्वरान्वीक्षां कैवल्यमनिकेतनम् ।**
**विविक्तं चीरवसनं सन्तोषं येन केन चित् ॥ २६ ॥**

**सर्वत्र** वस्तुषु विद्यमानस्य आत्मनः= अन्तर्यामिणः ईश्वरत्वान्वीक्षाम्, गजे मशके उपस्थितस्य आत्मनः समबलादित्त्वज्ञानं न विस्मरेदित्यर्थः । **कैवल्यं** द्रव्यादि-परिग्रहराहित्यम्, **अनिकेतनं** = गृहादिपरित्यागः, विविक्तत्वं= जनसङ्कुलप्रदेशपरित्यागं

अभ्यसेत्, **चीरवसनं** अजिनादिधारणं, **येन केनचित्** कारणेन सन्तोषः, नतु मृष्टान्न-दुकूलादिस्वीकारः कर्तव्यः ॥ २६ ॥

**श्रद्धां भागवते शास्त्रेऽनिन्दामन्यत्र चापि हि ।**
**मनोवाक्कायदण्डं च सत्यं शमदमावपि ॥ २७ ॥**

**श्रद्धाम्** 'अत्रोक्तमस्ति', 'ममात्रास्ति प्रयोजन'मिति बुद्धिद्वयं श्रद्धा, सा **भागवते शास्त्रे** कर्तव्या । **अन्यत्र** ज्योतिश्शास्त्रादौ अनिन्दा= 'अत्रोक्तमस्ति' इति बुद्धिमात्रं कर्तव्यमित्यर्थः । अन्यत्र दुःश्शास्त्रनिन्दैव कर्तव्येति भावः । मनोवाक्कायानां दण्डम् अभ्यसेत् । मनोदण्डः= विषयेभ्यो निवर्तनं, वागृदण्डः= असम्भाषणम्, कायदण्डः= प्राणायामः, कुम्भकेन आसनान्यभ्यसेत् । **सत्यं** यथार्थवचनं शमः= परमात्मासक्तिः, दमः= इन्द्रियाणां विषयेभ्य आकर्षणम् ॥ २७ ॥

**श्रवणं कीर्तनं ध्यानं हरेरद्भुतकर्मणः ।**
**जन्मकर्मगुणानां च तदर्थेऽखिलचेष्टितम् ॥ २८ ॥**

**हरेः** जन्मानि= अवताराः, **कर्माणि**, गुणाः= बलादयः तेषां **श्रवणं कीर्तनं ध्यानं** च निरन्तरं कुर्यादित्यर्थः । **तदर्थे** श्रवणादिसिद्ध्यर्थमेव **अखिलचेष्टितं** स्वस्य सर्वव्यापारो भवेत् । ईश्वरसेवाव्यतिरिक्तं कार्यमुद्दिश्य किमपि व्यापारं न कुर्यादिति भावः ॥ २८ ॥

**इष्टं दत्तं तपो जप्तं पूर्तं यच्चात्मनः प्रियम् ।**
**दारान् सुतान् प्रियान् प्राणान् परस्मै सन्निवेदयेत् ॥ २९ ॥**

**इष्टं** यज्ञं, **दत्तं** कन्यादानादि, **तपः** विष्णुपञ्चकादि, **जप्तं** गायत्र्याः सहस्रावृत्तिः, **पूर्तं** तटाकादि, **आत्मनः प्रियं** सुरसाम्रफलादि **सन्निवेदयेत्,** 'परमात्मकर्तृकाः परमात्म-स्वामिकाः दारादयः' इति दृढबुद्धिं कुर्यादित्यर्थः । सन्न्यासाश्रमस्वीकारसमये सर्वं समर्पयेदिति वा ॥ २९ ॥

'सङ्गञ्च साधुषु' इति सामान्येनोक्तं विशेषत आह- **एवं कृष्णेति ।**

**एवं कृष्णात्मनाथेषु मनुष्येषु च सौहृदम् ।**
**परिचर्यां चोभयत्र महत्सु नृषु साधुषु ॥ ३० ॥**

कृष्णः= पूर्णसुखः आत्मा= अन्तर्यामी नाथः= स्वामी च येषां तेषु **मनुष्येष्वपि सौहृदं शिक्षेत्** किमु **महत्सु** देवादिषु च भक्तिं शिक्षेत् इति । उभयत्र भगवति भागवतेषु **परिचर्यां नृषु साधुषु** दयां शिक्षेत् ॥ ३० ॥

यदा भक्तानां भक्तैः सह संस्थितिः तदा भक्त्यतिशयप्राप्य व्यापारमाह- **परस्परेति ।**

**परस्परानुकथनं पावनं भगवद्यशः ।**
**मिथो रतिर्मिथस्तुष्टिर्निवृत्तिर्मिथ आत्मनः ॥ ३१ ॥**

यत् **पावनं** सर्वपापनिवर्तकं भगवतः यशः तस्य परस्परम् अनुकथनम् । भगवद्यश उद्दिश्य परस्परानुकथनं इति वा । तेन **मिथः** अन्योन्येन **रतिः** आनन्दोद्रेकः **मिथः** अन्योन्येन **तुष्टिः** मनस्सन्तोषः तेन **आत्मनः** मनसः **निवृत्तिः** भगवदन्यस्य विषयस्यास्मरणम् ॥ ३१ ॥

**स्मरन्तः स्मारयन्तश्च मिथोऽघौघहरं हरिम् ।**

**भक्त्या सञ्जातया भक्त्या बिभ्रत्युत्पुळकां तनुम् ॥ ३२ ॥**

**स्मरन्तः** गुणविशेषैः विशिष्टं श्रीहरिं स्मरन्त इत्यर्थः । **भक्त्या** तेन **सञ्जातया** सम्यगभिव्यक्तया उद्गतः पुळकः यस्याः सा तां रोमहर्षोपेतां तनुं बिभ्रति ॥ ३२ ॥

**क्वचिद् रुदन्त्यच्युतचिन्तया क्वचित् हसन्ति नन्दन्ति वदन्त्यलौकिकान् ।**

**नृत्यन्ति गायन्त्यनुशीलयन्त्यजं भवन्ति तूष्णीं परमेत्य निर्वृताः ॥ ३३ ॥**

**वदन्ति** 'त्वां दर्शय' इति वदन्ति, एवम् अलौकिकाः सन्तः लोकमविगणय्य स्थिताः इत्थं **अजं** परमात्मानं **अनुशीलयन्ति** पुनः स्वव्यापारविषयं कुर्वन्तीत्यर्थः । परमात्मविषयव्यापारव्यतिरिक्तव्यापारान् न कुर्वन्तीति भावः । क्वचित् **परम् एत्य** ध्यानेन प्राप्य **निर्वृताः** आनन्दसंपन्नाः **तूष्णीं** नृत्यगानादि परित्यज्येत्यर्थः । **भजन्ति** दानरूपसेवां कुर्वन्ति ॥ ३३ ॥

**इति भागवतान् धर्मान् शिक्षन् भक्त्या तदुत्थया ।**

**नारायणपरो मायाम् अञ्जस्तरति दुस्तराम् ॥ ३४ ॥**

**भक्त्या शिक्षन्** अलसतां विना सदा स्वबुद्ध्या अभ्यसन् इत्यर्थः, न तु प्रयोजनमभिसन्धायेति भावः । **दुस्तरां** श्रीनारायणानुग्रहरहितैः परिहर्तुमशक्यां **मायाम्** उभयविधां बन्धकशक्तिं नारायणासक्तः **अञ्जः तरति** ॥ ३४ ॥

**राजोवाच-**

**नारायणाभिधानस्य ब्रह्मणः परमात्मनः ।**

**निष्ठामर्हथ नो वक्तुं यूयं हि ब्रह्मवित्तमाः ॥ ३५ ॥**

नारायणनाम्ना अभिधानं= व्यवहारो यस्य, सर्वाभीष्टसिद्धये नारायणनाम्ना भक्तै-र्व्यवह्रियमाणस्येति भावः । **ब्रह्मणः** सर्वकल्याणगुणरूपस्य परमस्य= स्वतन्त्रस्य आत्मनः= अदानादिकर्तुः **परमात्मनः** परमानन्दानुभवस्य **निष्ठां** गुणोत्कर्षं **नः** अस्मान् प्रति **वक्तुं यूयमर्हथ** समर्था इत्यर्थः । एतदेवाह- **यूयं ब्रह्मवित्तमा हि,** तस्मात् वदन्तु इति भावः ॥ ३५ ॥

जगज्जन्मादिकारणत्वं जाग्रदाद्यवस्थाप्रेरकत्वं जीवतद्देहेन्द्रियान्तर्यामित्वं चेति लक्षणान्याह- **स्थित्युद्भवेति** ।

**पिप्पलायन उवाच-**

**स्थित्युद्भवप्रलयहेतुरहेतुरस्य यः स्वप्नजागरसुषुप्तिषु सन् बहिश्च ।**
**देहेन्द्रियासुहृदयानि चरन्ति येन सञ्जीवितानि तदवैहि परं नरेन्द्र ॥ ३६ ॥**

न विद्यते हेतुः प्रवृत्त्यादिकारणं यस्य सः **अहेतुः,** स्वतन्त्रः सन्नित्यर्थः स्वयं प्रकृत्यादीनां व्यापारजनक इति भावः । **अस्य** विश्वस्य **यः** उद्भवस्थित्यादिहेतुः यं जागरादिषु प्रेरकत्वेन स्थूलप्रविविक्ताद्यर्थभोक्तृत्वेन च वर्तते, यः अन्त**र्बहिः** प्रलये मुक्तौ च सन् । हृद्ययनात् हृदयं जीवः, देहेन्द्रियासुहृदयशब्दैः तन्नियामकदेवताश्च ग्राह्याः, देहेन्द्रियप्राणतद्देवताः जीवः एते **येन सञ्जीवितानि** पालितानि **चरन्ति** स्वस्व-व्यापारेषु प्रवर्तकम् **तत्** विविधमूर्तिभिः विविधव्यापारकर्तृ **परं** सम्पूर्णसर्वकल्याणगुणं ब्रह्मेति **अवैहि** जानीहि ॥ ३६ ॥

ननु विश्वसृष्ट्यादिकर्ता जीवे देवादिषु वर्तते चेत् कुतो न दृश्यते ? इत्याशङ्कायाम् अव्यक्तत्वात् न ज्ञायत इत्याह- **नैनमिति** ।

**नैनं मनो विशति वागुत चक्षुरात्मा प्राणेन्द्रियाण्यपि यथाऽनलमर्चिषः स्वाः ।**
**शब्दोऽप्यबोधकनिषेधतयाऽऽत्ममूलमथोक्तमाह यदृते न निषेध्यसिद्धिः ॥ ३७ ॥**

**मनः** इन्द्रियं महेशादयः तन्नियामकदेवाश्च **एनं** देहादिगतं परमात्मानं न विशन्ति= स्वसामर्थ्यात् न विषयीकुर्वन्ति । **वाक्** इन्द्रियं तद्देवताः परमात्मानं स्वसामर्थ्यान्न विषयीकुर्वन्ति इत्यर्थः । **चक्षुः** तद्देवता सूर्यादिः न विषयीकरोति । **आत्मा** जीवः तन्नियामकः ब्रह्मापि **एनं न विशति** न जानाति । **प्राणा** वायुदेवता एनं न विशन्तीति किमु ! नन्वलौकिकस्यापि ईश्वरस्य ज्ञानं वेदलक्षणशब्देन भविष्यति इत्याशङ्क्याह- **शब्दोऽपीति ।** वेदः तद्देवता लक्ष्मी वा **एनं न विशति** स्वसामर्थ्यात् न विषयीकरोतीत्यर्थः । ननु ईश्वरस्य अव्यक्तत्वेन ज्ञानाविषयत्वे वर्णादिविधयो न स्युः इत्यत आह- **शब्दोपीति यदृते न निषेध्यसिद्धिः** इत्येतादृशार्थोक्तम् **आत्ममूलम् अबोधकनिषेधतया शब्दः आह** इति सम्बधः । **अपि** यद्यपि करणसामर्थ्येन विषयो न भवति तथापि ईश्वरो अघटितघटनाशक्त्या अनुग्रहेण वेदादीनां विषय इति भावः । वेदादिः ईश्वरं किं स्पष्टं वदति ? **न** इत्याह- **अबोधकेति ।** यदि स्पष्टं न वदति तदा तदर्थे अलौकिके संशयाद्यभावः कथं स्यात् ? इत्यत आह- **अर्थोक्तमिति ।** कीदृशी अर्थापत्तिः इति जिज्ञासायामाह- **यदृत** इति । ततश्च अयमर्थः **शब्दः** वेददेवता **आत्ममूलं** स्वस्य उपजीव्यं विलक्षणानन्दादिस्वरूपपरमात्मानं आह- **यदृत इति ।** विलक्षणानन्दाभावे निषेध्यस्य= 'ईशानन्दो न भवति'[1] इति निषेधवचनार्थस्य सिद्धिर्न स्यात् । धर्मिविशेषासिद्धौ तत्र तत्सापेक्षधर्मविधानासम्भवात् । तथा च तन्निषेधवचन प्रामाण्यं न स्यात् इति भावः । एवंरूपया अर्थापत्त्या तात्पर्यलिङ्गेनेति भावः । उक्तं संशयविरोधितया प्राप्तम् । बोधः= पूर्णज्ञानम् । कः= पूर्णसुखम् । ताभ्याम्

---
[1] 'ईदृशानानन्दो न भवति' इति पाठः सम्भाव्यते ।

अन्ये अबोधके जीवज्ञानानन्दादौ निषेधो यस्मिन्, तस्य भावः, निषेधता तया तन्निषेधतया तद्विलक्षणत्वेन **आह** प्रतिपादयति । ईश्वरानन्दादिगतानन्तविशेषानपि विशेषसामान्येन प्रतिपादयतीति भावः । अथवा निषेधवचनार्थविशेषणस्य जीवानन्दादेः असिद्धिः स्यात् । ततश्च विशिष्टासिद्धिः स्यादित्यर्थः । बिम्बाभावे प्रतिबिम्बजीवासिद्धिः स्यात् । अतः बिम्बसिद्धिरिति भावः ॥ ३७ ॥

सदसत्पक्षविवेकाय अन्यथाज्ञानिनां मतभेदानाह- **सत्वं रज इति ।**

**सत्त्वं रजस्तम इति त्रिवृदेकमादौ सूत्रं महानहमिति प्रवदन्ति जीवम् ।**
**ज्ञानक्रियार्थफलरूपतयोरुशक्ति ब्रह्मैव भाति सदसच्च तयोः परं यत् ॥ ३८ ॥**

केचित् 'सत्वादिकं ब्रह्म' इति वदन्ति, सत्वादिरूपेण ब्रह्मणः परिणाममङ्गीकृत्य वा सत्वादिरूपं ब्रह्मेति वदन्ति । केचित् **आदौ** सत्वोत्पत्तेः पूर्वं स्थितं **त्रिवृत्** गुणत्रयात्मकम् **एकं** प्रधानं ब्रह्मशब्दार्थ इति । चेतनस्य कारणत्वादिमतमाह- **सूत्रमिति । सूत्रं** वायुः, **महान्** ब्रह्म, **अहम्** अहङ्कारो रुद्रः ब्रह्मेति वदन्ति । जीवव्यतिरिक्तं चैतन्यं नास्तीति वादिनः **जीवं ब्रह्मे** ति प्रवदन्ति । ज्ञानं= ज्ञानेन्द्रियं क्रिया= कर्मेन्द्रियं अर्थः= शब्दस्पर्शादिः आदातव्यगन्तव्यादयश्च, फले= सुखदुःखे, एतेषां रूपतया= तादात्म्येन ब्रह्म भाति इति च वदन्ति । नन्वेवं ज्ञाने किन्निमित्तम् इति जिज्ञासायामाह- **उरुशक्तीति ।** तत्तद्वस्तुसदृशगुणोपेतत्वात् ब्रह्म तत्तदात्मतया प्रतिभातीति भावः । एवं **सदसत्** सर्वकारणकार्यात्मकं ब्रह्मेति वदन्ति । ननु एतेषां मतानां कुतः अनुपादेयत्वम् इति जिज्ञासायामाह- **ब्रह्मेति ।** सम्पूर्णसर्वकल्याणगुण-सम्पन्न इति यत् निमित्तं तेन **तयोः** कार्यकारणरूपेभ्यः उक्तजडचेतनेभ्यः इत्यर्थः । **परं** भिन्नम् । अतः उक्तमतानि भ्रान्तिकल्पितानीति भावः ॥ ३८ ॥

चेतनाचेतनेभ्यः भेदं ब्रह्मणि स्पष्टमुपपादयति **नासाविति** । अथवा देहादिषु स्थितस्य अन्तर्यामिणः जननादिविकाराः कथं न सन्ति इति जिज्ञासायामाह- **नासाविति** ।

**नासौ जजान न मरिष्यति नैधतेऽसौ न क्षीयते स च न विध्यति चारिणाऽपि । सर्वत्र शश्वदनपाय्युपलब्धिमात्रं प्राणो यथेन्द्रियबलेन विकल्पितं सत् ॥ ३९ ॥**

**सर्वत्र** देहादिषु विद्यामानः **नैधते, न क्षीयते** अवयवोपचयापचयप्राप्तविकारोपेतो न भवति । अवतारेषु विध्दत्वादिना प्रतीयमनोऽपि **न विध्यति** इषुभिः विद्धो न भवति । सर्वदोषराहित्ये कारणमाह- **उपलब्धीति** । शश्वत्= सदा विद्यमाना अनपायिनी = सम्पूर्णा उपलब्धिरेव उपलब्धिमात्रम्, ज्ञानमात्रस्वरूपम् न तु जडविकारोपेतम् इति मात्रशब्दार्थः । सर्वज्ञस्य अज्ञानाद्यसम्भवात् तत्प्राप्तचेतनविकारोऽपि नास्तीति भावः । ननु विविधेन्द्रियेषु स्थितस्यापि ब्रह्मण एकत्वात् 'दृष्टिदः', 'श्रुतिदः' इत्यादिव्यवस्थितव्यवहारभेदः कुतः ? इत्यत आह- **विकल्पितमिति** । **सत्** ब्रह्म **इन्द्रियबलेन** इन्द्रियाणां बलं शक्तयः तद्भेदेन **विकल्पितं** व्यवस्थितव्यवहारविषयः । अत्रानुरूपं निदर्शनं सम्भावकमाह- **प्राण इति** । यथा प्राणः चक्षुषि विद्यमानः दृष्टिद इति व्यपदिश्यते, न तु श्रुतिद इति, एवं श्रोत्रे विद्यमानः श्रुतिद इति, तत्र न दृष्टिद इति । एवं ब्रह्मण्यपि व्यवस्थया व्यवहार इत्यर्थः ॥ ३९ ॥

ननु जीवस्य अन्तर्यामिपरमात्मनियम्यत्वमुच्यते । तत्कथं युज्यते ? जीवस्य प्राणनियम्यत्वादित्याशङ्कायां जीवनियामकप्राणस्यापि परमात्मनियम्यत्वमस्तीत्याह- **अण्डेष्विति** ।

**अण्डेषु पेशिषु तरुष्ववनिस्थितेषु प्राणेन जीव उपधावति तत्र तत्र ।**
**छन्ने मतीन्द्रियगणेऽहमि[1] च प्रसुप्ते कूटस्थ आस यमृते तदनुस्मृतिर्न ॥ ४० ॥**

पेशः= जरायुः तत्संवृत्तेषु **पेशिषु** एव **अवनिस्थितेष** स्वेदजेषु **तत्रतत्र** नानाकर्मप्राप्तनानास्थावरजङ्गमेषु चिद्रूपपरमात्मसन्निहितेन **प्राणेन** नीतः **जीवः** धावति= देहात् देहान्तरं गच्छति । सुप्त्यादावपि प्राणः परमात्मानम् इत्याह- **च्छन्न** इति । **मतिः** बुद्धिकरणम्, इन्द्रियाणि च तेषां गणे= समूहे, 'गुणे' इति पाठे गुणः= इन्द्रियाणां ज्ञानलक्षणः व्यापारः तस्मिन् **च्छन्ने** सुषुप्त्या प्रतिबद्धे इत्यर्थः । **अहमि** देहाभिमाने **प्रसुप्ते** तिरोहिते इन्द्रियदेवानां ईषत् स्वापोऽस्तीति भावः । प्राणेन नीतः जीवः कूटस्थे कूटं नित्याकाशं तद्वत् स्थिते, तस्य तत्तदवस्थयांप्राप्तविकाररहिते परमात्मनि, **आस** तदधीनत्वेन तिष्ठति प्राणादिसर्वचेतनानां ज्ञानादिप्रदः परमात्मा अतः सर्वोत्कृष्ट इत्याशयेन आह- **यमृत** इति । **यम्** अवस्था प्रवर्तकं परमात्मानं ऋते तस्याः= सुप्त्यवस्थायाः अनुस्मृतिः= 'सुखमस्वाप्सम्' इति स्मरणं **न** भवति । तादृशपूर्वानुभवस्यैव अभावादिति भावः ॥ ४० ॥

ननु अनुग्रहणे परोक्षज्ञानविषयस्य अपरोक्षज्ञानं कथं स्यात् इति जिज्ञासायां निरन्तरध्यानसहितभक्तिविशेषप्राप्तानुग्रहविशेषेण अपरोक्षमित्याशयेनाह- **यर्हीति** ।

**यर्ह्यब्जनाभचरणेषणयोरुभक्त्या चेतो मलानि विधमेद् गुणकर्मजानि ।**
**तस्मिन् विशुद्ध उपलभ्यत आत्मतत्वं साक्षाद् यथाऽमलदृशौ सवितृप्रकाशः ॥**
**॥ ४१ ॥**

---

[1] 'मतीन्द्रियगुणेऽहमि' इति पाठान्तरम् ।

**अब्जनाभचरणेषणया** श्रीचरणसेवासक्त्या, वित्तेषणादिकं परित्यज्य प्राप्तयेति भावः । उर्व्या= निरन्तरध्यानेन प्रवृद्धया **भक्त्या चेतः मलानि** तमोगुणकार्याणि **विधमेत्** परित्यजेत् । कर्मजानि विषयस्मरणकारणानि च परित्यजेत् । तदा **विशुद्धे तस्मिन्** चेतसि सति उपासकेन **आत्मतत्त्वं** अन्तर्यामी **साक्षादुपलभ्यते । अमलदृशा** सत्याम् उपासकेन **सवितृप्रकाशो** यथा उपलभ्यते तथा सूर्यमण्डलवत् केषाञ्चित् परमात्मदर्शनमिति भावः ॥

कर्मयोगं श्लाघते- **येनेति ।**

**राजोवाच-**

**कर्मयोगं वदत नः पुरुषो येन संस्कृतः ।**
**विधूयेहाशु कर्माणि नैष्कर्म्यं विन्दते परम् ॥ ४२ ॥**

**एतत्प्रश्नमृषीन् पूर्वमपृच्छं पितुरन्तिके ।**
**नाब्रुवन् ब्रह्मणः पुत्रास्तत्र कारणमुच्यताम् ॥ ४३ ॥**

**येन** विष्णुप्रीतिमुद्दिश्य क्रियमाणेन फलाभिसन्धानं विना क्रियमाणेन इति भावः । कर्मलक्षणयोगेन उपायेन **संस्कृतः** विषयकामनाराहित्यलक्षणातिशयोपेतः, ईश्वरप्रीतिसम्पन्नो वा । **इह** लोके प्रवर्तमानानि **कर्माणि** बन्धकानीति भावः । **विधूय नैष्कर्म्यम्** अपवर्गसाधनं ज्ञानम् इत्यर्थः । **विन्दते** श्रवणावृत्तिपुरस्सरमिति भावः । तेन ज्ञानेन **परं** परमात्मानं **विन्दते** प्राप्नोति । **तं** तादृशं **कर्मयोगं नः वदत । पितुः अन्तिके** ब्रह्मणः समीपे **स्थितान् ऋषीन्** सनकादीन् प्रति अहम् **अपृच्छं, ब्रह्मणः पुत्राः** सनकादयः परिहारं **नाब्रुवन्** ॥ ४३ ॥

सनकादिभिः परिहारानुक्तौ कारणमाह- **कर्माकर्मेति ।**

**आविर्होत्र उवाच-**

**कर्माकर्मविकर्मेति वेदवादो न लौकिकः ।**

**वेदस्य चेश्वरात्मत्वात् तत्र मुह्यन्ति सूरयः ॥ ४४ ॥**

**कर्म** धर्मः सर्वजनसाधारणः । **अकर्म** अधर्मः । अकरणं वा । न करोमीति सङ्कल्पो वा । **विकर्म** विविधो धर्मः वर्णाश्रमभेदानुसारी । कर्मान्यद् विकर्म इति वा । इति वेदे वादः व्यवहारः । **न लौकिकः** एवं कर्मविभागः लोकप्राप्तस्मृत्यादिसिद्धो न । अतः **सूरयः** स्वतन्त्रपरतन्त्रतत्वज्ञाः अपि **मुह्यन्ति** कर्मवैलक्षण्यज्ञाने प्रक्षिप्ता भवन्ति । ननु वेदेन तद्भेदज्ञानं भविष्यति इत्यशङ्क्याह- **वेदस्येति** । कर्मज्ञानजनकत्वेन प्रवृत्तस्य इति भावः । **ईश्वरात्मत्वात्** ईश्वरविषयत्वात् ईश्वरप्रीत्यनुसारेण कर्माकर्म-विभागज्ञानजनकत्वादिति भावः । **तत्र** कर्मणां ईश्वरसम्मतत्वे असम्मतत्वे च ज्ञातव्ये **मुह्यन्ति सूरयः** चित्तक्षोभवन्तो भवन्तीति ज्ञापनाय सनकादयः सर्वज्ञा अपि परिहारं नोचुरिति भावः ॥ ४४ ॥

ननु 'तरति ब्रह्महत्यां योऽश्वमेधेन यजते', 'स्वाराज्यकामो राजसूयेन यजेत' इत्यादिवचनैः अनिष्टनिवृत्त्यर्थं च साक्षाद् धर्मविधानात् कथं ईश्वरप्रीत्यनुसारेण धर्मस्योपादेयत्वम् इत्याशङ्क्याह- **परोक्षवाद** इति ।

**परोक्षवादो वेदोऽयं बालानामनुशासनम् ।**

**कर्ममोक्षाय कर्माणि विधत्ते ह्यगदं यथा ॥ ४५ ॥**

**अयं** ईश्वरानुग्रहमुद्दिश्य धर्मबोधकः **वेदः बालानां** मन्दान् प्रति **परोक्षवादः** ईश्वरः परोक्षः यथा भवति तथा वदति । ईश्वरमप्रकाश्य फलादिकं वदतीत्यर्थः । **कर्ममोक्षाय कर्माणि च विधत्ते** । न विद्यते गदं यस्मात् तत् **अगदं** औषधं व्याधिशान्तये

यथा विधीयते, तथा ज्ञानिनां तु ईश्वरप्रसादादिविशेषितमेव धर्मादितया प्रतिपादयतीति भावः ॥ ४५ ॥

आपातप्रतिपत्त्या धर्मतया ज्ञातस्य आचरणबाधकञ्चाह- **नाचरेदिति ।**

**नाऽऽचरेद् यस्तु वेदोक्तं स्वयमज्ञोऽजितेन्द्रियः ।**
**विकर्मणा ह्यधर्मेण मृत्योर्मृत्युमुपैति सः ॥ ४६ ॥**

**अज्ञः** सर्ववेदानां विष्णुपरत्वज्ञानरहितः सन् **यः ना** पुरुषः कर्माचरणे पौरुषवान् इति भावः । **अजितेन्द्रियः** सन् ऐश्वर्यादिकामवान् इति भावः । इदं वेदोक्तम् इति मन्वानः कर्म **आचरेत्** फलमुद्दिश्य कुर्यात् स **विकर्मणा** ज्ञानिसम्मतकर्मविलक्षणेन **अधर्मेण** हिंसारूपेण **मृत्योः** सकाशात् **मृत्युं** दुःखम् **उपैति** ॥ ४६ ॥

ज्ञानिसम्मतं कर्माह- **वेदोक्तमेवेति ।**

**वेदोक्तमेव कुर्वाणो निःसङ्गोऽर्पितमीश्वरे ।**
**नैर्ष्कर्म्यां लभते सिद्धिं रोचनार्थं फलश्रुतिः ॥ ४७ ॥**

निस्सङ्गः सन् फलाभिसन्धानरहितः सन् अत एव मनोदोषरहितः ज्ञान्येव **वेदोक्तं** कर्म **ईश्वरे अर्पितं** यथा तथा **कुर्वणः नैष्कर्म्याम्** अपवर्गं एतल्लक्षणं **सिद्धिं लभते । नैष्कर्म्यं** ज्ञानमिति वा । कर्मफलं परित्याज्यं चेत् श्रुतिः किमर्थं तद्वक्ति ? इति जिज्ञासायामाह- **फलश्रुतिः** फलवचनं **रोचनार्थम्** अलसानां कर्माचरणे रुच्युत्पादनार्थम्, न तु फलस्योत्पादनार्थम् इत्यर्थः ॥ ४७ ॥

कर्मयोगेषु उत्तमं कर्मयोगमाह- **य आश्वित<br>ि ।**

**य आशु हृदयग्रन्थिं निर्जिहीर्षुरथात्मनः ।**
**विधिनोपचरेद् देवं तन्त्रोक्तेन च केशवम् ॥ ४८ ॥**

**यः** परस्य **आत्मनः** प्राकृतात्मनः कारणात् विलक्षणस्य स्वस्य **हृदयग्रन्थिं** प्राकृतात्मनः करणलक्षणं बन्धं परमात्मनः सकाशात् **निर्जिहीर्षुः** परिहर्तुमिच्छुः **देवं** सर्वतः प्रकाशमानं, कः= ब्रह्मा ईशः= महेशः तौ त्राति रक्षतीति **केशवः** तं सर्वेश्वरं **तन्त्रं** पञ्चरात्रादि तदुक्तेन **विधिना** पूजाविधानेन **उपचरेत्** पूजयेत् ॥ ४८ ॥

पूजोपयुक्तमन्त्रद्रव्यपूजाक्रमज्ञानं प्रथमं सम्पादनीयमित्याह- **लब्ध्वेति ।**

**लब्ध्वा चाव्यग्रमाचार्यं तेन सन्दर्शितागमः ।**
**महापुरुषमभ्यर्चेन्मूर्त्याऽभिमतयाऽऽत्मनः ॥ ४९ ॥**

**अव्यग्रं** न विद्यते व्यग्रता यस्मिन् कर्मणि तद्यथा भवति तथा, त्वरां विनेत्यर्थः, आचार्यस्य ज्ञानाचारान् परीक्ष्येति भावः । **आचार्यम्** उपदेष्टारं **लब्ध्वा** प्राप्य **सन्दर्शिताः आगमाः** पूजाविधयो यस्य सः **आत्मनः** स्वस्य **अभिमतया मूर्त्या** श्रीकृष्णनरसिंहाद्यर्चायामित्यर्थः । **महापुरुषं** पूर्णसर्वगुणं **अभ्यर्चेत्** ॥ ४९ ॥

अर्चकस्य अपेक्षितगुणानाह- **शुचिरिति ।**

**शुचिः सुमुख**[1] **आसीनः प्राणसंयमनादिभिः ।**
**पिण्डं संशोध्य**[2] **सन्यासकृतरक्षोऽर्चयेद् हरिम् ॥ ५० ॥**

**पिण्डं** देहं **संशोद्य** मलादिदोषापनयनं कृत्वा **शुचिः** मृज्जलादिना सम्यक् शौचेन स्नानेन शुचिः **सुमुखः** प्रसन्नमुखः विषयचिन्ताराहित्यात् परमात्मगुणानुसन्धानाच्चेति भावः । **आसीनः** प्राणसंयमनं= कुम्भकरेचकपूरकैः **पिण्डं** देहं **संशोध्य** दोषरहितं

[1] 'सम्मुख' इति पाठान्तरम् । [2] 'विशोध्य' इति पाठान्तरम् ।

कृत्वा, न्यासः= मातृकान्यासादयः तैः सहितः **सन्यासः** दिग्बन्धादिः तेन **कृतरक्षः** सम्पन्नपूजारक्षावान् स्वरक्षावान् वा ॥ ५० ॥

अधिकारिभेदमवलम्ब्याह- **अर्चादाविति ।**

**अर्चादौ हृदये वाऽपि यथालब्धोपचारकैः ।**
**द्रव्यक्षित्यात्मलिङ्गानि निष्पाद्य प्रोक्ष्य चासनम् ॥ ५१ ॥**

**पाद्यादींश्चोपकल्प्याथ[1] सन्निधाप्य समाहितः ।**
**हृदयादिकृतन्यासो मूलमन्त्रेण चार्चयेत् ॥ ५२ ॥**

**अचा** प्रतिमा **हृदय** वाऽपि हरिं अर्चयन् यथा= तत्तद्देशकालद्रव्यानुसारेण लब्धैः= प्राप्तैः उपचारैः पूजासाधनैः । प्रथमम् **आसनं** सुवर्णसिंहासनादि **निष्पाद्य** सम्पाद्य **प्रोक्ष्य** मन्त्रेणापि शुद्धं कृत्वा **हृदयादिभिः** कृद्धोल्कादिभिः कृतन्यासः सन् । **अथ** सिंहासने अर्चां **सन्निधाप्य** अर्चायां स्वान्तर्यामिकलां सन्निधाप्य **अथ समाहितः ।** अधिकारिभेदमवलम्ब्याह- **द्रव्येति । द्रव्यलिङ्गं** सुवर्णप्रतिमादि, **क्षितिलिङ्गं** स्थण्डिलम्, **आत्मलिङ्गं** वासनामूर्तिः एतानि श्रीहरिसन्निहितानि उद्दिश्य पाद्यादीन् प्रकल्प्य, पृथक् पात्रेषु सम्पाद्य पुरुषसूक्तादिभिः मूलमन्त्रेण अपि **अर्चयेत् ॥** ५२ ॥

प्रथमकर्तव्यां पूजामाह- **पाद्येत्यादि ।**

**साङ्गोपाङ्गां सपार्षदां तां तां मूर्तिं स्वमन्त्रतः ।**
**पाद्यार्घ्याचमनीयाद्यैः स्नानवासोविभूषणैः[2] ॥ ५३ ॥**
**साङ्गं सम्पूज्य विधिवत् स्तवैःस्तुत्वा नमेद् हरिम् ॥ ५४ ॥**

---

[1] 'पाद्यादीनुपकल्प्याथ' इति पाठान्तरम् । [2] 'स्नानवासोपहारकैः' इति पाठेन भाव्यम् ।

उपहारकैः नैवेद्यविशेषैः अङ्गोपाङ्गैः सहितां पीठदेवतादिभिः आवरणदेवतादिभिः सहितां **सपार्षदां** जयविजयादिसहितां **तां तां** स्वाभिलषितां **मूर्तिं स्वमन्त्रतः** स्वपूजाविषय-मूर्तिवाचकमन्त्रैश्च **साङ्गम्** उक्ताङ्गवैकल्यं विना **सम्पूज्य नमेत्** ॥ ५४ ॥

पूजादिकाले एवं बुद्ध्या भवितव्यमित्याह- **आत्मानमिति** ।

**आत्मानं तन्मयं ध्यायन् मूर्तिं सम्पूजयेद् हरेः ।**
**शेषमाधाय शिरसि स्वधाम्न्युद्वास्य सत्कृतम् ॥ ५५ ॥**

**एवमग्न्यर्कतोयादावर्चयन् हृदये च यः ।**
**यज्ञेश्वरं स्वमात्मानमचिरान्मुच्यते हि सः ॥ ५६ ॥**

**॥ इति श्रीमद्भागवते एकादशस्कन्धे तृतीयोऽध्यायः ॥**

**तन्मयं** ईश्वरप्रधानकं आत्मानं ईश्वरभृत्योहमिति ध्यायन् पूजयेदित्यर्थः । **सत्कृतं** पूजितं **स्वधाम्नि** हृदये **उद्वास्य** निधाय्प पूजार्थं अर्चायां आवाहितमिति भावः । **शेषं** पादोदकनैवेद्यादि **शिरसि आधाय** पादोदकादिप्रतिपत्तिं कुर्यादित्यर्थः । स्वम् आदत्त इति वा स्वम् आप्नोति व्याप्नोति इति वा स्वमात्मानं अर्चयेत् । **मुच्यते** बन्धकर्मभिः मुच्यते ॥ ५६ ॥

॥ इति श्रीयादवेन्द्रयतिविरचिते एकादशस्कन्धव्याख्याने तृतीयोऽध्यायः ॥

# 4 | चतुर्थोऽध्यायः

**राजोवाच-**

**यानि यानीह कर्माणि यैर्यैः स्वच्छन्दजन्मभिः ।**

**चक्रे करोति कर्ता वा हरिस्तानि ब्रुवन्तु नः ॥ १ ॥**

**स्वच्छन्दः** स्वेच्छा तेन प्राप्तः । **जन्मभिः** प्रादुर्भावैः **कर्ता** करिष्यति ॥ १ ॥

तु अनन्तगुणानां प्रत्येकं अनन्तगुणवत्वाद् एकस्य वा कार्त्स्न्येन अनेकस्याऽपि (वक्तुं)सामर्थ्याभावात् गुणैकदेशान् वदामि इति भावेनाह- **यो वा अनन्तस्येति ॥**

**द्रुमिल उवाच-**

**यो वा अनन्तस्य गुणाननन्ताननुक्रमिष्येत् स तु बालबुद्धिः ।**

**रजांसि भूमेर्गणयेत् कथञ्चित् कालेन नैवाखिलसत्वधाम्नः ॥ २ ॥**

**अनन्तस्य** प्रत्येकं पूर्णगुणसम्पन्नस्य **अनन्तगुणान् अनुक्रमिष्येत्** अयमस्य गुण अयमस्य गुण इति क्रमेण वक्तुमिच्छेदित्यर्थः । अनुक्रमिष्येदिति वैदिकः शब्दः । **बालबुद्धिः** बालवदर्थविमर्शज्ञानरहितः । परमात्मगुणानन्त्यं निरतिशयानन्त्यमिति ज्ञापनायाह- **रजांसीति ।** कश्चित् बहुकालेन **कथञ्चित्** तपःसामर्थ्येन **गणयेत्** सातिशयं तानि वा जानीयादित्यर्थः गणयेच्चेदपीति वा । अखिलानां सत्वानां= चेतनानां धाम्नः= आश्रयस्य गुणान् **कथञ्चित्** तपस्सामार्थ्येन वा **नैव गणयेत्** गणनाभावादिति भावः ॥ २ ॥

**भूतैर्यदा पञ्चभिरात्मसृष्टैः पुरं विराजं विरचय्य तस्मिन् ।**
**स्वांशेन विष्टः पुरुषाभिधानमवाप नारायण आदिदेवः ॥ ३ ॥**

आत्मनः पुरुषमूर्त्या सृष्टैः= गुणमहदहङ्कारभेदैः **पञ्चभिः भूतैश्च विराजं** सर्वतः प्रकाशमानं ब्रह्माण्डपुरं सर्वदेवाश्रयं **विरचय्य** सृष्ट्वा **तस्मिन्** ब्रह्माण्डे अन्तःप्रविष्टः **पुरुषाभिधानमवाप** । पुनः पुरुषो बभूवेत्यर्थः ॥ ३ ॥

परमात्मनः पुरुषस्य रूपेण देवादिनामुपकारमाह- **यत्काय** इति ।

**यत्काय एष भुवनत्रयसन्निवेशो यस्येन्द्रियैस्तनुभृतामुभयेन्द्रियाणि ।**
**ज्ञानांशकेन विशतो बलमोज ईहा सत्त्वादिभिः स्थितिलयोद्भव आदिकर्ता ॥ ४ ॥**

**यत्काये** ब्रह्मान्तर्गतपुरुषरूप एषः सर्वचेतनाश्रयः भुवनत्रयस्य= चतुर्दशभुवनानां सन्निवेशः= समुदायः वर्तते । सन्निवेशोऽवस्थानमिति वा । **यस्य** तृतीयपुरुषमूर्तेः विराण्मूर्तेः वा इन्द्रियशक्तिभिः **तनुभृतां** देवादीनां उभयानि= ज्ञानेन्द्रियकर्मेन्द्रियाणि स्वस्वव्यापारेषु प्रवर्तन्ते । **ज्ञानांशकेन** विशता, ज्ञानप्रदानार्थमिति भावः । अन्तर्यामिणा देवादीनां ज्ञानं तथा बलाद्यंशैः विशता बलदिकं भवति । **ओजः** अभिभव शक्तिः । **ईहा** इच्छा व्यापारो वा । विष्णुमूर्त्या सत्वेन स्थितिकर्ता । रजसा विषयरागकर्ता । तमसा द्वेषजनकः । मनसा रुद्रजनकः । एवं सत्वादिभिः स्थितिलयोद्भवानां **आदिकर्ता** प्रथमं कर्ता । आदौ महदादिकर्ता इति वा ॥ ४ ॥

चतुर्मुखरुद्रयोः स्थित्वा सृष्टिलयावयं करोतीत्याह- **आदाविति** ।

**आदावभूच्छतधृती रजसाऽस्य सर्गे विष्णुः स्थितौ क्रतुपतिर्द्विजधर्मसेतुः ।**
**रुद्रोऽप्ययाय तमसा पुरुषः स आद्य इत्युद्भवस्थितिलयाः सततं प्रजासु ॥ ५ ॥**

**आदौ** सृष्टेः पूर्वम् । पाद्मसृष्टेरादौ वा । **अस्य** देवतादेः लोकसमुदायस्य वा सृष्ट्यर्थं **रजसा शतधृतिः** शतानन्दः महत्तत्वं चतुर्मुखो वा **अभूत् । द्विजानां धर्माणां सेतुः** आश्रयः **क्रतुपतिः विष्णुः** स्थित्यर्थम् अभूत् । **तमसा रुद्रः अप्ययाय** नाशाय अभूत । उक्तञ्च 'अनेन हि सर्वगतत्वमायामयशब्दादिभ्यः'इति । उक्तरीत्या **सततं** साक्षात् अन्याधिष्ठानेन वा **प्रजासु उद्भवस्थितिलयाः** येन भवन्ति **स आद्यः** ब्रह्मरुद्राद्यपेक्षया आदौ विद्यमान इति ज्ञेय इत्यर्थः ॥ ५ ॥

श्रीहरेः अवतारान्तरमाह- **धर्मस्येति ।**

**धर्मस्य दक्षदुहितर्यजनि स्वमूर्त्या नारायणो नरसखः स्वतपःप्रभावः ।**
**नैष्कर्म्यलक्षणमुवाच चचार योगं योऽद्यापि चास्त ऋषिवर्यनिषेवितांघ्रिः ॥ ६ ॥**

**धर्मस्य** सकाशात् **दक्षदुहितरि स्वमूर्त्या** निजानन्दमूर्त्या, न तु कारणजन्ययेति भावः । नारायणाख्यः **अजनि ।** सः नारायणः **स्वतपःप्रभावः** स्वविषयज्ञानरूपः प्रभावरूपश्च । नारायणस्य गुणाः अपि कारणप्राप्ता न भवन्ति इति भावः । **नरसखः** नराख्यस्य सखा तत्सहितः । नरे आवेशावतारवानिति भावः । अवतारप्रयोजनमाह- **नैष्कर्म्यमिति ।** निष्कर्म अपवर्गः तत्सम्बन्धिनैष्कर्म्यम् । लक्षणं= स्वरूपम् । अपवर्ग-सम्बन्धिज्ञानस्वरूपमित्यर्थः । योगं ध्यानलक्षणोऽपायं च उवाच । **योगं** तपः **चचार** स्वजनहिताय इति भावः । **आस्ते** बदर्यामिति भावः ॥ ६ ॥

नारायणऋषेः कोपकारणे सत्यपि क्षमागुणातिशयमाह- **इन्द्रोऽपीति ।**

**इन्द्रोऽपि नाक्यसुखमेष जिघृक्षतीति कामं न्ययुङ्क्त सगणं स बदर्युपाख्यम् ।**
**गत्वाऽप्सरोगणवसन्तसुमन्दवातैः स्त्रीप्रेक्षणेषुभिरविध्यदतन्महिज्ञः ॥ ७ ॥**

इन्द्रः, **एष** नारायणऋषिः **नाक्यसुखं** स्वर्गैश्वर्यमित्यर्थः । **जिघृक्षति** स्वीकर्तु-मिच्छति इति बुद्ध्या, असुरावेशादिति भावः । **सगणं** वसन्तादिगणसहितं **कामं,** बदरीति उपाख्या= उपपदं यस्य सः तम् आश्रमं प्रति **न्ययुङ्क्त** प्रेषितवानित्यर्थः । अप्सरःप्रभृतिभिः सह स कामः गत्वा, नारायणं प्राप्य, तस्य= नारायणस्य महि= महित्वं= महिमा, तन्न जानातीति **अतन्महिज्ञः** सन् स्त्रीणां= अप्सरसां प्रेक्षणानि सविलासावलोकनानि, तान्येव इषवः= विरागधैर्यभेदकाः इति भावः । स्त्रीप्रेक्षणसहितैः अरविन्दादिस्वसायकैरिति वा नारायणऋषिं **अविध्यत्** प्रहृतवान् ॥ ७ ॥

**विज्ञाय शक्रकृतमक्रममादिदेवः प्राह प्रहस्य गतविस्मय एजमानान् ।**
**मा भैर्विभो मदन मारुत देववध्वो गृह्णीत नो बलिमशून्यमिमं कुरुध्वम् ॥ ८ ॥**

**एवं ब्रुवत्यभयदे नरदेव देवे सव्रीळनम्रशिरसः सघृणं तमूचुः ।**
**नेयं विभो त्वयि परेऽविकृतिर्विचित्रा स्वारामधीरनिकरानतपादपद्मे ॥ ९ ॥**

**अक्रमं** तपोविघातयत्नम् । **गतविस्मयः** अप्सरसां दर्शनेनेति भावः । **गतविस्मयः** तिरस्कृताहङ्कारो वा । **एजमानान्** स्वापराधप्रकृतेनेति[1] भावः । हे **मदन ! मा भैः** इति **प्राह, हे देववध्वः** सर्वे **नः** अस्माभिः क्रियमाणं **बलिम्** आतिथ्यं **गृह्णीत** स्वीकुरुत, **इमम्** आसनम् **अशून्यं** सफलं अतिथिपूजाभिरिति भावः । **कुरुध्वम् ।** हे नरदेव ! **सघृणं** दयानिधिं **तं** नारायणं प्रति **सव्रीडाः** सलज्जाः **नम्रशिरसश्च ऊचुः । हे विभो !** सर्वाभिभवसमर्थ **परे** कर्मबन्धोपेतचेतनविलक्षणे **त्वयि अविकृतिः** स्त्रीदर्शनेन मनोविकारराहित्यम् अपराधिषु कोपादिराहित्यं वा **न विचित्रं** नाश्चर्यम् ।

[1] 'स्वापराधविकृतेन' इति, 'स्वापराधकृतेन' इति वा पाठः सम्भाव्यते ।

सर्वसहनशक्तिसम्पन्नत्वात् । सर्वसेव्यो भवानिति भावेन वर्णयति **स्वाराममधीरिति** । स्वेन= स्वमहिम्ना आरामः= पूर्णसुखं यस्य सः, स्वयमेव रमतीति स्वारामः इति वा, स्वारामः= श्रीवासुदेवः, तस्मिन् ये ध्यानेन रमन्ते व्यापारान्तरस्मरणरहिता इति भावः । अपरोक्षसम्पन्नाः, तेषां निकरैः= समूहैः आनते पादपद्मे यस्य तस्मिन् **अविकृतिः न विचित्रा,** त्वदन्यत्र विचित्रेति भावः ॥ ९ ॥

अन्येषां सर्वधर्मविघ्नानां परिहर्तुः तव स्वधर्मविघ्नपरिहारकर्तृत्वं नाश्चर्यमिति वर्णयन्ति- **त्वां सुन्वतामिति** ।

**त्वां सुन्वतां सुरकृता बहवोऽन्तरायाः कस्तान् विलङ्घ्य व्रजतात् परमं पदं ते ।**
**नान्यस्य बर्हिषि बलिं ददतः स्वभागं धत्ते पदं त्वमविता यदि विघ्नमूर्ध्नि ॥ १० ॥**

**बर्हिषि** यज्ञे **त्वाम्** उद्दिश्य **सुन्वतां** सोमाभिसवनं कुर्वतां **सुरकृताः बहवः** बहुविधाः **अन्तरायाः** विघ्नाः प्रवर्तन्ते **कः** पुमान् **तान्** विघ्नान् स्वसामर्थ्येनेति भावः । **विलङ्घ्य** परिहृत्य तव पादं भजतात् ? न कोऽपि इत्यर्थः । तर्हि वैष्णवधर्म एव उपदिष्ट इत्यत आह- **नान्यस्येति । बर्हिर्षि** यज्ञेश्वरस्य तव **भागं** फलं **ददतः** पुरुषस्य **विघ्नमूर्ध्नि** यदि **त्वमविता** सर्वरक्षः सन् **पदं धत्ते** यदि विघ्नपरिहारं भवान् करोतीत्यर्थः । तर्हि **नान्यस्य बलिः** अन्यस्य सकाशात् बलिः पूजा न विघ्नवती । बलिः नान्यस्य आन्यविषयोऽपि न भवति । तस्य यजमानस्य पूजा त्वय्येव सम्पन्नेत्यर्थः ॥ १० ॥

योगिश्रेष्ठो भवानेव त्वदन्येषां विकारोपेतत्वादिति स्तुवन्ति- **क्षुत्तृडिति** ।

**क्षुत्तृट्त्रिकालगुणमारुतजैह्व्यशैश्न्यादस्मादपारजलधेरतितीर्य केचित् ।**
**क्रोधस्य यान्ति विफलस्य वशं पदे गोर्मज्जन्ति दुश्चरतपश्च वृथोत्सृजन्ति ॥ ११ ॥**

**तृट्** पिपास **त्रिकालगुणाः** उष्णवर्षशीतानि **जैह्व्यं** रसाभिलाषा **शैश्न्यं** मैथुनासक्तिः क्षुधादिरूपात् **अपारजलधेः** सकाशात् **केचित् अतितीर्य** पारं गत्वा इत्यर्थः । **विफलस्य** सुखविरोधिनः **क्रोधस्य वशं यान्ति** । ते जलनिधिं तीर्त्वापि **गोःपदे मज्जन्ति** *परिहास्या* भावन्तीत्यर्थः । स्वद्रविणमभिनाशयन्तीत्याह- **दुश्चरेति** । दुश्चरणं यस्य तद्दुश्चरं तच्च तत् तपश्च बह्वायाससम्पादितं तपः दुस्त्यजम् । केचित् विषयभोगार्थं तपोव्ययं कुर्वन्ति । ततः क्रोधजयः महानिति भावः ॥ ११ ॥

इन्द्रस्य अन्यथाज्ञानं परिहर्तुं तत्काले विचित्रवस्तुनिर्माणशक्तिं प्रकटितवान् इत्याह- **प्रगृणतामिति** ॥

**इति प्रगृणतां तेषां स्त्रियोऽत्यद्भुतदर्शनाः ।**
**दर्शयामास शुश्रूषामर्चने[1] कुर्वतीर्विभुः ॥ १२ ॥**

**अर्चने** स्वेन क्रियमाणे देवार्चनार्थं **शुश्रूषां कुर्वतीः अत्यद्भुतदर्शनाः** अत्यद्भुतं= क्वापि अप्राप्तं **दर्शनम्** अवलोकनं यासां ताः, कुत्रापि अदृष्टा इत्यर्थः । दर्शयामास ॥ १२ ॥

**ते देवानुचरा दृष्ट्वा स्त्रियः श्रीरिव रूपिणीः ।**
**गन्धेन मुमुहुस्तासां रूपौदार्यहतश्रियः ॥ १३ ॥**

**श्रीरिव** मूर्तिसम्पन्ना कान्तिरिव **रूपिणीः** बहुसौन्दर्योपेताः श्रीः इति उत्तमदृष्टन्तो वा । ताः **दृष्ट्वा** तासां **गन्धेन** च **मुमुहुः** चित्तक्षोभवन्तो जाताः । तासां रूपेण= सौन्दर्येण, औदार्येण= गाम्भीर्येण निस्पृहतया वा **हतश्रियः** तिरस्कृतस्वोत्कर्षश्रियश्च जाताः ॥ १३ ॥

---

[1] 'शुश्रूषामर्चनम्' इति पाठान्तरम् ।

**तानाह देवदेवेशः प्रणतान् प्रहसन्निव ।**

**आसामेकतरां वृङ्ग्ध्वं सुवर्णां स्वर्गभूषणाम् ॥ १४ ॥**

**तान्** देवगायकान् **प्रहसन्निव** परिहासं कुर्वन्निव । **एकतरां** एकां **वृङ्ग्ध्वं** स्वीकुरुत ॥ १४ ॥

**ओमित्यादेशमादाय नत्वा तं सुरवन्दिनः ।**

**उर्वशीमप्सरःश्रेष्ठां पुरस्कृत्य दिवं ययुः ॥ १५ ॥**

सुराणां वन्दिनः= देवगायकाः, **अप्सरःश्रेष्ठां** स्वरूपेण, **उर्वशीं पुरस्कृत्य दिवं ययुः** ॥ १५ ॥

**इन्द्रायानम्य सदसि शृण्वतां त्रिदिवौकसाम् ।**

**ऊचुर्नारायणबलं शक्रस्तत्रास विस्मितः ॥ १६ ॥**

**तत्र** देवसभामध्ये **विस्मितः आस** । श्रीनारायणबलस्य विविधविचित्रशक्तेः क्वाप्यदर्शनादिति भावः ॥ १६ ॥

पुनः अवतारान् तद्गुणांश्चाह- **हंसस्वरूपीति** ।

**हंसस्वरूप्यवददच्युत आत्मयोगं दत्तः कुमार ऋषभो भगवान् पिता नः ।**

**विष्णुः शिवाय जगतां कलयाऽवतीर्णस्तेनाहृता मधुभिदा श्रुतयो हयास्ये ॥ १७ ॥**

**अच्युतः** अवतारेष्वपि उत्कृष्टः हंसवत् स्वयं रूपोपेतः हंसावतारः, वेदान् **अवदत्** । **दत्तः आत्मयोगम्** अवदत् । कुमारावतारः श्रीहरिः सनत्कुमाराय आत्मयोगमवदत् । **नः** नवयोगिनः **पिता** ऋषभः **भगवान् नः** योगं ज्ञानलक्षणमवदत् । **यः**

**विष्णुः जगतां** साधुजनानां **शिवाय** शुभाय **कलया** ऋषभाद्यंशैः **अवतीर्णः । तेन मधुभिदा** विष्णुना **हयास्ये** अवतारे **श्रुतयः** असुरनीताः **आहृताः** आनीताः ॥ १७ ॥

ज्ञानप्रदान् अवतारान् उक्त्वा अभयप्रदावतारानाह- **गुप्ताऽप्यय** इति ।

**गुप्ताऽप्यये मनुरिळा ऋषयश्च मात्स्ये क्रोडे हतो दितिज उद्धरतोऽम्भसः क्ष्माम् ।**
**कौर्मे धृतोऽद्रिरमृथोन्मथने स्वपृष्ठे ग्राहात् प्रपन्नमिभराजममुञ्चदार्तम् ॥ १८ ॥**

**अप्यये** अवान्तरप्रळये **मात्स्ये** मत्स्यावतारे **इळा** नौरूपा भूमिः **गुप्ता,** सत्यव्रतः **मनुः** तत्र गुप्तः । **ऋषयः** सप्त ऋषयः गुप्ताः । **क्रोडे** वराहवतारे अम्भसः सकाशात् **क्ष्मां उद्धरतः** सतः क्रोधात् **दितिजः** हिरण्याक्षः **हतः ।** अमृतार्थम् उन्मथने= क्षीरसमुद्रमथने क्रियमाणे सति तत्र निम्नोऽद्रिः **कौर्मे** अवतारे पृष्ठे **धृतः ।** तापसांशो हरिः **ग्राहात्** नक्रात् **आर्तं प्रपन्नं** शरणं गतम् **इभराजम् अमुञ्चत्** दुःखपरिहारं कृतवानित्यर्थः ॥ १८ ॥

**संस्तुन्वतोऽब्धिपतिताञ्छ्रमणान् ऋषींश्च शक्रं च वृत्रवधतस्तमसि प्रविष्टम् ।**
**देवस्त्रियोऽसुरगृहे पिहिता अनाथा जघ्नेऽसुरेन्द्रमभयाय सतां नृसिंहे ॥ १९ ॥**

अब्धौ= संसारे **पतितान् श्रमणान्** सर्वविषयसंसारोपेतान् **संस्तुन्वतः** अज्ञान-मोचकत्वादिसर्वशक्त्युपेततया श्रीव्यासं प्रति स्तुतिं कुर्वतः **ऋषीन्** अज्ञानकर्मबन्धा-दमूमुचत् । व्यासावतारः सन् परिहृतवान् इत्यर्थः । नृसिंहावतारे **वृत्रवधतः** वृत्रासुर-वधसहकृते **तमसि** प्रारब्धतामसकर्मणि **प्रविष्टं** येन दुःखोपेतमित्यर्थः । **शक्रम्** अमू-मुचत् । तस्य प्रारब्धह्रासमपि कृतवान् इत्यर्थः । **अभयाय** ब्रह्मादीनाम् अभयं चकार । **असुरेन्द्रं** हिरण्यकशिपुं **जघ्ने । अनाथाः** रक्षकरहिता **देवस्त्रियः** अप्सरसश्च **असुरगृहे पिहिताः** बन्धीकृताः मोचिताः ॥ १९ ॥

**देवासुरे युधि स दैत्यपतीन् सुरार्थे हत्वाऽन्तरेषु भुवनान्यदधात् कलाभिः ।**
**भूत्वाऽथ वामन इमामहरद् बलेः क्ष्मां याञ्चाछलेन समदाददितेः सुतेभ्यः ॥ २०**

**देवासुरे** देवासुरैः क्रियमाणे **स** उपेन्द्ररूपी **दैत्यपतीन् अन्तरेषु** प्रतिमन्वन्तरं **हत्वा कलाभिः** स्वावतारैः **भुवनानि अदधात्** पालितवानित्यर्थः । अथ बलिना इन्द्रराज्यापहारासहिष्णुः वामनो भूत्वा **बलेः** सकाशात् **याञ्चाछलेन** व्याजेन **क्ष्मां** त्रिलोकीम् **अहरत् । अदितेः सुतेभ्यः** त्रिलोकीं **समदात् ।** स्वयम् अवाप्तसकलकामत्वादिति भावः ॥ २० ॥

**निःक्षत्रियामकृत गां च त्रिसप्तकृत्वो रामस्तु हैहयकुलाप्ययभार्गवाग्निः ।**
**सोऽब्धिं बबन्ध दशवक्त्रमहन् स लङ्कां सीतापतिर्जयति लोकमलङ्घ्यकीर्तिः ॥ २१**

हैहयः= कार्तवीर्यः, तस्य कुलस्य अप्यये= नाशे भवितव्ये भार्गवः भृगुकुलोत्पन्नः अग्निरिव स्थितः **रामः** जामदग्निः, **त्रिसप्तकृत्वः** एकविंशतिधेत्यर्थः **गां निःक्षत्रियां** दुष्टक्षत्रियरहिताम् **अकृत । सः** विष्णुः **सीतापतिः अब्धिं बबन्ध लङ्कां बबन्ध** निरुद्धं कृतवान् । **स** एव **दशवक्त्रम् अहन्** जघान । **अलङ्घ्यकीर्तिः** अतिशयसम्पन्नकीर्तिः सन् **लोकं जयति** स्ववशे करोति ॥ २१ ॥

**भूमेर्भरावतरणाय यदुष्वजन्मा जातः करिष्यति सुरैरपि दुष्कराणि ।**
**वादैर्विमोहयति यज्ञकृतोऽतदर्हान् शूद्रान् कलेः क्षितिभुजो न्यहनिष्यदन्ते ॥ २२**

**अजन्मा** जननविकाररहितः **यदुषु** यदुकुले **जातः** प्रादुर्भूतः श्रीकृष्णः **सुरैः दुष्कराणि** जरासन्धदुर्योधनादिनिग्रहरूपाणि **करिष्यति ।** बौद्धः सन् **अतदर्हान्** वैदिकाचारे अधिकाररहितान् **यज्ञकृतः वादैः** मोहकवचनैः **विमोहयति** सन्मार्गाच्चालयिष्यति । **कलेः अन्त क्षितिभुजः शूद्रान्** म्लेच्छादीन् वा **न्यहनिष्यत्** संहरिष्यति ॥ २२ ॥

**एवंविधानि कर्माणि जन्मानि च जगत्पतेः ।**
**भूरीणि भूरियशसो वर्णितानि महाभुज ॥ २३ ॥**

**॥ इति श्रीमद्भागवते एकादशस्कन्धे चतुर्थोऽध्यायः ॥**

**भूरीणि** स्वतः पूर्णानि **भूरियशसः** पूर्णकीर्तेः जन्मादीनि **वर्णितानि** श्रुत्यादिषु प्रतिपादितानि एवंविधानि असङ्ख्यातानि सन्तीत्यर्थः । तानि एकदेशेन मया **वर्णितानि ॥**

॥ इति श्रीयादवेन्द्रयतिविरचिते एकादशस्कन्धव्याख्याने चतुर्थोऽध्यायः ॥

# 5 | पञ्चमोऽध्यायः

परमात्मनि साधु भक्तिरहितानां तमोनिरयादिप्राप्तिरेवेति प्रकटनाय राजा पृच्छति **भगवन्तमिति** ।

**राजोवाच-**

**भगवन्तं हरिं प्रायो न भजन्त्यात्मवित्तमाः ।**

**तेषामशान्तकामानां का निष्ठाऽविजितात्मनाम् ॥ १ ॥**

हे **आत्मवित्तमाः ये भगवन्तं न भजन्ति** अविजितः आत्मा= मनो येषाम्, मनोनुसारेण कार्याण्यारभतामित्यर्थः । अशान्तः कामः= विषयाभिलाषो येषान्ते । विषयासक्तानां तेषां का निष्ठा ? कीदृशी व्यवस्था ? तेषां स्थितिः किं दुःखप्रचुरा ? न वा ? इति प्रश्नाभिप्रायः ॥ १ ॥

श्रीहरिभजनलक्षणं स्वधर्मं विना स्थितानां नित्यदुःखमेवेत्याह- **मुखेति** ।

**चमस उवाच-**

**मुखबाहूरुपादेभ्यः पुरुषस्याश्रमैः सह ।**

**चत्वारो जज्ञिरे वर्णा गुणैर्विप्रादयः पृथक् ॥ २ ॥**

**पुरुषस्य** विराट्पुरुषस्य मुखादिभिः **वर्णाः** ब्राह्मणादिवर्णोपेताः **चत्वारो गुणैः** स्वधर्मैः **सह जज्ञिरे** । तेषु चतुर्षु मध्ये **आश्रमैर्गुणैः** आश्रमधर्मैः सहिताः **विप्रादयः** तु **पृथक्** प्रत्येकं धर्मभेदोपेताः भवन्ति । शूद्रा अपि एकदेशेन पुराणादिश्रवणाधिकारिण इति भावः ॥ २ ॥

**य एषां पुरुषं साक्षादात्मप्रभवमीश्वरम् ।**

**न भजन्त्यवजानन्ति स्थानभ्रष्टाः पतन्त्यधः ॥ ३ ॥**

**एषां** स्वाश्रमादिविहितधर्माधिकारवतां ब्राह्मणादीनां मध्ये **ये** चेतनाः तामसा इति भावः । **साक्षात्** स्वातन्त्र्येण आत्मनः= चेतनादेः प्रभवकर्तारम् **ईश्वरं** सर्वान् वशीकर्तुं समर्थं **पुरुषं** स्वदेहादिषु स्थितं **न भजन्ति** वेदादिना श्रवणादिसेवां न कुर्वन्ति, **अवजानन्ति** 'अहमेव कर्ता' इत्यादिव्यवहारैः ईश्वरावज्ञां कुर्वन्ति ईश्वरमपलपन्ति इत्यर्थः, ते स्थानात् विष्णुलोकात् भ्रष्टाः **अधः** नित्यनिरये **पतन्ति ।** ये ईश्वरं स्वधर्मैः भजन्ति ते स्थाने विष्णुलोके सुखेन वर्तन्त इति भावः ॥ ३ ॥

एवंविधाः ब्राह्मणादयः अधः पतन्ति, किमु स्त्रीशूद्रादय इत्याशयेनाह- **दूरे हरिकथा** इति ।

**दूरे हरिकथाः**[1] **केचिद् दूरे चाच्युतकीर्तनाः ।**

**स्त्रियः शूद्रादयश्चैव तेऽनुकम्प्या भवादृशाम् ॥ ४ ॥**

**भवादृशां** साधूनां **अनुकम्प्याः** दयायोग्याः । दूरे अच्युतस्य कथाः येषां ते । एकदेशेन पुराणादिश्रवणाधिकारिणः स्त्रीशूद्रा ये केचित् वर्तन्ते तेभ्यः ये **दूरे** श्रवणादिरहिताः स्त्रीशूद्रा इत्यर्थः । दूरे अच्युतस्य कीर्तनं येषां ते वर्णबाह्याः नामज्ञानाधिकारिणः ये केचित् तेभ्यः ये **दूरे** नामज्ञाने असह्योपेताः वर्णबाह्याश्च तेऽपि अधः पतन्ति ॥ ४ ॥

ननु ब्राह्मणादीनां सदा वेदार्थज्ञानसङ्गतानां कथमधःपातः ? इत्याशङ्क्य, वेदार्थज्ञानञ्च येषां तामसानां तेषामधःपात इत्याह- **विप्र** इति ।

---

[1] 'दूरेऽच्युतकथाः' इति व्याख्याकृदादृतः पाठ इति भाति ।

**विप्रो राजन्यवैश्यौ च हरेः प्राप्ताः पदान्तिकम् ।**
**श्रौतेन जन्मना वाऽपि मुह्यन्त्याम्नायवादिनः ॥ ५ ॥**

**कर्मण्यकोविदाः स्तब्धा मूर्खाः पण्डितमानिनः ।**
**वदन्ति वादकान् मूढा यया माध्व्या गिरोत्सुकाः ॥ ६ ॥**

**श्रौतेन** श्रुत्या तदर्थपरिज्ञानयोग्येन **जन्मना** उत्पत्त्या वेदार्थज्ञानेन च यद्यपि हरेः वेदप्रतिपाद्यस्वपदान्तिकं पादसमीपं **प्राप्ताः** इव सम्भाविताः । अथाऽपि **कर्मणि** विषये **आम्नायवादिनः** वेदवादिन एव, न तु तदर्थज्ञाः । कुतः ? **अकोविदाः** वेदविचारे अकुशलाः **मुह्यन्ति** ईश्वरादिशब्दाः जीवविषया इति भ्रान्ता भवन्ति । ननु महत्सङ्गेन तेषां भ्रमनिवृत्तिः कुतो न भवति ? इत्यत आह- **स्तब्धा** इति । **स्तब्धाः** कस्याप्यनताः । तत्र किं निमित्तम् ? इत्यत आह- **पण्डितमानिन** इति । स्वयं पण्डित इत्यभिमानोपेताः । अतः **मूर्खाः** वेदमहातात्पर्यविषयज्ञानेन सदा रहिताः **मूर्खाः** ज्ञानिसम्प्रदायभ्रष्टाः सन्तः **माध्व्या** स्वर्गैश्वर्यादिफलबोधकया **गिरा** वेदवचनेन **उत्सुकाः** यज्ञकरणे अपेक्षावन्तः । तान् प्रति **वादकान्** अस्मिन् अर्थ एव इयं श्रुतिः प्रमाणमिति वादान् **वदन्ति** कुर्वन्ति ॥ ६ ॥

तेषामेवं दुर्बुद्धेर्निमित्तं किम् ? इत्यत आह- **रजसेति ।**

**रजसा घोरसङ्कल्पाः कामुका अभिमन्यवः ।**
**डाम्भिका मानिनः पापा विहसन्त्यच्युतप्रियान् ॥ ७ ॥**

**रजसा** रजोगुणस्वभावेन **कामुका** विषयासक्ताः, तमोगुणस्वभावेन च **घोरसङ्कल्पाः** बहुपशुहिंसायां सङ्कल्पोपेताः,'फलकामनया कर्म अकार्यम्' इति केचित् वदन्ति चेत् तदा किं कुर्वन्ति ? इति जिज्ञासायामाह- **अभिमन्यवः** तेषु आग्रहोपेताः । ननु

तदुक्तग्राहिण इति भावः । एवम् ईश्वरापलापकर्तारः शिवलिङ्गानि विष्णुलिङ्गनि वा दृष्ट्वा किं कुर्युः ? इति जिज्ञासायामाह- **डाम्भिका इति ।** डम्भेन लोकं वञ्चयन्तीति भावः । ननु कदाचित् परमभागवतसङ्गे सति तदुक्त्या एतेषां ईश्वरे किञ्चित् चित्तं न द्रवति वा? न द्रवतीत्याह- **विहसन्तीति । अच्युतप्रियान् विहसन्ति ।** तत्र निमित्तमाह- **मानिन** इति । स्ववेदार्थभ्रमे प्रमात्वमानिनः । किञ्च पापस्वभावा यतः अतः अच्युतप्रियैरुक्तं न गृह्णन्ति विहसन्ति च ॥ ७ ॥

ब्राह्मणा अपि अध्ययनादिसम्पन्ना अपि परमात्मज्ञानमार्गं विहाय विषयासक्तैः सह विषयेष्वेव यतन्ते इत्याह- **वदन्ति तेऽन्योन्यमिति ।**

**वदन्ति तेऽन्योन्यमुपासितश्रियो गृहेषु मैथुन्यपरेषु चाशिषः ।**
**यजन्त्यसृष्टान्नविधानदक्षिणा वृत्त्यै परं घ्नन्ति पशूनतद्विदः ॥ ८ ॥**

**गृहेषु** स्थिताः, उपासिता श्रीः= महालक्ष्मीर्यैः ते । ऐश्वर्यार्थमिति भावः । विष्णुमवज्ञायेति भावः । **अन्योन्यम् आशिषः** अभिलषितान् वदन्ति धर्मविशेषज्ञान-रहिताः **वृत्त्यै परं** जीवनायैव । केचित्[1] असृष्टाः परित्यक्ताः अन्नं विधानं दक्षिणा च यैः ते तथाविधाः सन्तः **यजन्ति पशून् घ्नन्ति** परं घ्नन्त्येव, ततः पुण्यं नास्तीति भावः ॥ ८ ॥

विष्णुद्वेषवत् वैष्णवद्वेषोऽपि तेषामस्तीत्याह- **श्रियेति ।**

**श्रिया विभूत्याऽभिजनेन विद्यया त्यागेन रूपेण बलेन कर्मणा ।**
**जातस्मयेनान्धधियः सहेश्वरान् सतोऽवमन्यन्ति हरिप्रियान् खलाः ॥ ९ ॥**

---

[1] अत्र सृष्टान्नं च त्यक्तान्नं - दत्तान्नं - विधानं च दक्षिणा च सृष्टान्नविधानदक्षिणाः, न विद्यन्ते सृष्टान्नविधानदक्षिणा येषां ते तथोक्ता इति विग्रहो भाति । असुराणां तामसयज्ञे गीतायां 'विधिहीनमसृष्टान्नं मन्त्रहीनमदक्षिणम् । श्रद्धाविरहितं यज्ञं तामसं परिचक्षते ॥' इति संवादात् ।

**श्रिया** देहकान्त्या **विभूत्या** धनधान्याद्यैश्वर्यसम्पत्त्या, **अभिजनेन** विशिष्टकुलोत्पन्नत्वेन, **विद्यया** वेदतदङ्गपूर्वमीमांसाद्यभ्यासेन, **त्यागेन** द्रविणान्नादिदानेन **रूपेण** अवयवपुष्टिप्राप्तसौन्दर्येण **बलेन** देहादिबलेन, **कर्मणा** नित्यनैमित्तककार्ययज्ञाद्याचरणेन एभिः जातेन **स्मयेन** 'मम सदृशः कः ?' इति गर्वलक्षणाभिमानेन निमित्तेन **अन्धधियः** सत्सु कार्याकार्यज्ञानरहिताः **खलाः** ईश्वरापलापिनः **सहेश्वरान् सतः** रागद्वेषादिदोषरहितान् सम्यग्ज्ञानोपेतान् **हरिप्रियान्** भक्त्या श्रीहर्यनुग्रहसम्पन्नान् **अवमन्यन्ति** अवमानं कुर्वन्ति ॥ ९ ॥

ननु 'यतो वा इमानि भूतानि जायान्त' इत्यादि श्रुतिभिः स्पष्टं जीवादधिकस्य ब्रह्मणः प्रतिपादनात् कथं तेषामन्यथाबुद्धिरिति जिज्ञासायामाह- **सर्वेष्विति ।**

**सर्वेषु शश्वत् तनुभृत्स्ववस्थितं यथा खमात्मानमभीष्टमीश्वरम्**[1] **।**
**वेदोपगीतं च न शृण्वते मुधा**[2] **मनोरथानां प्रवदन्ति वार्तया ॥ १० ॥**

**सर्वेषु तनुभृत्सु** चेतनेषु, **शश्वत्** सदा, **अवस्थितम् आत्मानं** चेतनानां विषयादीनाम् आदानादिकर्तारम्, विषयभोक्तृत्वेऽपि देहप्राप्तदोषोऽस्य नास्तीत्याह- **यथा खमिति ।** नित्याकाशं यथा विकाररहितं, तथा देहस्थजीव इव विकारोपेतो न इत्यर्थः । श्रीहरेः सर्वपूर्णशक्त्युपेतत्वात् निर्दोषत्वं घटते इत्याशयेनाह- **ईश्वरमिति ।** **अभीष्टं** सर्वेषां अत्युपादेयस्वभावं, वेदैः प्रतिपाद्यं **न शृण्वते** राजसानाम् असत्स्वभावत्वादिति भावः । प्रत्युत श्रीहरिकथाविघातं कुर्वन्तीत्याह- **मनोरथानामिति । मनोरथानां** 'मनसा इदं श्रेयःप्राप्त्यै' इत्याद्यनुसन्धानसहितानां विषयाणां **मुधा** प्रयोजनरहितया

---
[1] 'तथा खमात्मानमभीष्टमीश्वरम्' इति पाठान्तरम् । [2] 'शृण्वतेऽबुधा' इति पाठान्तरम् ।

**वार्तया** सह विद्यमानान् विषयान् परस्परं **प्रवदन्ति,** एवं कालं नयन्तीतिभावः ॥ १० ॥

तामसस्वभावानां देवताद्वेषवत् विहिताकरणं निषिद्धकरणमप्यस्तीत्याह- **लोक इति ।**

**लोके व्यवायामिषमद्यसेवा नित्यास्तु जन्तोर्नहि तत्र चोदना ।**
**व्यवस्थितिस्तेषु विहाय यज्ञान् सुराग्रहैरासुरवृत्तिरिष्टा ॥ ११ ॥**

**लोके** क्रियामाणाः व्यवायस्य= मैथुनस्य आमिषस्य= मद्यस्य एतेषां सेवाः= अनुभवाः **जन्तोः** चेतनस्य **नित्याः** रागात् प्राप्ताः **यज्ञान् विहाय** यज्ञेषु तु चोदनाऽस्तीति भावः । **सुराग्रहैः** सुरापात्रैः पानेन सह **तत्र** व्यवायादिषु विषये चोदना= विधिः **न हि ।** अथापि **सुराग्रहैः** सुरापात्रैः सह **तेषु** आमिषमद्यादिषु **व्यवस्थितिः** आसक्तिः **आसुरवृत्तिः** असुरस्वभावानां वृत्तिः= जीवनव्यापारः इति **इष्टा** सम्मता । अतः अधर्मोऽयमिति भावः ॥ ११ ॥

सौख्यसाधनं स्वदुर्बुद्ध्या दुःखसाधनं कुर्वन्तीत्याह- **धनं हीति ।**

**धनं हि धर्मैकफलं यतोऽस्य ज्ञानं सविज्ञानमनुप्रशान्तिः ।**
**गृहेषु युञ्जन्ति कळेबरस्य मृत्युं न पश्यन्ति दुरन्तवीर्यम् ॥ १२ ॥**

**धनं** धर्मः एकं= प्रधानं फलं यस्य तत् **धर्मैकफलं** सात्विकस्वभावानामितिभावः । **अस्य** विष्णुप्रीत्यर्थं कृतस्य **सविज्ञानं** विज्ञानेन= स्वतन्त्रास्वतन्त्रज्ञानेन सहितं **ज्ञानं** अन्तर्याम्यादिपरमात्मोत्कर्षज्ञानं फलं भवति । **यतः** ज्ञानात् **अनु** ध्यानापरोक्षानन्तरं **प्रशान्तिः** सर्वबन्धककर्मदुःखानाम् अत्यन्तं शान्तिर्भवति । एतादृशं धनं **गृहेषु** विषय-

भोगेष्वित्यर्थः । **युञ्जन्ति** उपयुञ्जन्ति । **कळेबरस्य** भोगे प्रधानस्येति भावः । दुरन्तं= अनिवार्यं सामर्थ्यं यस्य तं **मृत्युं न पश्यन्ति ।** तस्मात् धनभोगोऽपि न सिध्यति तेषामिति भावः ॥ १२ ॥

रागादेव व्यवायादिषु प्रवृत्तिर्दोषः यज्ञेषु विहिततया हविःसेवादिः धर्म इत्याह- **यद् घ्राणेति ।**

**यद् घ्राणभक्षो विहितः सुरायास्तथा पशोरालभनं न हिंसा ।**
**एवं व्यवायः प्रजया न रत्यै इमं विशुद्धं न विदुः स्वधर्मम् ॥ १३ ॥**

**सुराया घ्राणभक्षः** आघ्राणनं **विहितः व्यवाययज्ञे** यज्ञे सोम इव विहितः । यज्ञे देवतोद्देशेन पशुसंज्ञपनम् **आलभनम्** इत्युच्यते । **पशोः** स्वर्गस्य लाभात् **न हिंसा** यज्ञादन्यत्र हिंसा । पशोः स्वर्गस्य लाभादिति भावः । प्रजया = सन्तानार्थं व्यवायः यज्ञ इति यत् तेन निमित्तेन **एवं** रागतः प्राप्तदोषो न । एवं व्यवायोऽपि आलभनवत् विहितः इति वा एवं शब्दार्थः । **रत्यै** रागेण सुखार्थं प्राप्तः धर्मो न । **विशुद्धं** विष्णुसेवार्थं प्राप्तं इमं धर्मं स्वधर्मत्वेन न विदुः ॥ १३ ॥

अधर्मकर्तॄणां अनिष्टमाह- **येत्वनेवंविद** इति ।

**ये त्वनेवंविदोऽसन्तः स्तब्धाः सदभिमानिनः**[1] **।**
**पशून् द्रुह्यन्ति विस्रब्धान् प्रेत्य खादन्ति आगतान्**[2] **॥ १४ ॥**

**असन्तः** राजसादिस्वभावाः ये एवं 'विष्णुप्रीत्युद्देशेन कृतो धर्मः' इति विदः एवं विदः, तदन्ये **अनेवंविदः सदभिमानिनः** स्वकार्ये असति 'सत्कर्म' इति अभिमानवन्तः । तथा हिंसका इव **पशून् विस्रब्धान्** 'ग्रासाशनेन रक्षन्ति' इति

---

[1] 'सदसि मानिनः' इति पाठान्तरम् । [2] 'ते च तान्' इति पाठान्तरम् ।

विश्वासयुक्तान् **द्रुह्यन्ति** घ्नन्ति ते वृथा हताः पशवः **प्रेत्य** मृत्वा **आगतान्** स्वहिंसकान् पुरुषान् स्वयं **खादन्ति** भक्षयन्ति ॥ १४ ॥

एतेषां तामसानां गतिमाह- **द्विषन्त इति ।**

**द्विषन्तः परकायेषु स्वात्मानं हरिमीश्वरम् ।**
**मृतके सानुबन्धेऽस्मिन् बद्धस्नेहाः पतन्त्यधः ॥ १५ ॥**

**मृतके** मृत्युग्रस्ते **सानुबन्धे** कळत्रादियुक्ते **अस्मिन्** देहे **बद्धस्नेहाः** सन्तः रुद्धा इति भावः । **परकायेषु** स्थितं **स्वात्मानं** स्वस्मिन् परेषु च आप्तं व्याप्तं **ईश्वरं** सर्वशक्तिसम्पन्नं **द्विषन्तः** आतिथ्यादिकर्म अकृत्वा तिरस्कुर्वन्तः जीवातिरिक्तम् अन्त-र्यामिणम् अवलुम्पन्तो वा **अधः पतन्ति ॥** १५ ॥

राजासानां गतिमाह- **ये कैवल्यमिति ।**

**ये कैवल्यमसम्प्राप्ता ये चातीताश्च मूढताम् ।**
**त्रैवर्गिकाभिजन्मान आत्मानं पातयन्ति ते ॥ १६ ॥**

**कैवल्यं** कैवल्यसाधनं यथार्थज्ञानम् **असम्प्राप्ताः** प्राप्ता एव न भवन्ति । **ये मूढताम् अतीताः** पण्डितंमन्या इति भावः, धर्मार्थकामैः विषयासक्ताः, न तु परमात्माराधका इति भावः, त्रैवर्गिकेषु अभिजन्म येषां ते **त्रैवर्गिकाभिजन्मानः** त्रैवर्गिकनामान इति वा । ब्राह्मणजन्मोपेताः । **ते आत्मानं** स्वात्मानं नरके **पातयन्ति ॥** १६ ॥

तामसानामधर्मः पात इति निर्णयाय तेषां पुनरप्यधोगतिमाह- **अशान्ता** इति ।

**ये तत्रात्महनोऽशान्ता अज्ञाने ज्ञानमानिनः ।**
**सीदन्त्यकृतकृत्या वै कालध्वस्तमनोरथाः ॥ १७ ॥**

**हित्वाऽत्यायासरचितगृहापत्यसुहृच्छ्रियः ।**
**तमो विशन्त्यनुच्छ्वासं वासुदेवपराङ्मुखाः ॥ १८ ॥**

**अशान्ताः** सन्तः परमात्मनिष्ठारहिताः सन्तः **आत्महनः** स्वसुखहन्तारः, **अज्ञाने** निरीश्वरत्वज्ञाने भ्रमे ज्ञानत्वभ्रमोपेताः **अकृतकृत्याः** परलोकसाधनरहिताः **सीदन्ति** पुण्यह्रासयुक्ता भवन्ति । कालेन ध्वस्ताः= परमात्मज्ञानप्रतिबद्धाः मनोरथाः= स्वचिन्तितार्थाः तथाविधाः । वासुदेवे पराङ्मुखाः= तन्निराकरणकर्तारः **सुहृच्छ्रियः हित्वा** सर्वभाग्यात् भ्रंशिता इत्यर्थः । **अनुच्छ्वासं** श्वासमुखेनापि रहितम् इत्यर्थः । **तमः विशन्ति** ॥ १८ ॥

**राजोवाच-**

**कस्मिन् काले स भगवान् किंवर्णः कीदृशो नृभिः ।**
**नाम्ना वा केन विधिना पूज्यते तदिहोच्यताम् ॥ १९ ॥**

**करभाजन उवाच-**

**कृतं त्रेता द्वापरं च कलिरित्येषु केशवः ।**
**नानावर्णाभिधाकारो नानेव विधिनेज्यते ॥ २० ॥**

**कृते शुक्लश्चतुर्बाहुर्जटिलो वल्कलाम्बरः ।**
**कृष्णाजिनोपवीताक्षान् बिभ्रद् दण्डकमण्डलू ॥ २१ ॥**

**मनुष्यास्तु तदा शान्ता निर्वैराः सुहृदः समाः ।**
**यजन्ति तपसा देवं शमेन च दमेन च ॥ २२ ॥**

राजा पृच्छति- **कीदृशः** किं लक्षणकः ? **केन नाम्ना** विशिष्टः ? **नानेव** भिन्न इव भेदरहित इत्यर्थः । **कृते** युगे । अक्षः= जपमाला । **शमेन** परमात्मासक्तचित्तेन सह **दमेन** इन्द्रियनिग्रहेण सह **तपसा** ध्यानेन देहशुद्धिकरतपसा वा ॥ २२ ॥

कृतयुगस्थमूर्तेः नामान्याह- **हंस** इत्यादिना ।

**हंसः सुपर्णो वैकुण्ठो धर्मो योगेश्वरोऽमलः ।**
**ईश्वरः पुरुषोऽव्यक्तः परमात्मेति गीयते ॥ २३ ॥**

**त्रेतायां रक्तवर्णोऽसौ चतुर्बाहुस्त्रिमेखलः ।**
**हिरण्यकेशस्त्रय्यात्मा स्रुक्स्रुवाद्युपलक्षणः ॥ २४ ॥**

**तं तदा मनुजा देवं सर्वदेवमयं हरिम् ।**
**यजन्ति विद्यया त्रय्या धर्मिष्ठा ब्रह्मवादिनः ॥ २५ ॥**

**त्रिमेखलः** त्रिगुणोपेता मेखला यस्य सः । त्रयी= वेदसमुदायः, तस्या आत्मा= हृदयं तात्पर्यं यस्मिन् सः वेदमहातात्पर्यगोचर इत्यर्थः । वेदे शक्तिप्रेरकरूपः वाच्यवाचकयोरभेदव्यपदेशो वा । स्रुक्स्रुवादिधरः **सर्वदेवमयं** सर्वदेवेशं प्रधानम् ॥ २५ ॥

त्रेतायुगमूर्तेः नामान्याह- **विष्णुरित्यादि** ।

**विष्णुर्यज्ञः पृश्निगर्भः सर्वदेव उरुक्रमः ।**
**वृषाकपिर्जयन्तश्च उरुगाय इतीर्यते ॥ २६ ॥**

**द्वापरे भगवान् श्यामः पीतवासा निजायुधः ।**
**श्रीवत्सादिभिरङ्कैश्च लक्षणैरुपलक्षितः ॥ २७ ॥**

**तं तदा पुरुषं मर्त्या महाराजोपलक्षणम् ।**
**यजन्ति वेदतन्त्राभ्यां परं जिज्ञासवो नृप ॥ २८ ॥**

**नमस्ते वासुदेवाय नमः सङ्कर्षणाय च ।**
**प्रद्युम्नायानिरुद्धाय तुभ्यं भगवते नमः ॥ २९ ॥**

**नारायणाय ऋषये पुरुषाय महात्मने ।**
**विश्वेश्वराय रामाय सर्वभूतात्मने नमः ॥ ३० ॥**

तन्त्रं= पञ्चरात्रागमविधिः, आगममन्त्रैर्वा । **परं** परमात्मानम् । **जिज्ञासवः ।** स्तुवन्ति च इत्याह- **नमस्त इति ।** वानात् सर्वज्ञत्वात्, सूतेः सर्वसृष्टिकर्तृत्वात् देवानां पालनादिना वासनात् **वासुदेवः** तस्मै **तुभ्यं** विविधावतारैः विविधव्यापारकत्वेन **नारायणाय** सर्वदोषविरोधिसर्वकल्याणगुणाश्रयाय **ऋषये** वेदव्यासाय नारायणाय ऋषये इति वा । **पुरुषाय** सर्वान्तर्यामिणे **महात्मने** पूर्णात्मने **रामाय** दशरथरामायेति वा, सर्वेषां भूतानां आत्मा= स्वरूपस्वभावो येन सः तस्मै **नमः ॥** ३० ॥

**इति द्वापर उर्वीशं स्तुवन्ति जगदीश्वरम् ।**
**नानातन्त्रविधानेन कलावपि यथा शृणु ॥ ३१ ॥**

नानातन्त्राणि= पञ्चरात्रादीनि तदुक्तपूजाविधानेन श्रीनारायणं **कलावपि** यजन्ति च **यथा** येन प्रकारेण कलौ **यजन्ति** तथा तं प्रकारं शृणु ॥ ३१ ॥

**कृष्णवर्णं कलौ कृष्णं साङ्गोपाङ्गं सपार्षदम् ।**
**यज्ञैः सङ्कीर्तनप्रायैर्यजन्ति हि सुमेधसः ॥ ३२ ॥**

**सङ्कीर्तनप्रायैः** मानसकीर्तनप्रधानैः **यज्ञैः** विविधपूजाभिः **साङ्गोपाङ्गम्** अङ्गदेवाः पीठदेवाः आवरणदेवाः पार्षदाः= जयविजयादयः तैः सहितं, **सुमेधसः** समीचीनज्ञान-भक्तिसम्पन्नाः **यजन्ति** । उक्तया अवताराराधनया ज्ञानप्रतिबन्धकाज्ञानदुष्कर्मादिनिवृत्तिः, बिम्बध्यानादिना प्रकृतिबन्धनिवृत्तिरिति भावः ॥ ३२ ॥

कृष्णं स्तुवन्ति नमन्ति च इत्याह- **ध्येयमिति** ।

**ध्येयं सदा परिभवघ्नमभीष्टदोहं तीर्थास्पदं शिवविरिञ्चिनुतं शरण्यम् ।**
**भृत्यार्तिहं प्रणतपाल भवाब्धिपोतं[1] वन्दामहे पुरुष ते चरणारविन्दम् ॥ ३३ ॥**

**सदा ध्येयं** सर्वकल्याणरूपत्वादिति भावः । परिभवाः= तिरस्काराः, तान् हन्ति सर्वपापनिवर्तकमित्यर्थः । **अभीष्टदोहं** सर्वाभीष्टप्रदं, तीर्थास्पदं विष्णुपदीजनकम् । तीर्थं= शास्त्रं सर्वशास्त्रप्रतिपाद्यम्, शिवविरिञ्चिभ्यां नुतं= स्तुतम् । **शरण्यं** भवादिनिव-र्तकत्वादिति भावः । भृत्यानां आर्तिं= दुःखं तन्निवर्तकं, **भवाब्धिपोतं** संसारलक्षण-समुद्रस्य पोतः नौः, तत्तारकमित्यर्थः । **हे पुरुष** ! षड्गुण ! हे प्रणतपाल ! श्रीकृष्ण ! प्रणतान् पातीति प्रणतपालः **ते चरणारविन्दं वन्दामहे** ॥ ३३ ॥

कलौ रामभक्ताः स्तुवन्तीत्याशयेनाह- **त्यक्त्वेति** ।

**त्यक्त्वा सुदुस्त्यजसुरेप्सितराज्यलक्ष्मीं धर्मिष्ठ आर्यवचसा यदगादरण्यम् ।**
**मायामृगं दयितयेप्सितमन्वधावद् वन्दामहे पुरुष ते चरणारविन्दम् ॥ ३४ ॥**

---

[1] 'प्रणतभक्तभवाब्धिपोतं' इति पाठान्तरम् ।

**हे पुरुष ! धर्मिष्ठ !** धर्मपालनार्थमवतीर्ण ! भवान् अन्यैः सुदुस्त्यजम्, सुरेप्सितं सुराणामपि अभिलषितां राज्यलक्ष्मीम् आर्यवर्यवचसा= दशरथराजवचनेन तत्ववचन-व्याजेनेति भावः । **धर्मिष्ठे** भरते **त्यक्त्वा** राज्यस्पृहाभावात् तत् स्वयं **त्यक्त्वा** भरतेन राज्ये पालनाय याचितोऽपि देवकार्यार्थनिमित्तमितिभावः । **अरण्यं यत्** येन चरणार-विन्देनैव **अगात्,** तत्र **दयितया** सीतया **ईप्सितमिव** स्थितं **मायामृगम्** उद्दिश्य यत एव चरणारविन्देनैव **अन्वधावत् ते** तत् **चरणारविन्दं वन्दामहे** । अणिमाद्यैश्वर्यसम्पन्नो भवान् भूमेः अतिशयसम्पादनाय अलङ्काराय च चरणारविन्देन भुवि सञ्चारं कृतवानिति भावः ॥ ३४ ॥

**एवं युगानुसारेण भगवान् युगवर्तिभिः ।**
**मनुजैरिज्यते राजन् श्रेयसामीश्वरो हरिः ॥ ३५ ॥**

**युगानुसारेण** तत्तद्युगप्राप्तमन्त्रैर्द्रव्यैश्च **इज्यते** । **युगानुसारेण** आचारादिना अथवा युगानुरूपेण स्वमूर्त्या सम्पन्नः । **श्रेयसां** तत्तदुचितश्रेयसाम् **ईश्वरः** प्रधानसामर्थ्यवान् ॥ ३५ ॥

'यज्ञैः सङ्कीर्तनप्रायैः' इति कलौ पूजा वर्णिता । कृतयुगादौ सङ्कीर्तने सहैव पूजा वर्णिता । तत् कुतो वैलक्षण्यम् ? इति जिज्ञासायां कलौ सङ्कीर्तनस्य सर्वोत्कर्षमाह-**कलिमिति ।**

**कलिं सम्भावयन्त्यार्या[1] गुणज्ञाः सारभागिनः ।**
**यत्र सङ्कीर्तनादेव सर्वः स्वार्थोऽभिलभ्यते ॥ ३६ ॥**

---

[1] 'सभाजयन्त्यार्या' इति पाठान्तरम् ।

सारं भजन्तीति **सारभागिनः**, सारान्= साधनेषु श्रेष्ठान् भागान्= उपायान् आकाङ्क्षमाणा इत्यर्थः । **गुणज्ञाः** तत्तत्समयप्राप्ततत्तत्साधनानां सामर्थ्यविशेषविदः । **यत्र** कलियुगे सङ्कीर्तनेन= श्रीनारायणादिसङ्कीर्तनेन **सर्वः** सर्वधर्माचरणेन प्राप्यमाणः **स्वार्थः** श्रीहरिप्रसादः लभ्यते, तं कलियुगं **सम्भावयन्ति** बहुमानयन्ति ॥ ३६ ॥

श्रीहरिसङ्कीर्तनमपि स्तौति- **नह्यत इति** ।

**नह्यतः परमो लाभो देहिनां भ्राम्यतामिह ।**
**यतो विन्देत परमां शान्तिं नश्यत्यपस्मृतिः[1] ॥ ३७ ॥**

**इह** देहादिषु कर्मभिः भ्राम्यमाणानां **यतः** कलौ सङ्कीर्तनात् **अपस्मृतिः** 'अहं कर्ता' इत्यादिविरुद्धस्मृतिः, 'नाहं स्वतन्त्रः' इति स्मृत्यभावो वा **नश्यति** । 'परमात्मा सर्वस्वामी' इति स्मृतिश्च भवतीति भावः । किञ्च यतः **परमां शान्तिम्** अज्ञानादिनिवृत्तिं परमसौख्यं च **विन्देत** प्राप्नोति । अतः एतादृशात् कलौ श्रीहरिसङ्कीर्तनात् **परमः लाभः** श्रेयःसाधनं **न हि** । कलौ श्रीहरिसङ्कीर्तनं परमलाभ इत्यर्थः ॥ ३७ ॥

**कृतादिषु प्रजा राजन् कलाविच्छन्ति सम्भवम् ।**
**कलौ तथा भविष्यन्ति नारायणपरायणाः ॥ ३८ ॥**

**क्वचित् क्वचिन्महाराज द्रुमिलेषु च भूयशः ।**
**ताम्रपर्णी नदी यत्र कृतमाला पयस्विनी ॥ ३९ ॥**

**कावेरी च महापुण्या प्रतीची च महानदी ।**
**ये पिबन्ति जलं तासां मनुजा मनुजेश्वर ॥ ४० ॥**

[1] 'नश्यति संसृतिः' इति पाठान्तरम् ।

**प्रायो भक्ता भविष्यन्ति वासुदेवेऽमलाशयाः ।**

**देवर्षिपितृभूताप्तनृणां पूजाकरा नृप ॥ ४१ ॥**

**कलौ** क्वचिद्देशविशेषे **नारायणपरायणा** भविष्यन्ति । **पयस्विनी** क्षीरनदी, **प्रतीची** पश्चिमवाहिनी सुकेरळस्था नेत्रावती, **तासाम्** उदकपानेन **अमलाशयाः** सन्तः **प्रायो भक्ता भविष्यन्ति** । देवर्ष्यादीनां **पूजाकराश्च** भविष्यन्ति ॥ ४१ ॥

ननु विष्णुभक्तः स्वयं सर्वोत्कृष्टः भूताप्तनृणां पूजाकरणलक्षणकिङ्करत्ववान् कथं स्यात्? इति जिज्ञासायामाह- **न किङ्कर** इति ।

**देवर्षिभूताप्तनृणां पितॄणां न किङ्करो नायमृणी च राजन् ।**

**सर्वात्मना यः शरणं शरण्यं गतो मुकुन्दं परिचर्यया च ॥ ४२ ॥**

नृणाम् आतिथ्यादिकर्तृत्वेपि **अयं** सर्वात्मना भक्तः **किङ्करो न** भवति । उपकृतत्वेन तदधीनत्वलक्षणं यदृणित्वं तद्वांश्च न भवति । श्रीहरिभक्त्या स्वावरान् प्रति किङ्करादिः न भवतीत्यर्थः । श्रीहरिभक्तेषु उत्तमः कः? इति जिज्ञासायामाह- **सर्वात्मनेति । परिचर्यया** श्रीहरिनियमितसेवया, **मुकुन्दं यः सर्वात्मना** सर्वव्यापारान् श्रीहरिविषयान् कृत्वेत्यर्थः । **शरणं गतः ।** एकवचनं समुदाये वर्तते । स न किङ्करः । भक्त्या तदवराः ये ते देवेशादीनां किङ्करा ऋणिनश्च । मुक्तावपि देवेशैः उपकृतत्वादिति भावः ॥ ४२ ॥

ननु सर्वात्मना भक्तानामपि परमात्मन्यपराधकर्तृत्वश्रवणात् कथं तेषां श्रीहरिभक्त्या उत्तमत्वम् इत्यत आह- **स्वपादेति ।**

**स्वपादमूलं भजतः प्रियस्य त्यक्तान्यभावस्य हरिः परेशः ।**
**विकर्म यच्चोत्पतितं कथञ्चिद् धुनोति सर्वं हृदि सन्निविष्टः ॥ ४३ ॥**

त्यक्ताः= श्रीहर्यधीनतया ज्ञाताः, ममकारेण परित्यक्ता रहिता वा अन्ये ये भावाः= ऐश्वर्यादिविषया येन तस्य **कथञ्चित्** विषयासक्तिलक्षणकारणं विनाऽपि, प्रारब्धेनेति भावः । **विकर्म यत् उत्पतितं** तत् **हृदि सन्निविष्टः** सदा ध्यायमानः हरिः स्वयं **धुनोति** परिहरति । किञ्च अन्यत् **सर्वं** मपि प्रारब्धं कानिचित् प्रारब्धानि धुनोति । देवेशादिषु अतिप्रेमवत्त्वादिति भावः ॥ ४३ ॥

**नारद उवाच-**
**धर्मान् भागवतानित्थं श्रुत्वा स मिथिलेश्वरः ।**
**यज्ञान्ते तान् मुनीन् प्रीतः सोपाध्यायो ह्यपूजयत् ॥ ४४ ॥**

**ते चान्तर्दधिरे सिद्धाः सर्वलोकस्य पश्यतः ।**
**राजा धर्मान् उपातिष्ठन्नवाप परमां गतिम् ॥ ४५ ॥**

**त्वमप्येतान् महाभाग धर्मान् भागवतान् श्रुतान् ।**
**आस्थितः श्रद्धया युक्तो निःसङ्गो यास्यसे परम् ॥ ४६ ॥**

**तान्** आर्षभान् **सोपाध्यायः** पुरोधसा सहितः **अपूजयत्** । **सिद्धाः** अणिमादि-सम्पन्नाः **ते** नव योगिनः **अन्तर्दधिरे** अदर्शनं गताः । **धर्मान्** श्रीहर्यर्चनादीन् **उपातिष्ठन्** विशेषतः आचरन् । हे **महाभाग !** महान्= परमात्मा भागः= स्वं यस्य सः । हे वसुदेव ! **त्वमपि भागवतान्** श्रीहर्यर्चनादीन् **आस्थितः** कुर्वन् **परं** परमात्मानं **यास्यसे** प्राप्स्यसि ।

यदुक्तं वसुदेवेन त्वया 'अहं अनन्तं प्रजार्थे अपूजयं मोक्षार्थे नापूजयम्' (भा. ११.२.८) इति सत्यं तदन्येषां तथा । भवता प्रजार्थं पूजनं मोक्षार्थमिव जातमिति स्तौति- **युवयोरिति ।**

**युवयोः खलु दम्पत्योर्यशसाऽऽपूरितं जगत् ।**
**पुत्रतामगमद् यद् वां भगवानीश्वरो हरिः ॥ ४७ ॥**

**दर्शनालिङ्गनालापैः सशय्यासनभोजनैः ।**
**आत्मा वां पावितः कृष्णे पुत्रस्नेहं प्रकुर्वतोः ॥ ४८ ॥**

**युवयोः** वसुदेवदेवक्योः यशसा = पुण्यकीर्त्या । अस्माकं एतादृशकीर्तिप्राप्तौ किं कारणम् इति जिज्ञासायामाह- **पुत्रतामिति** । ईशः **वां** युवयोः **पुत्रतां** पुत्रभावं **अगमत्** इति **यत्** तेन कारणेन **जगत् आपूरितम्** । कृष्णालिङ्गनादिभिश्च **वां** युवयोः **आत्मा** देहादिश्च **पावितः** । राजसतामसदोषरहितः आत्मा चेतनोऽपि पावितः ॥ ४८ ॥

पुत्रस्नेहः लौकिकः । तेन वैदिकपुरुषार्थः कथम् ? इति जिज्ञासायां कैमुत्यन्याये-नाह- **वैरेणेति ।**

**वैरेण यं नृपतयः शिशुपालपौण्ड्रसाल्वादयो गतिविलासविलोकनाद्यैः ।**
**ध्यायन्त आकृतधियः शयनासनादौ तत्साम्यमापुरनुरक्तधियः पुनः किम् ॥ ४९**

विलासादिभिः श्रीकृष्णव्यापारैः सह **ध्यायन्तः**, शयनासनभोजनादावपि **आकृत-धियः** तत्रैव न्यस्तबुद्धयः **तत्साम्यं** स्वोचितम् **आपुः** । अन्तःकरणादीन्द्रियलक्षणदेहस्य सदसज्जीवयोः साधारणत्वात् । असज्जीवस्य द्वेषपूर्वकस्मरणसमये सज्जीवस्य स्वभाव-

सिद्धादरपुरस्सरं सदा श्रीकृष्णानुसन्धानं भवति । तेन सज्जीवस्य श्रेयः प्राप्तिरिति । बहुप्रमाणैः सिद्धोऽयमर्थ इति भावः । **अनुरक्तधियः** भवादृशा वैरं विना ध्यायन्तः, तत्साम्यं प्राप्स्यन्तीति किमु वक्तव्यम् ॥ ४९ ॥

अतादृशे श्रीकृष्णे अन्यथाज्ञानं तव माऽस्वित्याह- **माऽपत्यबुद्धिमिति ।**

**माऽपत्यबुद्धिमकृथाः कृष्णे सर्वात्मनीश्वरे ।**
**मायामनुष्यभावेन गूढैश्वर्ये परेऽव्यये ॥ ५० ॥**

मायया= स्वेच्छया प्राप्तः यः मनुष्यभावः= मानुषव्यापारः तेन, गूढं = तिरोहितं, ऐश्वर्यं = ईश्वरव्यापारः यस्य तस्मिन् **परे** सम्पूर्णसर्वकल्याणगुणे, **सर्वात्मनि** सर्वान्तर्यामिणि अथापि **ईश्वरे** सर्वसामर्थ्योपेते **अव्यये** देहादिप्राप्यदोषरहिते ॥ ५० ॥

एतादृशस्य सर्वाभीष्टपूर्णत्वात् किमर्थम् अवतारः ? इत्यत आह- **गुप्तय इति ।**

**भूभारासुरराजन्यहन्तवे गुप्तये सताम् ।**
**अवतीर्णोऽस्य निर्वृत्त्यै यशो लोके वितन्वति ॥ ५१ ॥**

**सतां** भक्तानां, **गुप्तये** भूभारासुरराजन्यान् **हन्तवे** हन्तुम् **अस्य निर्वृत्त्यै** च अस्य लोकस्य सतां सौख्याय च **अवतीर्णः लोके यशः** भवतां कीर्तिं **वितन्वति** व्याप्तं कुर्वति **कृष्णे अपत्यबुद्धिं** अयं देहेन मत्तो जात इति बुद्धिं माकृथाः । श्रीकृष्णस्य जडदेहेन उत्पत्त्यभावादिति भावः ॥ ५१ ॥

**श्रीशुक उवाच-**
**एतच्छ्रुत्वा महाभागो वसुदेवोऽतिविस्मितः ।**
**देवकी च महाभागा जहतुर्मोहमात्मनः ॥ ५२ ॥**

**इतिहासमिमं पुण्यं धारयेद् यः समाहितः ।**
**स विधूयेह शमलं ब्रह्मभूयाय कल्पते ॥ ५३ ॥**

**॥ इति श्रीमद्भागवते एकादशस्कन्धे पञ्चमोऽध्यायः ॥**

महान् = परमात्मा, भागः = निधिर्यस्य सः, **अतिविस्मितः** परदेवतायाः स्वगृहेष्ववस्थानेनाश्चर्यवान् अप्राकृताद्भुतदेहवत्त्वश्रवणेनाश्चर्यवान् वा **आत्मनः** सम्बन्धिनं **मोहं** 'श्रीकृष्णः अस्मन्नियोज्यः सुतः' इति बुद्धिं **जहतुः । इह** कर्मभूमौ सम्पादितं **शमलं** पापं **विधूय ब्रह्मभूयाय** ब्रह्मत्वाय, स्वातन्त्र्यानुभवादिगुणाभिवृद्धये **कल्पते** समर्थो भवति, इतिहासधारणप्राप्तज्ञानदार्ढ्येनेति भावः ॥ ५३ ॥

॥ इति श्रीयादवेन्द्रयतिविरचिते एकादशस्कन्धव्याख्याने पञ्चमोऽध्यायः ॥

# 6 | षष्ठोऽध्यायः

श्रीकृष्णस्य भूलोकपरित्यागेच्छां ब्रह्मालोच्य स्वाभिमतमिमं विज्ञापयितुमागत इत्याह- **अथ ब्रह्मेति ।**

**श्रीबादरायणिरुवाच-**

**अथ ब्रह्माऽऽत्मजैर्देवैः प्रजेशैरावृतोऽभ्यगात् ।**

**भवश्च भूतभव्येशो यक्षभूतगणैर्वृतः ॥ १ ॥**

**अथ** श्रीकृष्णेन देवकार्यकरणानन्तरं श्रीकृष्णस्य भूलोकपरित्यागेच्छानन्तरं वा । **आत्मजैः** आत्मनः= मनसो जातैः सनकादिभिः । महेशोऽपि ब्रह्मणा सह आगत इत्याह- **भवश्चेति ।** भूतानां= अतीतानां विद्यमानानां भविष्यतां च सर्वेषाम् ईशः= अहन्तत्वनियामकत्वादिति भावः ॥ १ ॥

आगतान् देवादीन् विस्तरेणाह- **इन्द्रो मरुद्भिरित्यादिना ।**

**इन्द्रो मरुद्भिर्भगवानादित्या वसवोऽश्विनौ ।**

**ऋभवोऽङ्गिरसो रुद्रा विश्वे साध्याश्च देवताः ॥ २ ॥**

**गन्धर्वाप्सरसो नागाः सिद्धचारणगुह्यकाः ।**

**ऋषयः पितरश्चैव सविद्याधरकिन्नराः ॥ ३ ॥**

**द्वारकामुपसंजग्मुः सर्वे कृष्णदिदृक्षवः ।**

**वपुषा येन भगवान् नरलोकमनोरमः ।**

**यशो वितन्वन् लोकेषु सर्वलोकमलापहम् ॥ ४ ॥**

देवानां सङ्घशः आगमनस्य प्रयोजनमाह- **कृष्णं दिदृक्षव** इति । **येन वपुषा** श्रीकृष्णवपुषा लोके मलं= पापं अपहन्तीति मलापहम्, **यशः** विविधां कीर्तिं, **वितन्वन्** सन् नरलोकानां मनोरमः= मनसः आनन्दजनकः भवति, तं कृष्णं दिदृक्षवः **उपसञ्जग्मुः ॥** ४ ॥

**तस्यां विभ्राजमानायां समृद्धायां महर्षिभिः ।**

**व्यचक्षतावितृप्ताक्षाः कृष्णमद्भुतदर्शनम् ॥ ५ ॥**

**समृद्धायां** श्रीकृष्णसान्निध्यादिति भावः । **तस्यां** द्वारवत्यां स्थितं **व्यचक्षत** अव्यवधानेन सान्तत्येनावलोकनं कृतवन्तः । अत्र निमित्तमाह- **अवितृप्ताक्षा** इति । तत्रापि निमित्तमाह- **अद्भुतेति** । अद्भुतं= अन्यत्र क्वाप्यलब्धं, दर्शनं ईदृशसौन्दर्याव-लोकनं यस्य तम्, केनाप्यलब्धसौन्दर्योपेतमित्यर्थः ॥ ५ ॥

आगतानां देवेशानां सेवामाह- **स्वर्गेति** ।

**स्वर्गोद्यानोद्भवैर्माल्यैश्छादयन्तो यदूत्तमम् ।**

**गीर्भिश्चित्रपदार्थाभिस्तुष्टुवुर्जगदीश्वरम् ॥ ६ ॥**

चित्राणि = विविधार्थप्रदानि पदानि अर्थाश्च लोकोत्कृष्टः यासां ताभिः **गीर्भिः** वचोभिः तुष्टुवुः ॥ ६ ॥

**देवा ऊचुः-**

**नताः स्म ते नाथ पदारविन्दं बुद्धीन्द्रियप्राणमनोवचोभिः ।**

**यच्चिन्त्यतेऽन्तर्हृदि भावयुक्तैर्मुमुक्षुभिः कर्ममयोरुपाशात् ॥ ७ ॥**

**भावयुक्तैः** भक्तिसम्पन्नैः चेतनैः, **बुद्धीन्द्रियप्राणमनोवचोभिः** सर्वेन्द्रियव्यापारैः सह सर्वेन्द्रियव्यापारान् कृत्वा इत्यर्थः । बुद्धीन्द्रियदेवैरिति वा । **कर्ममयोरुपाशात्** प्रारब्धादपि **मुमुक्षुभिर्यच्चिन्त्यते** तत् **पदारविन्दं नताः स्म** ॥ ७ ॥

श्रीकृष्णस्य सर्वशक्तिसम्पन्नत्वं सर्वदोषविरोधित्वं स्वरूपं स्तुवन्ति- **त्वं मायेति** ।

**त्वं मायया त्रिगुणयाऽऽत्मनि दुर्विभाव्यं व्यक्तं सृजस्यवसि लुम्पसि तद्गुणस्थः ।**

**नैतैर्भवानजित कर्मभिरज्यते वै यः स्वे सुखेऽव्यवहितेऽभिरतोऽनवद्यः ॥ ८ ॥**

हे श्रीकृष्ण ! **त्वं** पुरुषरूपः सन् त्रयो गुणाः सत्वादयो यस्याः तया **मायया** चेतनाचेतनप्रकृत्या **आत्मनि** स्वाधारे **दुर्विभाव्यं** चिन्तयितुमशक्यं तत्वदेवैः स्वतः स्रष्टुमशक्यमित्यर्थः । **व्यक्तं** ब्रह्माण्डम् **आत्मनि** स्वाधारे **सृजसि** । **तद्गुणस्थः** तत्र नियामकः सन् **अवसि** । **एतैः** सृष्ट्यादिकर्मभिः **हे अजित !** केनाप्यवशीकृत ! **भवान् नाज्यते** न बध्यते । श्रमचिन्तादिमान् न भवति । चिन्ताद्यभावे कारणमाह- **यः स्वे सुख इति** । यः प्रकाशरूपः । अतः **अनवद्यः** अज्ञानादिचिन्ताकारणविरोधिस्वभावः । **अव्यवहिते** अप्रतिबद्धे नित्यम् अनुभूयमाने **स्वे** स्वतः सिद्धे नतु कारणप्राप्येति भावः । **सुखे** पूर्णानन्दे **अभिरतः** सृष्ट्यादिलक्षणक्रीडावान् । असर्वज्ञेन

फलार्थं क्रियमाणे चिन्तादिसम्भवः । सर्वशक्त्युपेतेन सर्वज्ञेन स्वानन्दोद्रेकात् क्रियमाणे न चिन्तादिसम्भव इति भावः[1] ॥ ८ ॥

तव कल्याणगुणानुसन्धानमेव सर्वदोषनिवृत्तिलक्षणशुद्धिप्रदमिति स्तुवन्ति- **शुद्धिर्नृणामिति** ।

**शुद्धिर्नृणां न हि तथेड्य दुराशयानां विद्याश्रुताध्ययनदानतपःक्रियाभिः ।**
**सत्वात्मनामृषभ ते यशसि प्रवृद्धसच्छ्रद्धया श्रवणसंभृतया यथा स्यात् ॥ ९ ॥**

**ईड्य** ! स्तुत्य ! सर्वोत्कर्षसम्पन्नत्वादिति भावः । **दुराशयानां** 'कर्मभिः सर्वाणि सौख्यानि भवन्ति' इति दुष्टबुद्धीनां विद्या= आपाततः धर्माधर्मज्ञानं, श्रुतं= धर्मशास्त्रश्रवणं वेदाङ्गश्रवणं वा अध्ययनं= वेदपाठः, तपः= कृच्छ्रचान्द्रायणादिक्रियाः नित्यनैमित्तकयागादिक्रियाः ताभिः शुद्धिः सम्यग्ज्ञानप्रतिबन्धकपापनिवृत्तिः **तथा** न **हि** । किञ्चिच्छुद्धिरस्तीति भावः । **हे ऋषभ** ! सर्वचेतनाचेतनोत्कृष्ट ! **सत्वात्मनां** सात्विकस्वभावानां **ते यशसि** यथायथा तदेव श्रवणेन= वैष्णवशास्त्रश्रवणेन **सम्भृतया** सम्पन्नया **सच्छ्रद्धया** 'परदेवताऽस्ति, मम तेनैव सौख्यम्' इति स्थिरबुद्ध्या तत्सहितभक्त्या **यथा शुद्धिः** सर्वपापनिवृत्तिः **स्यात्** ॥ ९ ॥

**स्यान्नस्तवांघ्रिरशुभाशयधूमकेतुः क्षेमाय यो मुनिभिरार्द्रहृदोह्यमानः ।**
**यः सात्वतैः[2] समविभूतिभिरात्मविद्धिर्व्यूह्यार्चितः सवनशः समविक्रमैश्च ॥ १०**

**सात्वतैः** सात्विकस्वभावैः सत्वगुणप्राप्तव्यापारवद्भिरिति वा **आत्मविद्भिः** गुणपूर्णो भगवान् **अर्चितः आर्द्रहृदा** प्रसन्नचित्तेन **यः** त्वं **ऊह्यमानः** ध्येयतया त्वां

---

[1] 'यः प्रकाशरूपः' इति भागवततात्पर्यवचनम् एतच्छ्लोकव्याख्यानत्वेन स्वीकृतम् । अन्यैः पुनः दशमश्लोकव्याख्यानत्वेन । ते च 'समविक्रमैर्यः' इति दशमश्लोके पाठान्तरं स्वीकृत्य तत्र तृतीयस्य यकारस्य अर्थः दुर्ज्ञेय इत्यतस्तात्पर्यवचनमिति व्याख्यान्ति । 'समविक्रमैश्च' इति प्राचीनसम्मतः पाठः । [2] 'सात्त्विकैः' इति पाठान्तरम् ।

जानद्भिः अर्चकैः **सवनशः** तत्तद्विहितसमयेषु **समविभूतिभिः** समाः विभूतयो येषां ते तैः अणिमाद्यैश्वर्येण समानैरित्यर्थः । **समविक्रमैः** समानपराक्रमोपेतैः वासुदेवादिभिः **व्यूह्य** परितः आवरणं सम्पाद्य **यः** भगवान् **अर्चितः ।** यस्त्वं अशुभाशयानाम्= असुराणां धूमकेतुरिव वह्निरिव नाशकः । तस्य **तव अङ्घ्रिः नः क्षेमाय** स्यात् । अर्चितत्वादिकं अङ्घ्रिविशेषणं वा ॥ १० ॥

**यश्चिन्त्यते प्रयतपाणिभिरध्वराग्नौ त्रय्या निरुक्तविधिना स्वहविर्गृहीत्वा ।**
**अध्यात्मयोग उत योगिभिरात्ममायाजिज्ञासुभिः परमभागवतैः परीष्टः ॥ ११ ॥**

**यो** भवान् **निरुक्तविधिना** यागदेवताहविःक्रमादिविधानेन **स्वहविः** वैष्णवं हविः क्रमादिविधानेन **गृहीत्वा प्रयतपाणिभिः** आराधनोद्युक्तैः **त्रय्या** वेदमन्त्रेण **अध्वराग्नौ यः चिन्त्यते** मन्त्रार्थत्वेन यः चिन्त्यत इत्यर्थः । **उत कर्मयोगिभिः** अन्यैः योगिभिः ज्ञानयोगिभिः **परमभागवतैः** इति भावः । आत्मनः= पूर्णगुणस्य मायाः= अद्भुतशक्तयः ताः **जिज्ञासुभिः** अध्यात्मपरमात्मविषयकः योगः ध्यानविशेषः, तस्मिन् ध्यानविशेष-सिद्ध्यर्थं इत्यर्थः । **परीष्टः** सुपूजितः तस्य तव अङ्घ्रिः नः क्षेमाय स्यात् ॥ ११ ॥

**पर्युष्टयाऽपतितया वनमालयेयं संस्पर्धिनी भगवती प्रतिपक्षवच्छ्रीः ।**
**यः सुप्रणीतममुयाऽर्हणमाददानो भूयात् सदाऽङ्घ्रिरशुभाशयधूमकेतुः ॥ १२ ॥**

**इयं** वक्षःस्थिता **भगवती** सर्वोत्कृष्टा **पतितया** वक्षसि (अन्यत्र) अपतितया (वा,) **पर्युष्टया** वर्जितम्लानभागया महासौरभ्योपेतयेति भावः । **वनमालया** वैजयन्त्या प्रतिपक्षे इव= सुस्पर्धतीव स्थितया **श्रीः अमुया सुप्रणीतं** भक्त्या सर्वपूजाद्रव्यैश्च सम्यक् कृतम् **अर्हणम्** आदरतो स्वीकुर्वतः तव ज्ञानरूपः **अङ्घ्रिः** सः अशुभाशयानां=

बन्धकप्राकृतमनसां **धूमकेतुः** इव धूमध्वज इव स्यात् । त्वद्भक्तानां दुःखोपादानान्तः-करणनाशकः स्यादित्यर्थः ॥ १२ ॥

**केतुस्त्रिविक्रमसतस्त्रिपतत्पताको यस्ते भयाभयकरोऽसुरदेवचम्वोः ।**
**स्वर्गाय साधुषु खलेष्वितराय भूम्नः पादः पुनातु भगवन् जगतामघं नः ॥ १३ ॥**

**त्रिविक्रमसतः** त्रिलोकेषु विषये विक्रमः लोकत्रयविजयार्थमितिभावः । विक्रमः पादविन्यासो वा, यस्य सः **त्रिविक्रमसतः** त्रिविक्रमावतारेण स्थितस्येत्यर्थः । ते **त्रिपतत्पताकः** त्रयः वेदा एव पतन्तः केतुसम्बन्धे सत्येव इतस्ततः चरन्तः, कर्मदेवतानामपि बोधकत्वादिति भावः । पताका केतुनिबद्धकौशेयस्वर्णवस्तुविशेषः यस्य सः । केतुः दीर्घपृथुर्यष्टिः ध्वज इत्यर्थः । विजयलाञ्च्छनमिति भावः । तव **पादः** असुरवधूनां भयकरः, **जगतां** मध्ये **भूम्नः** पूर्णस्य सर्वोत्कृष्टस्येत्यर्थः । अनुभावस्य अनुपयोगात् भवितृग्रहणं इति भावः[1] । तव पादः **साधुषु** विषये **स्वर्गाय** नित्यसौख्याय भवति, **खलेषु** विषये **इतराय** नित्यनिरयाय भक्तिद्वेषाभ्यामिति भावः । एतादृशः पादः **नः अघं** प्रारब्धलक्षणं **पुनातु** परिहरतु त्वत्पादजन्या विरजा प्रारब्ध-निरसनी किल, किमु तव पाद इति भावः ॥ १३ ॥

**नस्योतगाव इव यस्य वशे भवन्ति देवाश्च यस्तनुभृदायुषि रज्यमनाः ।**
**कालस्य ते प्रकृतिपूरुषयोः परस्य शं नस्तनोतु चरणः पुरुषोत्तमस्य ॥ १४**

**नसि** नासाग्रे रज्वा प्रोताः ते अश्वाश्च गावश्च भारवाहकाः इव देवा **यस्** य तव **वशे भवन्ति,** यः भवान् तनुभृताम् आयुषि यथासम्भवं शतवर्षलक्षणे **रज्यमानः** सम्बद्धः । सचासौ अश्च पूर्णगुणः । देहे स्वावस्थानेन शतायुस्सम्पदक इत्यर्थः ।

---

[1] अनुभावस्यानुपयोगादिति वाक्यस्य, अत्र पूर्णत्वार्थकस्य भूमन्पदस्य भवितृप्राधान्यनिर्देशः । अन्यथा अन्वयो न युज्यत इति अभिप्रायः स्यात् ।

षडूर्मिरहितश्चेति भावः । तस्य **कालस्य** असुरसंहर्तुः । अथवा कालदेवतायाः प्रकृतेः पुरुषस्य= विरिञ्चस्य एभ्यः सकाशात् **परस्य** पूर्णस्य विलक्षणस्य वा स्वतः अद्भुतशक्त्युपेतत्वादिति भावः । **पुरुषोत्तमस्य** स्वदेहस्थतत्वदेवानां उत्तमस्य= शक्तिप्रेरकस्येत्यर्थः । पुरुषश्चासौ उत्तमश्च तस्येति वा । तव **चरणः नः शं** सुखम् अभीष्टं **तनोतु** ॥ १४ ॥

पुरुषोत्तमत्वं परत्वं च विवृणोति- **अस्यासीति** ।

**अस्यासि हेतुरुदयस्थितिसंयमानामव्यक्तजीवमहतामपि कालमात्रः ।**
**सोऽयं त्रिनाभिरखिलापचये प्रवृत्तः कालो गभीररय उत्तमपूरुषस्त्वम् ॥ १५ ॥**

त्वं **कालमात्रः** कालानां उत्पत्तिकालस्थितिकालादीनां निर्माता, उत्पत्तिकालादि-विभागज्ञाता च । तन्त्रेण अर्थद्वयं सिद्ध्यति । आवृत्त्या वा । मा निर्माणे, माङ् माने इति धातुव्याख्यानात् । त्राता च कालमात्रः कालानाम् उत्पत्तिः **अस्य** ब्रह्माण्डस्य तदन्तर्गतस्य विश्वस्य उदयादीनां **हेतुरसि** । अण्डाद्बहिस्थितानामपि त्वमेव कारणमित्याह- **अव्यक्तेति** । अव्यक्तं= प्रकृतिः तन्नियामकादेवता, जीवः= माया देवता, महान्= महत्तत्वं तन्नियामकदेवता । 'महताम्' इति बहुवचनेन अहङ्कारादयो ग्राह्याः । एतेषां देवादीनामपि यथासम्भवं उदयादिकर्ताऽसि । **गभीररयः** अज्ञातवेग इत्यर्थः । कालचक्रस्य नाभिस्थानमाह- **त्रिनाभिरिति** । **त्रिनाभिः** त्रिः चातुर्मास्यत्रयं सृष्ट्यादिकालत्रयं नाभिर्यस्य सः । अखिलानां अपचये नाशार्थं **प्रवृत्तः** यः **कालः** दुर्गादिः, तथाऽपि[1] उदयादिकर्ता असि । अतः **त्वम् उत्तमपूरुषः** परश्च असि ॥ १५ ॥

[1] 'तस्यापि' इति पाठः सम्भाव्यते ।

यद्यपि ब्रह्मा पुरुषादिरूपैः महदादिसृष्टिं करोति । तथापि भगवानेव सर्वस्वतन्त्र-कारणमिति स्तुवन्ति- **त्वत्त इति ।**

**त्वत्तः प्रधानमधिकृत्य पुमान् स्ववीर्यं धत्ते महान्तमिव गर्भममोघवीर्यः ।**
**सोऽयं त्वयाऽनुगत आत्मन आण्डकोशं हैमं ससर्ज बहिरावरणैरुपेतम् ॥ १६ ॥**

**त्वत्तः** नारायणांशात् पुरुषात् जातः **पुमान्** ब्रह्मा **अमोघवीर्यः प्रधानम् अधिकृत्य** प्रधाने गायत्र्यामित्यर्थः **स्ववीर्यं धत्ते इव ।** अन्तर्यामिणः स्वातन्त्र्यात्, अस्य अस्वातन्त्र्यादिव शब्दः । **प्रधानं** महान्तं **गर्भं** सुषुवे **सः** महान् **त्वया अनुगतः** त्वया प्रविष्टः **आत्मनः** स्थानं **हैमम् आण्डकोशं ससर्ज । बहिः** अण्डसंश्लिष्टतया **सप्तावरणैरुपेतं** चकार । गुणत्रयम् एकं महान् अहम् अबादयश्चत्वारः एवमावरणानि । विशेषलक्षणा पृथिवी अबात्मिका आवरणरूपा वा, अतः सङ्ख्यानुक्तिः[1] । तस्मात् कारणेषु स्थित्वा पृथक् च स्थित्वा विविधरूपैः सर्वस्वतन्त्रकर्ता त्वमेवेति भावः ॥ १६ ॥

**तत् तस्थुषश्च जगतश्च भवानधीशो यन्माययोत्थगुणविक्रिययोपनीतान् ।**
**अर्थान् जुषन्नपि हृषीकपते न लिप्तो येऽन्ये स्वतः परिहृतानपि बिभ्यति स्म ॥**
**॥ १७ ॥**

**तत्** तस्मात् अव्यक्तगुणकालमहदादीनामपि त्वदधीनत्वात् इत्यर्थः । **भवान् तस्थुषः** स्थावरस्य **जगतः** जङ्गमस्य **अधीशः** ईशानामपि ईशः । त्वं सर्वगुणपूर्णत्वा-न्निर्दोषश्चेत्याह- **यन्माययेति ।** यस्य तव मायया= त्वदधीनप्रकृत्येत्यर्थः, उत्थाः=

[1] अत्र विवक्षाविशेषेण नवत्वसङ्ख्याऽपि भवति, सप्तत्वसङ्ख्या वा, अत्यन्तनिकटवर्तिजलरूपावरणविवक्षया एकत्वसङ्ख्याऽपि सम्भवति । अतः विशिष्य सङ्ख्यानुक्तिरिति भावः । त्रिगुणानां प्रकृत्यात्मकत्वेन एकत्वेन ग्रहणे सप्तत्वसङ्ख्या । पृथग्ग्रहणे नवत्वसङ्ख्या । ब्रह्माण्डाद् द्विगुणाधिकपरिमाणरूपविजातीयपरिमाणवत्त्वविवक्षया पृथिव्यात्मकावरणस्य कीर्तनम् । वामनवामपादनखसंसर्गित्वरूपविशेषविवक्षया जलरूपावरणस्य कीर्तनमिति ध्येयम् ।

विकृताः ये गुणाः रजःप्रभृतयः तेषां विक्रिया= विकारः कार्याणीत्यर्थः । तया उपनीतान् गुणकार्यैर्जातानित्यर्थः । **अर्थान्** सुवर्णप्रमदादीन् शब्दस्पर्शादीन् वा **जुषन्** अनुभवन्नित्यर्थः । **हृषीकपते** हे हृषीकेश ! सर्वेन्द्रियज्ञानक्रियाशक्तिप्रेरक इत्यर्थः । **भवान् न लिप्तः** विषयकृतदोषरहितः । विषयलेपाभावः न सर्वसाधारण इति स्तौति- **येऽन्य इति । अन्ये** विषयबद्धेभ्यः अन्ये **ये** च परमात्मसमाधिसम्पन्नाः उन्मूलित- विषयवासना इति भावः । **स्वतः** स्वेनैव **परिहृतान्** तिरस्कृतान् विषयान् अन्येषु मोहादिसम्पादकान् दृष्ट्वा इति **बिभ्यति स्म** । विषयपरित्यागवतामपि विषया भयजनकाः, किमुत विषयसेवकानामिति भावः । तस्मादसङ्गत्वं गुणः तवैवेति भावः ॥ १७ ॥

श्रीकृष्णस्य विषयनिस्पृहत्वं विवृणोति- **स्मायावलोकेति ।**

**स्मायावलोकलवदर्शितभावहारिभ्रूमण्डलप्रहितसौरतमन्त्रशौण्डैः ।**
**पत्न्यस्तु षोडशसहस्रमनङ्गबाणैर्यस्येन्द्रियं विमथितुं कुहकैर्न शेकुः ॥ १८ ॥**

विस्मयः= मन्दहासः, तेन सहितः अवलोकः, तस्य लवेन सह दर्शितः भावः= शृङ्गारचेष्टा तेन हारि= मनोहरं भ्रूमण्डलं, तेन सह प्रहितः= प्रयुक्तः सौरतः= सुरतसम्बन्धि यः मन्त्रः= स्वप्रयोजनानुकूलरहस्यवचनं, प्रयोजनसाधकानुसन्धानं वा, तेन शौण्डैः= जनसाधने कुशलैः समर्थैरित्यर्थः । अनङ्गस्य बाणैरिव स्थितैः । मन्मथसहकारीति भावः । करणैः यौवनसौन्दर्यमधुरवागादिभिः वशीकरणसाधनैः **पत्न्यः षोडशसहस्रम्** ॥ १८ ॥

कल्याणगुणरूप इति स्तुवन्ति- **बिभ्रदिति ।**

**बिभ्रत् तवामृतकथोदवहास्त्रिलोक्याः पादावनेजसरितः शमलानि हन्तुम् ।**
**आनुश्रवं श्रुतिभिरङ्घ्रिजमङ्गसङ्गैस्तीर्थद्वयं शुचिषदस्तदुपस्पृशन्ति ॥ १९ ॥**

**त्रिलोक्याः बिभ्रत्** त्रिलोकीं बिभ्रतः सर्वं बिभ्रत इत्यर्थः । **शुचिषदः** शुचित्वेन स्थितस्य शुचौ सूर्ये विद्यमानस्येति वा । **तव** अमृतवत् विद्यमानाः कथाः= रसज्ञाना-ममृतवत् स्वादुभूता कथाः त्वदुत्कर्षप्रतिपादकग्रन्थाः ता एव उदवहाः उदानां= उदकानां वहन्तीति उदवहाः नद्यः तव पादावनेजः= पादप्रक्षाळनं तेन जाताः सरितः । यत् तीर्थसञ्ज्ञं द्वयं तत् **आनुश्रवं** श्रुत्यादिप्रसिद्धम् अभीष्टदातृत्वेनेति भावः । ते मुमुक्षवः **त्रिलोक्याः शमळानि** पापकानि **निहन्तुं** परिहर्तुं तत्र तीर्थद्वये आनुश्रवं, श्रवः कीर्तिः, तदनुसृत्य वर्तमानम् आनुश्रवं कीर्तिप्रतिपादकमित्यर्थः । सम्यक् कीर्तिप्रतिपादकम् आनुश्रवादि भारतादिशास्त्रं **श्रुतिभिः** श्रवणैः **उपस्पृशन्ति** सम्यक् शृण्वन्तीत्यर्थः । **अङ्घ्रिजं** तीर्थं **अङ्गसङ्गैः** शिरःस्नानादिभिः उपस्पृशन्ति ॥ १९ ॥

**बादरायणिरुवाच-**

**इत्यभिष्टूय विबुधैः सेशः शतधृतिर्हरिम्**[1] **।**

**प्रत्यभाषत गोविन्दं प्रणम्याम्बरमाश्रितः ॥ २० ॥**

**शतधृतिः** ब्रह्मा, **विबुधैः** सह **सेशः** महेशेन सहितः । अम्बरे स्थितः **प्रणम्य इति अभिष्टूय** च **गोविन्दं प्रत्यभाषत ।**

**ब्रह्मोवाच-**

**भूमेर्भारावतराय पुरा विज्ञापितः प्रभो ।**

**त्वमस्माभिरशेषात्मंस्तत् तथैवोपपादितम् ॥ २१ ॥**

यदस्माकं विज्ञापनं **तत्** असुरनिग्रहादिविषयं **तथैव** यथा भक्तानां सौख्यं स्यात् तथैव उपपादितं सम्यक्कृतम् ॥ २१ ॥

---

[1] 'सत्यधृतिर्हरिम्' इति पाठान्तरम् ।

कृष्णेन कृतं देवकार्यं विविच्याह- **धर्मश्चेति** ।

**धर्मश्च स्थापितः सत्सु स त्वं साधुषु वै त्वया ।**
**कीर्तिश्च दिक्षु विक्षिप्ता सर्वलोकमलापहा ॥ २२ ॥**

**साधुषु** सात्विकस्वभावेषु **सत्सु** भक्त्यादिगुणसम्पन्नेषु **धर्मः** निवृत्तिलक्षणो धर्मः श्रीहरिकथाश्रवणादिलक्षणो धर्मो वा **स्थापितः** । **सः त्वं** अस्माभिः अवतारार्थं प्रार्थितः त्वम् ॥ २२ ॥

**अवतीर्य यदोर्वंशे बिभ्रद्रूपमनुत्तमम् ।**
**कर्माण्युद्दामवृत्तानि हिताय जगतोऽकृथाः ॥ २३ ॥**

**यानि ते चरितानीश मनुष्याः साधवः कलौ ।**
**शृण्वन्तः कीर्तयन्तश्च तरिष्यन्त्यञ्जसा तमः ॥ २४ ॥**

**अनुत्तमं** स्वस्मादुत्तमरहितम् **रूपं** ज्ञानानन्दात्मकश्यामसुन्दरीं मूर्तिं **बिभ्रत्** सन् **अवतीर्य** अभिव्यक्तः सन् उद्दाम यथा तथा वृत्तानि गम्भीरं प्रवृत्तानि **कर्माणि अकृथाः** । देवकार्यार्थं कृतानि **यानि चरितानि कीर्तयन्तः तमः** आनन्दावरकम् अज्ञानं **तरिष्यन्ति** । **अञ्जसा** महाभक्त्या ॥ २४ ॥

एवं स्तुत्वा इदानीं स्वमनोगतं स्वलोकं प्रति स्वाम्यागमनमुद्दिश्य विज्ञापयन्ति- **यदुवंशे** इति ।

**यदुवंशेऽवतीर्णस्य भवतः पुरुषोत्तम ।**
**शरच्छतं व्यतीयाय पञ्चविंशाधिकं प्रभो ॥ २५ ॥**

**पञ्चविंशाधिकं** पञ्चविंशसङ्ख्याकऋतुभिः अधिकं शरदां शतं **व्यतीयाय** ॥ २५ ॥

आगमनविळम्बकारणं देवकार्यशेषः नास्तीति वदन्ति- **नाधुनेति** ।

**नाधुना तेऽखिलाधार देवकार्येऽवशेषितम् ।**
**कुलं च विप्रशापेन नष्टप्रायमभूदिदम् ॥ २६ ॥**

**ततः स्वधाम परमं विशस्व यदि मन्यसे ।**
**सलोकान् लोकपालान् नः पाहि वैकुण्ठ किङ्करान् ॥ २७ ॥**

अथवा इदानीं **देवकार्ये अवशेषितं** शेषः **न** अस्ति । कलौ देवांशानाम् अवस्थानं विघटनीयं चेत् अत्र उपायान्तरचिन्तापि न कर्तव्या इत्याह- **कुलं चेति** ॥ **परमं धाम** वैकुण्ठं **मन्यसे यदि** तव गमिष्यामीति बुद्धिरस्ति चेत् **विशस्व** । तव भूमिपरित्यागेन अस्माकं महानतिशय इत्याह- **सलोकानिति** । हे **वैकुण्ठ** ! **नः पाहि** ॥ २७ ॥

यदि मन्यसे इत्यस्य उत्तरमाह- **अवधारितमिति** ।

**श्रीभगवानुवाच-**
**अवधारितमेतन्मे यदात्थ विबुधेश्वर ।**
**कृतं वः कार्यमखिलं भूमेर्भारोऽवतारितः ॥ २८ ॥**

**हे विबुधेश्वर** ! त्वं **यत्** कर्तव्यम् **आत्थ** वर्णितवान् **एतत्** मयाऽपि **अवधारितं** निश्चितम् ॥ २८ ॥

तर्हि कालविळम्बे किं कारणम्? तत्राह- **तदिदमिति** ।

**तदिदं यादवकुलं वीर्यशौर्यश्रियोद्धतम् ।**
**लोकान् जिघृक्षत्यूर्ध्वं मे वेलामिव महार्णवः ॥ २९ ॥**

**उपसंहृत्य दृप्तानां यदूनां विपुलं कुलम् ।**
**गन्तास्म्यनेन लोकोऽयमुल्बणेन विनङ्क्ष्यति ॥ ३० ॥**

**यादवकुलं वेळां** मर्यादार्थं कृतसैकतसेतुं **महार्णव** इव, **मे ऊर्ध्वं लोकान्** सर्वां भुवं **जिघृक्षति** ग्रहीतुमिच्छति । द्वारवत्यामेव न स्थास्य इति भावः । **यादवकुलं मे ऊर्ध्वं** लोकं **जिघृक्षति** प्राप्तुमिच्छति इति वा । अतः **यदूनां विपुलं** समृद्धं **कुलं उपसंहृत्य** मे ऊर्ध्वं लोकं वैकुण्ठं **गन्तास्मि ।** अथवा यदुकुलोपसंहारो न क्रियते तदा भूलोकस्य नाश इत्याह- **अनेन लोक** इति **अनेन** यदुकुलेन । **अनेन** द्विजशापेन **उल्बणेन अयं लोकः** यदुसमुदायः **विनश्यति** ॥ ३० ॥

यदुकुलोपसंहारं कृत्वा अनन्तरं किं करिष्यति ? इति जिज्ञासायामाह- **इदानी-मिति ।**

**इदानीं नाश आरब्धः कुलस्य द्विजशापजः ।**
**यास्यामि भवनं ब्रह्मन्नेतदन्ते तवानघ ॥ ३१ ॥**

**एतदन्ते हे ब्रह्मन्** ते भवनं च प्रतियास्यामि ॥ ३१ ॥

**श्रीशुक उवाच-**
**इत्युक्तो लोकनाथेन स्वयम्भूः प्रणिपत्य तम् ।**
**सह देवगणैर्देवः स्वं धाम समपद्यत ॥ ३२ ॥**

**अथ तस्यां महोत्पातान् द्वारवत्यां समुत्थितान् ।**

**विलोक्य भगवानाह यदुवृद्धान् समागतान् ॥ ३३ ॥**

**श्रीभगवानुवाच-**

**एते वै सुमहोत्पाता ह्युत्तिष्ठन्तीह सर्वशः ।**

**शापश्च नः कुलस्यासीद् ब्राह्मणेभ्यो दुरत्ययः ॥ ३४ ॥**

**न वस्तव्यमिहास्माभिर्जिजीविषुभिरार्यकाः ।**

**प्रभासं सुमहापुण्यं यास्यामोऽद्यैव मा चिरम् ॥ ३५ ॥**

लोकानां नाथेन= श्रीकृष्णेन । **तस्यां** श्रीकृष्णस्य परित्यागे बुद्धिविषयायां द्वारवत्याम् **सर्वशः** सर्वदिक्षु **महोत्पाताः** नानाविधा इति भावः । **उत्तिष्ठन्ति** भवन्ति । **हे आर्यकाः !** हे वृद्धाः ! **चिरं मा** विलम्बो मास्तु, **यास्यामः प्रभासं** प्रति ॥ ३५ ॥

शीघ्रगमने प्ररोचनामुत्पादयति- **यत्रेति ।**

**यत्र स्नात्वा दक्षशापात् गृहीतो यक्ष्मणोडुराट् ।**

**विमुक्तःकिल्बिषात्सद्यो भेजे भूयःकलोदयम् ॥ ३६ ॥**

**उडुराट्** चन्द्रः **दक्षशापात्** प्रारब्धाच्च प्राप्तेन **यक्ष्मणा** श्वेतेन क्षयेन रोगेण **गृहीतः यत्र** प्रभासस्थतीर्थे **स्नात्वा किल्बिषात् विमुक्तः कलोदयं** कलापूर्तिं च **भेजे** ॥ ३८ ॥

**वयं च तस्मिन्नाप्लुत्य तर्पयित्वा पितॄन् सुरान् ।**

**भोजयित्वोशिजो विप्रान् नानागुणवताऽन्धसा ॥ ३९ ॥**

**तेषु दानानि पात्रेषु श्रद्धयाऽर्प्य महान्ति वै ।**

**व्रजिनानि तरिष्यामो दानैर्नौभिरिवार्णवम् ॥ ३८ ॥**

**श्रीशुक उवाच-**

**एवं भगवताऽदिष्टा यादवाः कुलनन्दन ।**

**गन्तुं कृतधियस्तीर्थं स्यन्दनान् समयूयुजन् ॥ ३९ ॥**

**तन्निरीक्ष्योद्धवो राजन् श्रुत्वा भगवतोदितम् ।**

**दृष्ट्वाऽरिष्टानि घोराणि नित्यं कृष्णमनुव्रतः ॥ ४० ॥**

**विविक्त उपसंगम्य जगतामीश्वरेश्वरम् ।**

**प्रणम्य शिरसा पादौ प्राञ्जलिस्तमभाषत ॥ ४१ ॥**

नानागुणाः= विविधरसाः तद्युक्तेन, **अन्धसा** अन्नेन अर्थिनः= याचकान् **भोजयित्वा । तेषु पात्रेषु** ब्राह्मलक्षणपात्रेषु **दानानि अर्प्य** समर्प्य । **समयूयुजन्** अश्वैः क्वचित् बलीवर्दैश्च स्यन्दनानि अयोजयन् । स्यन्दनयुगेषु अश्वादीन् । सोपस्करार्थान् केषुचित् स्यन्दनेषु निदधुरिति भावः । **विविक्ते** एकान्ते ॥ ४१ ॥

**उद्धव उवाच-**

**देवदेवेश योगेश पुण्यश्रवणकीर्तन ।**

**संहृत्यैतत्कुलं नूनं लोकं सम्पद्यते भवान् ।**

**विप्रशापं समर्थोऽपि प्रत्यहन्न यदीश्वरः ॥ ४२ ॥**

पुण्यकरं श्रवणं यस्य तत् पुण्यश्रवणं कीर्तनं यस्य सः । ईश्वरोऽपि **भवान् विप्रशापं न प्रत्यहन्** अपरिहरन् वर्तसे इति यत् तेन भवान् लोकं वैकुण्ठं सम्पद्यते इति श्रुतं मम निश्चयः ॥ ४२ ॥

**नाहं तवाङ्घ्रिकमलं क्षणार्धमपि केशव ।**
**त्यक्तुं समुत्सहे नाथ स्वधाम नय मामपि ॥ ४३ ॥**

**तव विक्रीडितं कृष्ण नृणां परममङ्गळम् ।**
**कर्णपीयूषमासाद्य त्यजत्यन्यस्पृहां जनः ॥ ४४ ॥**

**शय्याटनासनस्थानस्नानक्रीडाशनादिषु ।**
**कथं त्वां प्रियमात्मानं वयं भक्तास्त्यजेमहि ॥ ४५ ॥**

**तवाङ्घ्रिकमलं त्यक्तुं न समुत्सहे** इत्युक्तम्, ऐश्वर्यसमृद्धेः त्यागासम्भवः इत्यत आह- **तव विक्रीडितमिति । तव विक्रीडितं** विश्वस्य सृष्टिस्थित्यादिक्रीडालक्षणं नवनीतचौर्यादि क्रीडालक्षणं वा । **कर्णपीयूषं** श्रवणमधुरं **नृणां** परममङ्गलकरम् **आसाद्य** प्राप्य तव चरितं श्रुत्वेत्यर्थः । अतः साधुलोकः **अन्यस्पृहां** देहार्थाद्यासक्तिं **त्यजति ।** साक्षात्तव सेवकाः वयम् अन्यस्पृहारहिता इति किमु वक्तव्यमिति भावः । त्वयि बद्धाभ्यासाच्च त्वां त्यक्तुं न शक्नुम इत्याह- **शय्यासनेति ।** स्थानं= प्रासादादिषु स्थितिः । येषु त्वामविहाय स्थिताः **भक्ताः वयम् आत्मानं** अन्तर्यामिमूर्तिभिः देहेन्द्रियादिपोषकं अतः **प्रियं** सर्वस्मात् प्रियं **कथं त्यजेमहि ?** ॥ ४५ ॥

ननु मायाजयाभावात् कथं मया सहागमनमित्याशङ्क्याह- **त्वयोपभुक्तेति ।**

**त्वयोपभुक्तस्रग्गन्धवासोलङ्कारचर्चिताः ।**
**उच्छिष्टभोजिनो दासास्तव मायां जयेमहि ॥ ४६ ॥**

स्रग्गन्धादिभिरलङ्कारैः भूषणैः **चर्चिताः** यथायोग्यं अलङ्कृताः तव उच्छिष्टभोजनाहाः **दासाः** तव अधीनां **मायां** अविद्यां **जयेमहि** वयं जिताः ॥

अथापि संन्यासिभिः प्राप्या विष्णुलोकाः ऐश्वर्यादिविषयभोक्तृभिः भवद्भिः कथं प्राप्याः ? इत्याशङ्क्याह- **वातरशना** इति ।

**ऋषयो वातरशना श्रमणा ऊर्ध्वमन्थिनः ।**
**ब्रह्माख्यं धाम ते यान्ति शान्ताः संन्यासिनोऽमलाः ॥ ४७ ॥**

**वयं त्विह महायोगिन् भ्रमन्तः कर्मवर्त्मसु ।**
**त्वद्वार्तया तरिष्यामस्तावकैर्दुस्तरं तमः ॥ ४८ ॥**

**स्मरन्तः कीर्तयन्तस्ते कृतानि गदितानि च ।**
**गत्युत्स्मितेक्षणाकेलीः[1] यन्नृलोकविडम्बनम् ॥ ४९ ॥**

वात एव रशना= कटिसूत्रं, रशनया च हीनाः इत्यर्थः । **श्रमणाः** भिक्षावृत्तयः **ऊर्ध्वमन्थिनः** गुह्येन्द्रियादिजयोपेताः, **सन्यासिनः** सम्यक् ममतादिपरित्यागवन्तः, **अमलाः** रागविषयादिदोषरहिताः **शान्ताः** परमात्मध्याने सक्ताः **महर्षयः ब्रह्माख्यं धाम** आश्रयन्ति इति यद्यपि । अथापि **इह** भूमौ कर्माणि वर्त्मानि= प्रापकाणि येषां तेषु देहेषु **भ्रमन्तः, वयन्तु तावकैः** त्वद्भक्तैः सहिताः **त्वद्वार्तया दुस्तरमपि तमः तरिष्यामः । ते** गतिः= मृगेन्द्रगमनं, वाऽन्यगमनं वा उत्स्मितं= हासः, ईक्षणं= दयावलोकनं, आकेलीः= बाल्ये यथेष्टं वनादिषु विहरणानि **नृलोकविडम्बनम्** अनुकरणं **यत्** तच्च उलूखलबन्धनादिकं **गदितानि** मधुरवचनानि कृताहिबन्धनादिपरिपालनादीनि **स्मरन्तः कीर्तयन्तश्च** एवं त्वद्वार्तया दुस्तरमपि तमोगुणं तरिष्यामः ॥ ४९ ॥

---

[1] 'गत्युत्स्मितेक्षणोत्केलिं' इति पाठान्तरम् ।

**श्रीशुक उवाच-**

**एवं विज्ञापितो राजन् भगवान् देवकीसुतः ।**

**एकान्तिनं प्रियं भृत्यमुद्धवं समभाषत ॥ ५० ॥**

**॥ इति श्रीमद्भागवते एकादशस्कन्धे षष्ठोऽध्यायः ॥**

**एकान्तिनं** एकान्तस्थमित्यर्थः । अथवा **एकान्तिनं** मुख्यप्रियम् । एकः सर्वोत्तमः इति अन्तः निर्णयः अस्य अस्तीति एकान्ती तं **उद्धवं समभाषत ॥** ५० ॥

॥ इति श्रीयादवेन्द्रयतिविरचिते एकादशस्कन्धव्याख्याने षष्ठोऽध्यायः ॥

# 7 | सप्तमोऽध्यायः

**श्रीभगवानुवाच-**

**यदात्थ मां महाभाग तच्चिकीर्षितमेव मे ।**

**ब्रह्मा भवो लोकपालाः सर्वे मामभिकाङ्क्षिणः ॥ १ ॥**

महान् परमात्मा भागः उपदेष्टव्यः यस्य सः । हे **महाभाग !** उद्धव ! **मां** प्रति- 'वैकुण्ठं प्रति गन्तुं तवोद्योग' इति **यद्** वचनम् **आत्थ तच्चिकीर्षितं** कर्तुमिष्टम् । तव सर्वत्रापि सौख्यसाम्यात् त्वम् अत्र कुतो न स्थास्यसि ? इत्याशङ्क्याह- **ब्रह्मेति ।** ब्रह्मादयः **सर्वेऽपि** देवाः **मां** स्वभवनं प्रत्यागन्तुम् **अभिकाङ्क्षिणः** अपेक्षन्ते ॥ १ ॥

अतः द्वारवत्याम् अवस्थानस्य कारणमपि नास्तीत्याह- **मयेति ।**

**मया निष्पादितं ह्यत्र देवकार्यमशेषतः ।**

**यदर्थमवतीर्णोऽहम् अंशेन ब्रह्मणाऽर्थितः ॥ २ ॥**

**कुलं वै शापनिर्दग्धं नङ्क्ष्यत्यन्योन्यविग्रहात् ।**

**समुद्रः सप्तमे ह्येनां पुरीं च प्लावयिष्यति ॥ ३ ॥**

**यर्ह्येवायं मया त्यक्तो लोकोऽयं नष्टमङ्गळः ।**

**भविष्यत्यचिरात् साधो कलिनाऽपि निराकृतः ॥ ४ ॥**

**न वस्तव्यं त्वयैवेह मया त्यक्ते महीतळे ।**

**जनोऽधर्मरुचिर्भद्र भविष्यति कलौ युगे ॥ ५ ॥**

**त्वं तु सर्वं परित्यज्य स्नेहं स्वजनबन्धनम् ।**

**मय्यावेश्य मनः सम्यक् समदृग् विचरस्व गाम् ॥ ६ ॥**

**यदर्थं** यद्देवकार्यं निष्पादयितुम् । **एनां** द्वारावतीम् । **प्लावयिष्यति** जलौघेन निमग्नां करिष्यति, मया परित्यागादिति भावः । **मया त्यक्तः अयं लोकः नष्टमङ्गलः** ऐश्वर्यधर्मज्ञानरहितः **भविष्यति । कलिनाऽपि निराकृतः** वशीकृतः भविष्यति । **मया त्यक्ते** इह द्वारावतीदेशे **त्वयाऽपि न वस्तव्यम् ।** एवं चेत् त्वया सह आगमिष्यामि इति बुद्धिं निवारयति- **त्वं तु सर्वमिति । गां विचरस्व ।** ननु कलिकाले अहं कथं स्थास्यामि ? इति चिन्तायामाह- **मय्यावेश्य मन इति ।** सर्वदेहानुबन्धिसमुदायं परित्यज्य तत्तत्स्नेहं च । स्नेहपरित्यागे कारणमाह- **स्वजनबन्धनम् ।** स्वजनैः सह बध्नातीति स्वजनबन्धनम् । विषरूपैः स्वजनैः सह अवस्थानं विरागज्ञानभक्तिविरोधीति भावः । **समदृक्** दुःख इव विषयसुखेऽपि उपादेयत्वबुद्धिरहित इत्यर्थः । वैषयिक-सुखस्य बहुदुःखानुबन्धित्वादिति भावः । अथवा परमात्मा सर्वावतारेषु सर्वैर्गुणैः सम इति बुद्धिमान् **गां विचरस्व ॥** ६ ॥

मानुषदेहान्नादिसम्बन्धेन प्राप्तं द्रविणवनितादिममताबुद्धिं परिहरन्नाह- **यदिद-मिति ।**

**यदिदं मनसा वाचा चक्षुर्भ्यां श्रवणादिभिः ।**

**नश्वरं गृह्यमाणं च विद्धि मायां मनोमयीम् ॥ ७ ॥**

**मनसा** सहितैः चक्षुरादीन्द्रियैः **गृह्यमाणं** विषयजातं, **वाचा** शब्देन **गृह्यमाणं** परोक्षं च स्वर्गादिकं **यदिदं** सर्वं **मनोमयीं** मन्मनःप्रधानां मम मनोऽनुसारिणीं **मायां** प्रकृतिं **विद्धि ।** प्रकृतिकर्तृकं विद्धि । कार्यकारणयोरभेदोक्तिः । अतो नश्वरम् अनित्यं

च **विद्धि** । साक्षादहं सर्वकर्ता सर्वस्वामी च । अतो जीवानां स्वतो द्रविणादिस्वामित्वं नेति भावः ॥ ७ ॥

'मय्यावेश्य मनः सम्यक्' इत्युक्तम् । एतदकर्तुः दुःखकारणमाह- **पुंस** इति । अथवा सर्वं मदधीनप्रकृतिकमिति ज्ञानरहितस्य संसारबन्धमाह- **पुंस इति** ।

**पुंसोऽयुक्तस्य नानार्थे भ्रमः स गुणदोषकृत् ।**
**कर्माकर्मविकर्मेति गुणदोषधियो भिदा ॥ ८ ॥**

**अयुक्तस्य** युक्तादन्यस्य, युक्तः = मयि मनोयोगवान्, सर्वकर्तृत्वादिज्ञानवानित्यर्थः । तद्रहितस्य, **नानार्थे** विविधभोग्येषु 'अहमेव कर्ता' 'मदीयमेवेदम्' इति भ्रमो भवति । **स भ्रमः गुणदोषकृत्** स्वर्गनरकयोः सुखदुःखप्रापकः । 'अहमेव कर्ता' इति भ्रमेण दुःखोत्पत्तौ कारणान्तरमाह- **कर्माकर्मेति** । **गुणदोषधियः** रजस्तमोगुणाभ्यां जाताया दोषधियः= अहङ्कारलक्षणभ्रमात् । क्रियत इति **कर्म** - 'इदं कर्म मया क्रियते', **अकर्म** 'इदं मया न क्रियते', 'इदं विरुद्धं मदधीनं', **विकर्म** 'इदं कर्म अन्यथा करोमि' इति **भिदा** तस्मिन् अतद्भ्रमः भवति । निषिद्धेऽपि 'करोमी'ति बुद्धिः । विहितेऽपि 'न करोमी'ति बुद्धिः । नित्येऽपि कर्मणि 'फलाय करोमी'ति बुद्धिः भवतीत्यर्थः । तत्प्राप्तपुण्यपापाभ्यां दुःखादिकमिति भावः ॥ ८ ॥

**तस्माद् युक्तेन्द्रियजयो युक्तचित्त इदं जगत् ।**
**आत्मनीक्षस्व विततमात्मानं मय्यधीश्वरे ॥ ९ ॥**

**तस्मात्** जीवे स्वातन्त्र्यादिभ्रमादिना दुःखप्राप्तेः, तद्भ्रमपरिहाराय **युक्तचित्तः** मयि सन्यस्तचित्तः सन्, युक्तः= ज्ञानोपाययुक्तः इन्द्रियजयः विषयपरित्यागः यस्य सः । देहधारणाय युक्तान्नस्वीकारवतः सर्वभोग्यपरित्यागः भ्रमकारणदोषनिवर्तक

इति भावः । **इदं विततं जगत् आत्मनि** विरिञ्चे **ईक्षस्व ।** 'जगत् तत्सृष्टं, तदधीनं च' इति बुद्धिं सदा कुरु । **आत्मानं** ब्रह्माणं **अधीश्वरे** विरिञ्चेश्वरी या प्रकृतिः तस्या ईश्वरे मयि **ईक्षस्व ।** विरिञ्चः परमात्मना सृष्टः तदधीन इति सदा बुद्धिं कुरु ॥ ९ ॥

ननु ज्ञानविरोधिनः अहङ्कारस्य ममतादिभ्रमकारणस्य सत्वात् कथं त्वयि सर्वेश्वरज्ञानं अप्रतिहतं स्यात्? इत्यत आह- **ज्ञानविज्ञानेति ।**

**ज्ञानविज्ञानसंयुक्त आत्मभूतः शरीरिणाम् ।**
**आत्मानुभवतुष्टात्मा नान्तरायैर्विहन्यसे ॥ १० ॥**

प्रकृतेः गुणमहदादिसर्वतत्वानां तन्नियामकदेवानाञ्च ज्ञानं= ज्ञानम्, विज्ञानं= सर्वतत्वाधीश्वरज्ञानम्, ताभ्यां सम्पन्नः । **शरीरिणाम्** आत्मवत् भूतः विद्यामानः । आत्मौपम्येन साधूनां हितकर्ता इत्यर्थः । आत्मनः= सर्वादानादिकर्तुः अनुभवेन = श्रवणावृत्तिप्राप्तकल्याणगुणावधारणेन अपरोक्षेण वा तुष्ट आत्मा= मनो यस्य सः । त्वम् **अन्तरायैः** ज्ञानविघातकैः **न विहन्यसे** ज्ञानरहितो न भवसि । विशेषदर्शनपाटवे सति ततः अहङ्कारादौ भ्रमजननशक्तिः प्रतिबद्धा भवतीति भावः ॥ १० ॥

ननु अपरोक्षिणाऽपि कर्मणां क्रियमाणत्वात् कर्मभिर्विज्ञानतिरोधानं न भवेत्? इत्यत आह- **दोषबुद्ध्येति ।**

**दोषबुद्ध्योभयातीतो निषेधान्न निवर्तते ।**
**गुणबुद्ध्या च विहितं न करोति यथाऽर्भकः ॥ ११ ॥**

**उभयातीतः** पुण्यपापाभ्यामतीतः अपरोक्षज्ञानी अनिष्टं भविष्यतीति बुद्ध्या निषिद्धं कर्म न करोति इति न । किन्तु श्रुतिस्मृतिप्राप्तेशप्रेरणालक्षणानुज्ञां निश्चित्य निषिद्धा**न्निवर्तते । गुणबुद्ध्या** 'स्वर्गादि भविष्यती'ति बुद्ध्या **विहितं च न करोति ।** किन्तु 'ईशप्रेरितोऽहं करोमि' इति बुद्ध्या करोति । **अर्भकः** नूतनवपुः यथा गुणदोष-बुद्ध्या विधिनिषेधयोः प्रवृत्तिनिवृत्तिमान् न भवति, किन्तु पित्रादिप्रेरणया विहितादि-कर्ता, तथेहापीत्यर्थः । अतः विषयरागादिना कर्माकरणात् न कर्मापि ज्ञानविरोधीति भावः ॥ ११ ॥

ननु पुरातनैः प्रारब्धपापैः पुनः पापकर्मणां सम्भवात् ज्ञानभक्त्यादिविघातः स्यात्? इत्यत आह- **सर्वभूतेति ।**

**सर्वभूतसुहृच्छान्तो ज्ञानविज्ञाननिश्चलः ।**
**पश्यन् मदात्मकं विश्वं न विपद्येत वै पुनः ॥ १२ ॥**

सर्वभूतानां= साधूनां, सुहृत्= हितकर्ता इत्यर्थः । शान्तः= भगवन्न्यस्तचित्तः, ज्ञानेन= प्रकृतिगुणमहदादिज्ञानेन तन्नियामकदेवताज्ञानेन च । विज्ञानेन = चेतनाचेतन-सर्वकर्तृपरमात्मज्ञानेन निश्चलः= मनःस्थैर्यवान् । भोग्यस्मरणरहित इति भावः । **मदात्मकं** अहमेव आत्मा= सर्वस्य आदानादिकर्ता भोक्ता, जीवानां भोजकश्च यस्य तत् । एवंविधं **विश्वं पश्यन्** देहादौ अहङ्कारादिविरोधिज्ञानसम्पन्न इति भावः । **पुनः** पूर्वमिव **न विपद्येत ।** प्रारब्धादिपापेनापि तव भक्तिनित्यसौख्ययोः हानिः नास्तीति भावः । तस्माद् गां विचरस्व ॥ १२ ॥

**श्रीशुक उवाच-**

**इत्यादिष्टो भगवता महाभागवतो नृप ।**

**उद्धवः प्रणिपत्याह तत्वजिज्ञासुरच्युतम् ॥ १३ ॥**

**उद्धव उवाच-**

**योगेश योगविन्यास योगात्मन् योगसम्भव ।**

**निःश्रेयसाय मे प्रोक्तस्त्यागः संन्यासलक्षणः ॥ १४ ॥**

**योगेश** परमात्मना मनः युज्यते एभिः ते योगाः । योगानां= यमानां नियमानां च ईश= नारायणाद्यवतारैः प्रवर्तक इत्यर्थः । योगस्य= ज्ञानस्य विन्यासः= देवादिषु उपदेशः येन सः । **हे योगविन्यास ! योगात्मन् !** ज्ञानदेह ! **योगसम्भव !** योगानां= सर्वदुःखनिवृत्त्युपायानां शास्त्राणां सम्भवः येन । **प्रोक्तः** 'त्वन्तु सर्वं परित्यज्य' (११-०७-०६) इत्यनेन प्रोक्तः ॥ १४ ॥

**त्यागोऽयं दुष्करो भूमन् कामानां विषयात्मभिः ।**

**सुतरां त्वयि सर्वात्मन्नभक्तैरिति मे मतिः ॥ १५ ॥**

**सोऽहं ममाहमिति मूढमतिर्विगाढस्त्वन्मायया विरचितात्मनि सानुबन्धे ।**

**तत्त्वञ्जसा निगदितं भवता यथाऽहं संसाधयामि भगवन्ननुशाधि भृत्यम् ॥ १६ ॥**

विषयेषु आत्मा= मनो येषां तैः विषयभोगरुचिभिरिति भावः । **अभक्तैः कामानां** भोगानां **त्यागः दुष्करः** । तैः त्वत्प्रीत्यर्थं कामानां मनसा परित्यागः **सुतरां दुष्करः** । अथवा **त्वयि** त्वदधीनतया स्थितानां विषयाणां ममतापरित्यागः दुष्करः । द्रविणादिभोग्यत्यागः अन्येषां दुष्करोऽपि मम यथा सुकरं स्यात्, तथा उपदेशं कुरु इत्याह- **सोऽहं ममेति** । **मायया** तव विचित्रशक्तिभिः विरचिते=

उत्पन्ने आत्मनि= देहे **सानुबन्धे** विविधभोग्यसहिते **सोऽहम्** अनादितः विषयासक्तोऽहं **मम=** 'मदीयमेवेदम्', **अहम्** 'अहमेव पुत्रान्नादेः कारणम्' इति भ्रान्त्या **मूढमतिः** सर्ववस्तुषु त्वत्कृतत्वादिज्ञानदार्ढ्यरहितः । विनयात् लोकरीत्या वा इयमुक्तिरिति भावः । विविधविषयेषु आसक्तश्च इत्यर्थः । **तत्** तस्मात् ज्ञानपाटवाय नः उपदेशस्य आवश्यकत्वात् **भवता निगदितं** वर्णितं ज्ञातव्यार्थं **यथा संसाधयामि** तथा **भृत्यं** मां **अनुशाधि ॥** १६ ॥ त्वया कृतः ज्ञानोपदेशः शीघ्रमेव अत्यन्तं ज्ञानपाटवसम्पादक इत्याशयेनाह- **सत्यस्येति ।**

**सत्यस्य ते स्वदृश आत्मन आत्मनोऽन्यं वक्तारमीश विबुधेष्वपि नानुचक्षे ।**
**सर्वे विमोहितधियस्तव माययेमे ब्रह्मादयस्तनुभृतो बहिरर्थभावाः ॥ १७ ॥**

**सत्यस्** य बलज्ञानसमाहाररूपस्य मुक्तामुक्तनियामकस्य इति वा, सर्वदोष-विरोधिसर्वकल्याणगुणपूर्णस्य इति वा स्वयमेव पश्यतीति स्वदृक् स्वविषयप्रकाश इति वा **आत्मनः** सर्वभोग्यानां आदानादिकर्तुः **आत्मनः** परमात्मनः त्वत्तः इत्यर्थः । **अन्यं विबुधेषु वक्तारं** वेदानाम् उपदेष्ठारं **नानुचक्षे ।** अतोऽपि देवानाम् उपदेष्टा त्वं ममापि उपदेशं कुरु इति भावः । अथवा **विबुधेषु** मध्ये वक्तारं विबुधं नानुचक्षे । देवानां अन्यथाज्ञानाभावेन तेषां किमर्थम् उपदेशः ? इत्यत आह- **सर्वे विमोहितेति ।** अथवा देवानाम् उपदेष्टृत्वं कुतो न दृश्यत ? इत्यत आह- **सर्व इति । ब्रह्मादयः** ब्रह्मा आदिः प्राथमिकः येषान्ते अतद्गुणसंविज्ञानबहुव्रीहिः । ब्रह्मणः भारत्याश्च मोहो नास्तीति भावः । रुद्रादिदेवाः **विमोहितधियः** क्वचिद् अन्यथाज्ञानवन्तः । तेषां मोहः कथं जातः ? इत्यत आह- **बहिरर्थभावा** इति । परमसुखसाधनात् अन्योऽर्थो

बहिरर्थः । कदाचित् विषयचित्ताः । तेषां निजसुखभोक्तॄणां विषयापेक्षा कुतः ? इत्यत आह- **तनुभृत** इति । कदाचित् देहाभिमानोपेताः ॥ १७ ॥

तस्मात् मुक्तिपर्यन्तं प्रारब्धापचयार्थं ज्ञानाभिवृद्धिपाटवादेरपेक्षिततत्वात् यथोचित-ज्ञानलाभाय त्वां शरणं गत इत्याह- **शरणं प्रपद्य इति** ।

**तस्माद् भवन्तमनवद्यमनन्तपारं सर्वज्ञमीश्वरमखण्डविकुण्ठधिष्ण्यम् ।**
**निर्वेदधीरहरहर्वृजिनातितप्तो नारायणं नरसखं शरणं प्रपद्ये ॥ १८ ॥**

प्रसादविशेषसिद्ध्यर्थं स्तुतिं च करोति- **अनवद्यमिति** । स्वस्मिन् प्रतीतसर्व-दोषरहितम् । तत्र कारणमाह- **नारायणमिति** । सर्वदोषविरोधिसर्वकल्याणगुणाश्रयम् । अत एव अन्तः= ह्रासः, पारः= इयत्ता ताभ्यां रहितम् । स्तुतित्वात् आर्थिकपुनरुक्तिः, सामान्येनोक्तस्य विशेषेणोक्तिश्च युज्यते । उपदेशप्रयोजकगुणैरपि स्तौति- **सर्वज्ञमिति** । अतिस्पष्टं स्वपरगताशेषविशेषज्ञानसम्पन्नम् । उपदेशस्योचितज्ञानप्रदानकुशल इति भावः । तव सर्वाश्रयत्वात् अहमपि शरणं गतः इत्याशयेनाह- **अखण्डम्** । अखण्डं= पूर्णं, विकुण्ठं= प्रतिबन्धरहितम् । तव परमप्रसादे सतीति भावः । धिष्ण्यं= आश्रयं भवन्तं **अहरहः** व्रजिनैः= प्रारब्धैः अतितप्तः= पुनर्दुःखवान् निर्वेदः= दुःखदर्शनप्राप्त-विरागः, तेन युक्तः विषयपरित्यागः यस्य सः । अहम् **ईश्वरम्** अनिष्टपरिहारे इष्टप्रदाने च समर्थं **नरसखं शरणं प्रपद्ये** । विष्णोर्वायोरंशयुक्तः अनन्तः नर इति भावः ॥ १८ ॥

श्रीकृष्णः 'स्वस्य एकान्तभक्तः' इति प्रीत्या उद्धवं श्लाघते- **प्रायेणेति** ।

**श्रीभगवानुवाच-**

**प्रायेण मनुजा लोके लोकतत्वविचक्षणाः ।**

**समुद्धरन्ति ह्यात्मानम् आत्मनैवाशुभाशयात् ॥ १९ ॥**

**लोके** विविधजनेषु मध्ये, लोकेषु तत्वेषु विषये विचक्षणाः= कुशलाः । स्वतन्त्रपरतन्त्रज्ञाने बन्धमोक्षकारणज्ञाने च कुशला **मनुजा** भवादृशाः **आत्मनैव** सात्विकमनसैव । एवशब्देन प्राधान्यमुच्यते । **अशुभाशयात्** राजसतामसान्तःकरण-भागात् **आत्मानं** स्वस्वरूपं स्वयमुद्धरन्ति विश्लिष्टं कुर्वन्तीत्यर्थः । ईश्वरापरोक्षं सम्पादयन्तीति भावः । यद्यप्यसुराः क्वचित् वैष्णवसिद्धान्तज्ञानोपेताः । अथापि श्रीहरिभक्त्यादिराहित्याद् विष्णौ वैष्णवसिद्धान्ते च विद्वेषात् तेषाम् अनुद्धार इति भावः ॥ १९ ॥

उद्धवस्य सात्विकान्तःकरणं स्तौति- **आत्मनो गुरुरिति ।**

**आत्मनो गुरुरात्मैव पुरुषस्य विशेषतः ।**

**यत् प्रत्यक्षानुमानाभ्यां श्रेयोऽसावनुविन्दते ॥ २० ॥**

आत्मनः गुरुत्वं प्रतिपादयति **यत्प्रत्यक्षेति ।** प्रत्यक्षेण= चक्षुरादिना, अनुमानेन च आप्तोक्तत्वादिना सहितेन **यत्** येन मनसा **असौ** लोकतत्वविचक्षणः सात्विकप्रकृतिर्वा, **श्रेयः** विषयानित्यत्वबुद्धिसहितां 'शास्त्रोक्तं कर्तव्यम्' इति बुद्धिम् **अनुविन्दते** प्राप्नोति । मनसा आलोच्येति भावः । **आत्मैव** सात्विकान्तःकरणमेव । प्राधान्यज्ञापनाय एव-शब्दः । **पुरुषस्य** देहिनः **आत्मनः** जीवस्य गुरुरिव **गुरुः** ज्ञाने प्रधानसाधनमित्यर्थः ॥ २० ॥

हे उद्धव ! जन्मापि सफलमिति स्तौति- **पुरुषत्वे चेति ।**

**पुरुषत्वे च मां धीराः साङ्ख्ययोगविशारदाः ।**
**आविस्तारं प्रपश्यन्ति सर्वशक्त्युपबृंहितम् ॥ २१ ॥**

**पुरुषत्** वे प्राप्ते सति, साङ्ख्ये= परमात्मप्रतिपादके , योगे= कर्मप्रतिपादके च शास्त्रे उभयत्र विशारदाः= ग्रहणधारणादिकुशलाः । **धीराः** विप्रयोगनिरसनसमर्थाः[1] **आविस्तारं** स्वज्ञानशक्तिविस्तारपर्यन्तं नतु साकल्येनेति भावः । सर्वशक्तिभिः उपबृंहितं= अतिशयेन समृद्धं **मां** प्रपश्यन्ति श्रवणादिध्यानक्रमेणेति भावः ॥ २१ ॥

**एकद्वित्रिचतुष्पादो बहुपादस्तथाऽपदः ।**
**बह्व्यः सन्ति पुरः सृष्टास्तासां मे पौरुषी प्रिया ॥**

मनुष्यजन्मनः ज्ञानवत्त्वमात्रेण कथं साफल्यम् इति जिज्ञासायामाह- **मे पौरुषीति ।** मे प्रीतिः पुरुषजन्मनः फलमिति भावः । **एकद्वित्रिचतुष्पादः** एकादिसङ्ख्याकपादोपेताः **पुरः** देहाः **बहुपादः अपदश्च पुरः सृष्टाः** बहवः **सन्ति । तासां** पुरां पश्वादिदेहानां मध्ये **पौरुषी प्रिया ॥** २२ ॥

पश्वाद्यपेक्षया अत्र केन निमित्तेन तव प्रीतिः ? इति जिज्ञासायामाह- **अत्र मामिति ।**

**अत्र मां मार्गयन्त्यद्धा युक्ता हेतुभिरीश्वरम् ।**
**गृह्यमाणैरात्मलिङ्गैः अग्राह्यमनुमानतः ॥ २३ ॥**

**अत्र** पुरुषदेहे स्थिताः जीवाः **हेतुभिः** वेदार्थज्ञानाद्यनुकूलवागादीन्द्रियशक्तिभिः **युक्ताः ।** पशवस्तु नैवमिति भावः । **अनुमानतः अग्राह्यम्,** वेदैरेव प्रथमं ग्राह्यमिति भावः । **ईश्वरं** व्यक्तत्वाव्यक्तत्वविविधशक्त्युपेतं **मां गृह्यमाणैः आत्मलिङ्गैः** आत्मब्रह्मादि-

[1] 'विपर्ययनिरसनसमर्थाः' इति पाठः स्यादिति भाति ।

शब्दावगतैः, लिङ्गैः= गुणपूर्णत्वनिर्दोषत्वादितात्पर्यलिङ्गैः, आत्मब्रह्मादिशब्दैः जीवादन्यस्याभिधायकैः, गुणाद्यभिधायकत्वात् जीवे अल्पशक्त्या अनुभवादिति भावः । जीवेच्छानुसारेण नियमेनाप्रवृत्तैः बुद्ध्यादिलिङ्गैः 'बुद्ध्यादयः केनचित् नियताः नियमेन जीवेच्छाननुसारित्वात्' इति वा उपक्रमादिलिङ्गैर्वा **मार्गयन्ति** जीवादन्यं विचारयन्ति, अनन्तरम् **अद्धा** जीवापेक्षया धुर्यतया प्रपश्यन्ति । ध्यानानन्तरमिति भावः ॥ २३ ॥

एवम् उद्धवं स्तुत्वा तत्प्रश्ने इतिहासं उत्तरत्वेनाह- **अत्रापीति** ।

**अत्राप्युदाहरन्तीममितिहासं पुरातनम् ।**
**अवधूतस्य संवादं यदोरमिततेजसः ॥ २४ ॥**

त्वत्प्रश्नेऽपि उदाहरामीत्यर्थः । इतिहासा बहवः सन्ति अयमितिहासः कः ? इति जिज्ञासायामाह- **अवधूतस्येति** । यदोः राज्ञश्च संवादं प्रश्नप्रतिवचनरूपम् ॥ २४ ॥

प्रश्नप्रतिवचने विविच्याह- **अवधूतमिति** ।

**अवधूतं द्विजं कञ्चिच्चरन्तमकुतोभयम् ।**
**कविं निरीक्ष्य निपुणं यदुः पप्रच्छ धर्मवित् ॥ २५ ॥**

**कुतो बुद्धिरियं ब्रह्मन्नकर्तुस्ते विशारदा ।**
**यामासाद्य भवान् लोकान् विद्वांश्चरति बालवत् ॥ २६ ॥**

**अकुतोभयं** कुतश्चिदपि भयरहितम्, देहे अनभिमानादिति भावः, **निपुणं** स्वतन्त्रास्वतन्त्रतत्वादिज्ञाने कुशलं, **कविं** ज्ञातव्यसर्वज्ञानोपेतं **पप्रच्छ** । प्रश्नकारणं अज्ञानीति बुद्धिः यदोः कथं सम्पन्ना ? इति जिज्ञासायामाह- **धर्मवित्** इति । धर्मैः ज्ञानलक्षणैः

विद्वान्, अवधूतं ज्ञानित्वेन जानन् सन् **पप्रच्छ । हे ब्रह्मन् !** ज्ञानसमृद्धां **यां** बुद्धिम् **आसाद्य** प्राप्य **विद्वान् अपि भवान् बालवत** मानावमानादिबुद्धिं परित्यज्य **चरति । इयं सुविशारदा** कुशला सूक्ष्मतया इत्यर्थः । **बुद्धिः अकर्तुः** विषयभोगार्थं साधनाकर्तुः ज्ञानोपदेशकर्तृरहितस्य इति वा **कुतः?** केनाचारेण प्राप्ता ? ॥ २६ ॥

अवधूतस्य लोकवैलक्षण्यं वक्तुं लोकस्वभावमाह- **प्रायो धर्मेति ।**

**प्रायो धर्मार्थकामेषु विवित्सायां च मानवाः ।**
**हेतुनेह[1] समीहन्ते आयुषो यशसः श्रियः ॥ २७ ॥**

**इह** जनसमुदाये **मानवाः प्रायः धर्मार्थकामेषु** धर्मार्थसिद्ध्यर्थं **विवित्सायां** धर्मार्थादिप्रतिपादकसाधनज्ञानार्थं, **हेतुना** धर्मार्थशास्त्रलक्षणेन सहकारिणा **समीहन्ते यशसः आयुषः श्रियश्च** सिद्ध्यर्थं **समीहन्ते ।** केचित् **विवित्सायां** परापरतत्वज्ञानार्थं **समीहन्ते** आचार्यनिकटे वसन्तीत्यर्थः ॥ २७ ॥

**त्वं तु कल्यः कविर्दक्षः सुभगोऽमृतभाषणः ।**
**न कर्तुमीहसे किञ्चिज्जडोन्मत्तपिशाचवत् ॥ २८ ॥**

**त्वं तु कल्यः** देहपाटववान्, **दक्षः** ज्ञानार्जनेऽपि निपुणः **सुभगः** श्रीमान् एवं लौकिकवैदिकफलार्जने सामर्थ्योपेतोऽपीत्यर्थः । **किञ्चित्** अपि फलं **कर्तुं** सम्पादयितुं **नेहसे** यत्नं न करोषि, जडोन्मत्तपिशाच इव लोकविलक्षणः असि । **इयं** बुद्धिः एवमवस्थाने कारणबुद्धिः **ते कुतः?** केन प्राप्ता ? ॥ २८ ॥

जनेषु विषयाभावे तापो दृष्टः तव स नास्तीत्याह- **जनेष्विति ।**

[1] 'हेतुनैव' इति पाठान्तरम् ।

**जनेषु दह्यमानेषु कामलोभदवाग्निना ।**
**न तप्यसेऽग्निना मुक्तो गङ्गाम्भःस्थ इव द्विपः ॥ २९ ॥**

काम्यन्त इति कामाः विषयाः, तेषु लोभः= आसक्तिविशेषः, सः दवाग्निरिव= वनदाहकवह्निरिव महातापकारणमित्यर्थः । तेन **दह्यमानेषु** तापयुक्तेषु सत्सु, विषय-सदसद्भावाभ्यां दुःखयुक्तेष्विति भावः । **न तप्यसे** विषयेषु दृढविरागसम्पन्नत्वादिति भावः ॥ २९ ॥

**त्वं हि नः पृच्छतां ब्रह्मन्नात्मन्यानन्दकारणम् ।**
**ब्रूहि स्पर्शविहीनस्य भवतः केवलात्मनः ॥ ३० ॥**

केवलम्= एकः आत्मा= देहः यस्य सः, तस्य शरीरमात्रपरिग्रहस्य, स्पर्शः= विषयभोगः, तद्रहितस्य **भवतः आत्मनि** चेतने विद्यमानस्य आनन्दस्य कारणं **ब्रूहि** ॥ ३० ॥

**श्रीभगवानुवाच-**
**यदुनैवं महाभागो ब्रह्मण्येन सुमेधसा ।**
**पृष्टः सभाजितः प्राह प्रश्रयावनतं द्विजः ॥ ३१ ॥**

महान्= परमात्मा भागः= द्रविणं यस्य सः, उत्तरकथने ज्ञानसम्पत्तौ निमित्तमाह- **ब्रह्मण्येनेति** । ब्राह्मणेषु ज्ञानिषु साधुः, तेन । उत्तराभिमाने कारणान्तरमाह- **सुमेधसेति** । **सुमेधसा** ब्रह्मण्यज्ञानसम्पन्नेन **सभाजितः** । प्रश्रयेण= विनयेन अवनतं= नम्रम् ॥ ३१ ॥

**ब्राह्मण उवाच-**

**सन्ति मे गुरवो राजन् बहवो बुद्ध्युपाश्रिताः ।**

**यतो बुद्धिमुपादाय मुक्तोऽटामीह तान् शृणु ॥ ३२ ॥**

**बुद्ध्युपाश्रिताः** मम बुद्ध्या उपाश्रताः **गुरवः** गुरुत्वेन वृताः, **यतः** गुरुभ्यः **बुद्धिं** ज्ञातव्यार्थज्ञानम् **उपादाय** प्राप्य, गुरूपदेशं विना गुरुव्यापारैः अभिमतं ज्ञातं स्वबुद्ध्या प्राप्येति भावः । **मुक्तः** अविद्याभिमानादिभिर्मुक्तः **अटामि** भुवि सञ्चरामि । **मे** बुद्धिकारणभूता ये **गुरवः** सन्ति **तान्** वक्ष्यामि शृणु ॥ ३२ ॥

गुरूणां भेदज्ञानाय सञ्ज्ञां दर्शयति- **पृथिवी** इत्यादि ।

**पृथिवी वायुराकाश आपोऽग्निश्चन्द्रमा रविः ।**

**कपोतोऽजगरः सिन्धुः पतङ्गो मधुकृद् गजः ॥ ३३ ॥**

**मधुहा हरिणो मीनः पिङ्गळा कुररोऽर्भकः ।**

**कुमारी शरकृत् सर्प ऊर्णनाभिः सुपेशकृत् ॥ ३४ ॥**

**एते मे गुरवो राजन् चतुर्विंशतिराश्रिताः ।**

**शिक्षावृत्तिभिरेतेषामन्वशिक्षमहं मनः ॥ ३५ ॥**

नाना मयैव **आश्रिताः । एतेषां** गुरूणां **शिक्षावृत्तिभिः** शिक्षा= अन्यनिवारणेन अभिमतज्ञानप्राप्तिकारणं नियमनम् । **शिक्षावृत्तिभिः** तद्रूपैः व्यापारैः **मनः अन्वशिक्षं** विषयेभ्यः मनः निवार्य ज्ञानेन योजितवान् इत्यर्थः ॥ ३५ ॥

गुरुविशेषप्राप्यबुद्धिविशेषान् विविच्य वदामीत्याह- **यतो यदिति ।**

**यतो यदनुशिक्षामि यथा वा नाहुषात्मज ।**

**तत् तथा पुरुषव्याघ्र निबोध कथयामि ते ॥ ३६ ॥**

**यथा** येन गरुगतधर्मेण **यत्** शिक्षणीयं धर्मं **यतः** गुरोः **अनुशिक्षामि** प्राप्तवान् **तथा** तेन गुरुगतधर्मेण **तत्** अभ्यस्तं धर्मं **कथयामि ॥** ३६ ॥

भूदेवताया अचलत्वगुणदर्शनेन अभ्यस्तम् अचलत्वमाह- **भूतैरिति ।**

**भूतैराक्रम्यमाणोऽपि धीरो दैववशानुगैः ।**

**तद्विद्वान्न[1] चलेन्मार्गाद् अनुशिक्षन् क्षितेर्व्रतम् ॥ ३७ ॥**

दैवं= परदेवता, स्वादृष्टनियामकान्तर्यामी वा, तस्य वशा अस्वतन्त्रा इति भावः । अनुगाश्च= दैव्यव्यापारानुसारिव्यापारोपेताश्च तैः **भूतैः=** प्रबलजनादिभिः **आक्रम्यमाणोऽपि** अर्थाद्यपहारेण विष्टिग्रहणादिना ताड्यमनोऽपीत्यर्थः । **तद्विद्वान्** भूतानां दैवानुसारित्वाद्यनुसन्धानवान्, **मार्गात्** रागद्वेषराहित्यलक्षणस्वधर्ममार्गात् **न चलेत्** इति **व्रतं** नियमं **क्षितेः** सकाशात् **अनुशिक्षं** अभ्यस्तवान् । क्षितौ भूतैः यथेष्टं खननेऽपि, गजादिपादघातेऽपि अचलत्वस्य दर्शनादिति भावः ॥ ३७ ॥

**शश्वत् परार्थः सर्वेहां[2] परार्थैकान्तसम्भवम् ।**

**साधुः शिक्षेत भूमेश्च अनुशिक्षं व्रतान्तरम् ॥ ३८ ॥**

**शश्वत् परार्थः** विष्णुतद्भक्तसेवोपयुक्तः, **सर्वेहां** स्वस्य सर्वव्यापारं **शिक्षेत्** नियमयेत् । ईश्वरसेवार्थमेव व्यापारं कुर्यादित्यर्थः । **परार्थैकान्तसम्भवं** एकान्तशब्दः एवशब्दार्थः । परार्थमेव सम्भवं स्वस्य श्रेयःसम्भवं प्राप्तिं, **साधुः** सात्विकः अतः

---

[1] 'तद्विदां न' इति पाठान्तरम् । [2] 'परार्थसर्वेहः' इति पाठान्तरम् ।

शिक्षेत् । ईश्वरतद्भक्तसेवार्थमेव मम श्रेयःप्राप्तिः, नतु भोगार्थमिति नियमयेदित्यर्थः इति बुद्ध्या अहं **भूमेः व्रतान्तरमनुशिक्षं** अभ्यस्तवान् ॥ ३८ ॥

वायुशिक्षितं गुणं वक्तुं ज्ञानधर्ममाह- **प्राणवृत्त्या** इति ।

**प्राणवृत्त्यैव सन्तुष्येत् मुनिर्नैवेन्द्रियप्रियैः ।**
**ज्ञानं यथा न नश्येत नावकीर्येत वाङ्मनः ॥ ३९ ॥**

**प्राणवृत्त्या** प्राणधारणसमर्थान्नेन **सन्तुष्येत्** अलम्बुद्धिसम्पन्नो भवेदिति भावः । मुनेः अन्नस्वीकारः किमर्थम्? इत्यत आह- **नावकीर्येतेति । मनः** अन्नस्वीकारे **अवकीर्येत** अपचयवान् भवेत् । तस्य ज्ञानशक्तिः स्तब्धश्च भवेत् । तेन च ज्ञानं नश्येत । मनः **यथा** यादृशान्नेन **नावकीर्येत** ज्ञानं यथा येन प्रकारेण न नश्येत तथा तेन प्राणधारणोपयुक्तान्नेन वर्तितव्यम् इत्यर्थः । **इन्द्रियप्रियैः** रसायनादिभिः **न सन्तुष्येत** तत्र प्रीतिमान् न भवेदित्यर्थः । अतः **अवकीर्येत** विषयासक्तं स्यादित्यर्थः । ततः विषयासक्त्या परमात्मज्ञानपाटवमुच्छिन्नं स्यात् इति भावः ॥ ३९ ॥

पूर्वकर्मणा रसायनादिविषयप्राप्तेः कथं कर्तव्यम्? इति जिज्ञासायां वायुशिक्षितं गुणमाह- **विषयेष्विति ।**

**विषयेष्वाविशन् योगी नानाधर्मेषु सर्वतः ।**
**गुणदोषव्यपेतात्मा[1] न विषज्येत वायुवत् ॥ ४० ॥**

**योगी** परमात्मध्यानलक्षणयोगोपेतः **नानाधर्मेषु विषयेषु आविशन्** विषयाननु-भवन्नित्यर्थः । गुणे रसे दोष इव व्यपेतः निवृत्तः आत्मा= मनः येन सः एवं विधः सन् **न विषज्येत** सक्तो न भवेत् । गुणदोषान्वयेनेति वा । विषयेषु गुणदोषसम्बन्धेन

[1] 'गुणदोषान्वयेनात्मा' इति पाठान्तरम् ।

निमित्तेन सक्तो न भवेदित्यर्थः । दुःखानुषङ्गिसुखस्यापि दुःखवत् हेयत्वात् साधनमपि हेयमिति भावः । अतः विषयेषु वायुदेवतावत् न विषज्येत इति अहम् अन्वशिक्षम् ॥ ४० ॥

देहधर्माणां मूर्तिवृद्धिक्षयादीनां जीवसम्बन्धेऽपि ते जीवस्य न स्थिरा इत्याह- **पार्थिवेष्विति** ।

**पार्थिवेष्विह देहेषु प्रविष्टस्तद्गुणाश्रयः ।**
**गुणैर्न युज्यते योगी गन्धैर्वायुरिवात्मदृक् ॥ ४१ ॥**

**देहेषु प्रविष्टः योगी गुणैः** जननादिधर्मैः **न युज्यत,** अत्र कारणमाह- **आत्मदृगिति** । परमात्मापरोक्षवान् यतः अतः न सज्यते इति भावः । वायुदेवता गन्धैः सम्बद्धाऽपि न सज्यते एवमिति भावः ॥ ४१ ॥

नित्याकाशदृष्टान्तेन परमात्मगतान् गुणान् जानीयादित्याह- **अन्तर्बहिरिति** ।

**अन्तर्बहिश्च स्थिरजङ्गमेषु ब्रह्मात्मभावेन समन्वयेन ।**
**व्याप्त्याऽव्यवच्छेदमसङ्गमात्मनो मुनिर्नभोवद् विततस्य भावयेत् ॥ ४२ ॥**

**नभोवत् विततस्य** व्याप्तस्य परमात्मनः **स्थिरजङ्गमेष** वस्तुषु **अन्तः** आत्मभावेन अन्तर्यामित्वेन, **बहिः** सर्वत्र ब्रह्मभावेन= व्याप्तरूपेण इयत्ताऽभावः जीवान्तर्यामिणि व्यवस्थिताणुत्वाभावं भावयेत् । अणुत्वस्य व्यवस्थावस्था कुतो नास्ति ? इति जिज्ञासायामाह- **व्याप्त्येति** । अणुरूपस्यापि व्याप्तिनिमित्तेन बहिः सर्वत्र ब्रह्मभावेन व्याप्त्येति अणुरूपस्यापि व्याप्तिनिमित्तेन अणुत्वमपि महत्त्वसमानाधिकरणम् इति भावः । ननु अलौकिकार्थे दृष्टान्तमात्रेण कथम् अलौकिकगुणावधारणम् इति जिज्ञासा-

यामाह- **समन्वयेनेति** । श्रुतिभिः तथा प्रतिपादितत्वेन, तथा निर्णीतत्वेनेति भावः । उक्तञ्च- 'अन्यभावव्यावृत्तेश्च' (ब्र.सू.१-३-१२) इति । अथवा अणुत्वव्याख्या, ईश्वराणुत्वे सर्वशक्तिसद्भावादिति भावः । **अव्यवच्छेदं भावयेत, आत्मनः** जीवान्तर्यामिणः **असङ्गं** गुणालेपित्वं **भावयेत्** ॥ ४२ ॥

**तेजोबन्नमयैर्भावैर्मेघाद्यैर्वायुनेरितैः ।**

**न स्पृश्यते नभस्तद्वत् कालसृष्टैर्गुणैः पुमान् ॥ ४३ ॥**

अन्नं= पृथिवी । एभिः **भावैः** वस्तुभिः **नभः न स्पृश्यते** । शीतोष्णादिभिः विकारी न भवति । **वायुनेरितैः मेघाद्यैः** अशनिपातादिभिः **न स्पृश्यते** । यथा तथा **तत्तत्कालसृष्टैः गुणैः** शीतोष्णादिभिः **पुमान्** देहस्थः परमपुरुषः न **स्पृश्यते** न विक्रियते इत्यर्थः ॥ ४३ ॥

**स्वच्छः प्रकृतितः स्निग्धो मधुरस्तीर्थवन्नृणाम् ।**

**मुनिः पुनात्यघान्मित्रमीक्षणस्पर्शकीर्तनैः ॥ ४४ ॥**

**तीर्थवत्** गङ्गादिवत् **मुनिः स्वच्छः स्यात** रागादिकालुष्यरहितः स्यात् । **स्निग्धः** वैष्णवेषु स्नेहोपेतः स्यात् । **प्रकृतितः** स्वभावतः लौकिकोपकारमनपेक्ष्येत्यर्थः । **मधुरः** स्यात् वैष्णवानां सुखकारणं स्यात् । **नृणां मित्रम्** अनिष्टपरिहर्ता च स्यात् । स ईक्षोपस्पर्शादिभिः **पुनाति** इति अपां गुणान् शिक्षितवान् इति भावः ॥ ४४ ॥

**तेजस्वी तपसा दीप्तो दुर्धर्षो दूरभाजनः ।**

**सर्वभक्षोऽपि युक्तात्मा नादत्ते पापमग्निवत् ॥ ४५ ॥**

**क्वचिच्छन्नः क्वचित् स्पष्ट उपास्यः श्रेय इच्छताम् ।**
**भुङ्क्ते सर्वत्र दातॄणां दहन् प्रागुत्तराशुभम् ॥ ४६ ॥**

**तपसा** मननेन **दीप्तः** ज्ञानलक्षणप्रकाशविशेषवान्, **तेजस्वी** अज्ञाननिरसनशक्तिमान् भवेत्, **दुर्धर्षः** पराभवज्ञानविषयो न स्यात् । न विद्यते धर्षणं यस्मात् सः, महत्सु तत् कर्ता न भवेदित्यर्थः । वशीकर्तुमशक्तः स्यात् इति वा । निस्पृहत्वेनेति भावः । **दूरभाजनः** दूरत एव भजनीयः, ऐश्वर्योपेतैः सहवासं न कुर्यादिति भावः । **सर्वभक्षः** निषिद्धान्नभक्षणवान् **अपि अग्निवत् पापं नादत्ते** नाप्राप्नोति तत्कृतलेपरहितो भवतीत्यर्थः । तत्र निमित्तमाह- **युक्तात्मेति ।** परमात्मन्येव न्यस्तचित्तो यतः अतः न दोष इति भावः । **अग्निवत्** मुनिः **क्वचित्** असाधुषु छन्नः स्यात्, **क्वचित्** साधुषु **स्पष्टः** स्यात् । ज्ञानप्रकटनं कुर्यादित्यर्थः । **श्रेयः** ज्ञानलक्षणसंश्रेयः **इच्छताम् उपास्योऽपि** स्यात्, ज्ञानदाता स्यात् इति भावः । **दातॄणां प्रागुत्तराशुभं दहन् सर्वत्र** निषिद्धजातिष्वपि **भुङ्क्ते ।** प्रकारान्तरेण देहधारणस्य असम्भवे इति भावः । उक्तञ्च- 'सर्वान्नानुमतिश्च प्राणात्यये तद्दर्शनात्' (ब्र.सू.३-४-२८) इति ॥

अग्निदृष्टान्तेन परमात्मनि गुणानुधारणमप्याह- **स्वमाययेति ।**

**स्वमायया सृष्टमिदं सदसल्लक्षणं विभुः ।**
**प्रविष्ट ईयते तत्तत्सरूपोऽग्निरिवैधसि ॥ ४७ ॥**

स्वस्य माया= परमात्माधीनप्रकृतिः तया, **सृष्टं सदसल्लक्षणं** कार्यकारणात्मकं मूर्तामूर्तात्मकं वा **इदं** जगत् **प्रविष्टः** तत्तच्छक्तिप्रेरकरूपैरिति भावः । तत्र= स्थूलसूक्ष्मवस्तुषु सरूपः= तद्वस्तुस्वरूपः, तद्वस्तुसमाकारपरिमाणयुक्त इत्यर्थः । **ईयते एधसि**

नानाविधदारुषु सरूपः अग्निरिव भवति । अणुत्वमहत्वादीनां अन्यत्र विरुद्धगुणानाम् ईश्वरे समावेशः । ईश्वरो अघटितघटनाशक्तिसम्पन्न इति भावः ॥ ४७ ॥

**विसर्गाद्याः श्मशानान्ता भावा देहस्य नात्मनः ।**
**कलानामिव चन्द्रस्य कालेनाव्यक्तवर्त्मना ॥ ४८ ॥**

**कालेन** कर्मपरिपाकयुक्तकालेन प्राप्ताः **विसर्गाद्याः** उत्पत्तिप्राथमिकाः गुणाः **देहस्य भावाः** स्वाभाविकाः, अथ **आत्मनः** अन्तर्यामिणः न सन्ति । **अव्यक्तवर्त्मना** परैरज्ञातव्यापारेणेत्यर्थः । **कालेन** कालनियामकेन परमात्मना जायमाना विसर्गादयः यथा **चन्द्रस्य** न भवन्ति किन्तु **तत्कलानां** तद्वदिहापि ॥ ४८ ॥

**कालनद्योघवेगेन भूतानां प्रभवाप्ययौ ।**
**नित्यावपि न दृश्येते आत्मनोऽग्नेर्यथाऽर्चिषाम् ॥ ४९ ॥**

**अग्नेः अर्चिषां प्रभवाप्ययौ** इव विविध**भूतानां** चेतनानां **आत्मनः** देहस्य कालः= क्षणादयः, त एव नदी, तस्याः ओघः= प्रवाहः तस्य वेगेन प्राप्तौ **प्रभवाप्ययौ नित्यावपि** क्षणव्यवधानं विना प्राप्यमाणावपि अवयवोपचयापचयरूपौ प्रभवाप्ययौ, क्षणविशिष्टाकारस्य प्रभवाप्ययौ वा न दृश्येते यथा बाल्यदेहापगमेन यौवनदेहप्राप्तौ न चिन्ता, एवं स्थविरदेहापगमेन देहान्तरप्राप्तावपि चिन्ता न कर्तव्येति भावः । इति अन्वशिक्षम् । विशेष्यरूपस्य देहस्य विशिष्टापगमेऽपि अवस्थानं भेदाभेदाद्युज्यत इति भावः ॥ ४९ ॥

विषयसद्भावेऽपि विहितकाल एव अन्नादिविषयाः स्वीकर्तव्या इत्याह- **गुणै-र्गुणानिति ।**

**गुणैर्गुणानुपादत्ते यथाकालं विमुञ्चति ।**

**न तेषु सज्जते योगी गोभिर्गा इव गोपतिः ॥ ५० ॥**

**गोपतिः** सूर्यः **गोभिः** किरणैः यथाकालं **गाः उपादत्ते इव**[1] तथा **योगी** श्रीहरि-ध्यानासक्तः **यथाकालं** विहितकालमनुसृत्येत्यर्थः । **गुणान्** विषयान् **गुणैः** हस्तरसनादीन्द्रियैः **उपादत्ते** भुङ्क्ते इत्यर्थः, **विमुञ्चति** च अविहितकाले प्राप्तानपि विषयान् परित्यजतीत्यर्थः । **तेषु** विषयेषु **न सज्जत** न युज्यते । विषयाणां वशीकरणशक्तत्वात् तत्परिहारे जागरूकेण भाव्यमिति भावः ॥ ५० ॥

सूर्यात् स्वयं शिक्षितं गुणमाह- **बुद्धिसंस्थेनेति ।**

**बुद्धिसंस्थेन भेदेन व्यक्तस्थ इव तद्गतः ।**

**लक्ष्यते स्थूलमतिभिरात्मा चाम्बुस्थितार्कवत् ॥ ५१ ॥**

अर्कबिम्बः **अम्बुस्थितार्कवत्** प्रतिबिम्बवत् **स्थूलमतिभिः** सूर्यस्वरूपानभिज्ञैः दृश्यते वर्तुलमण्डळमात्रत्वेन ज्ञायते, पुरुषरूपेण न ज्ञायते । एवं **तद्गतः** शरीरस्थः **आत्मा** अन्तर्यामी **व्यक्तस्थ इव** जीव इव **बुद्धिसंस्थेन भेदेन** आत्मभेदेन प्रकारेण **लक्ष्यते ।** अयं परमात्मा न भवति, जीव इव कश्चिदिति ज्ञायते इत्यर्थः । सूक्ष्मबुद्धि-सम्पन्नैः परमात्मत्वेनैव अन्तर्यामी ज्ञातव्य इति भावः । इमां बुद्धिं शिक्षितवान् ॥ ५१ ॥

कपोतस्य व्यसनदर्शनेन स्वस्य सञ्जातं विरागबुद्धिविशेषमाह- **नातिस्नेह** इति ।

---

[1] "गाः जलानि उपादत्ते इव यथा" इत्यर्थः ।

**नातिस्नेहः प्रसङ्गो वा कर्तव्यः क्वापि केनचित् ।**
**कुर्वन् विन्देत सन्तापं कपोत इव दीनधीः ॥ ५२ ॥**

**प्रसङ्गः** नित्यसम्बन्धः नित्यं सम्भाषणं वा स्नेहं वा **कुर्वन्** कपोतः यथा **सन्तापं विन्दते** तथा स्नेहादि कुर्वन् जनः सन्तापं विन्दते । तत्परिहाराय **क्वापि** क्वचित् एकस्मिन्नपि समये । **केनचिदपि** स्वदेहे स्वेन वा स्नेहः न कर्तव्य इति बुद्धिं शिक्षितवान् ॥ ५२ ॥

कपोतस्य स्नेहादिनिदानविष्णुसामर्थ्यजिज्ञासायां कपोतव्यापारं विविच्याह- **कपोतः कश्चनेति ।**

**कपोतः कश्चनारण्ये कृतनीडो वनस्पतौ ।**
**कपोत्या भार्यया सार्धमुवास कतिचित् समाः ॥ ५३ ॥**

**कपोतौ स्नेहगुणितहृदयौ गृहधर्मिणौ ।**
**दृष्टिं दृष्ट्याऽङ्गमङ्गेन बुद्धिं बुद्ध्या बबन्धतुः ॥ ५४ ॥**

**वनस्पतौ** वृक्षे कोटरे कृतं नीडं= पक्षिनिकेतनं येन सः । **कति** चित् **समाः** वर्षान् वत्सरेषु तत्र **उवास** । स्नेहगुणिते= अभिवृद्धस्नेहोपेते हृदये ययोस्तौ । **गृहधर्मिणौ** प्रजावतौ भविष्यन्तौ इति भावः । **दृष्ट्या दृष्टिं** एकस्य अवलोकनेन अपरस्य स्वयमव-लोकनं, **बबन्धतुः** अन्योन्यमवलोकनं चक्रतुरिति भावः । एकस्य **अङ्गेन** अपरस्य स्वयम् अङ्गं **बबन्धतुः**, अन्योन्यं कण्डूयनादि चक्रतुरिति भावः । **बुद्ध्या बुद्धिं बबन्धतुः** एकस्य सञ्चारादिबुद्धौ च अपरस्यापि सञ्चारादिबुद्धिर्भवतीति भावः ॥ ५४ ॥

कपोतयोः विषयव्यापारं विवृणोति- **शय्यासनेति** ।

**शय्यासनाटनस्थानवार्ताक्रीडाशनादिषु ।**
**मिथुनीभूय विस्रब्धौ चेरतुर्वनराजिषु ॥ ५५ ॥**

**यद्यद् वाञ्छति सा राजन् तदर्थमनुकम्पितः ।**
**तं तं समानयत् कामं कृच्छ्रेणाप्यजितेन्द्रियः ॥ ५६ ॥**

**कपोती प्रथमं गर्भं गृह्णती काल आगते ।**
**अण्डानि सुषुवे नीडे स्वपत्युः सन्निधौ सती ॥ ५७ ॥**

**तेषु काले व्यजायन्त रचितावयवा हरेः ।**
**शक्तिभिर्दुर्विभाव्याभिः कोमलाङ्गतनूरुहाः ॥ ५८ ॥**

स्थानं= आहारलाभं प्रतीक्ष्य क्वचिदवस्थानं, **विस्रब्धौ** विश्वासोपेतौ, अन्योन्यं परित्यागशक्त्या रहितौ इति भावः । **मिथुनीभूय** अन्योन्यं मिलित्वा **वनराजिषु** विविधवनेषु **चेरतुः** आहारार्थम् इति भावः । हे **राजन् ! कपोती** कपोतस्य स्त्री **प्रथमं गर्भं गृह्णन्ती** दधाना **यद्यद्=** भोज्यं **वाञ्छति तदर्थम्** अपेक्षितानयनार्थम्, अपेक्षितानयनकारणमाह- **अनुकम्पितः** दयया युक्तः सन् **अजितेन्द्रियः** सन् **कृच्छ्रेण** आयासेन **तं तं कामं समानयत । सती** निवसती **कपोती काले** प्रसवकाले **आगते नीडे** पक्षिनिकेतने । **काले** अवयवोपचयकाले आगते सति **दुर्विभाव्याभिः** 'इदमित्थमेव' इति लौकिकनिश्चयाविषयैः अघटितघटनारूपाभिः प्रत्येकं विचित्राभिरिति भावः । **हरेः शक्तिभिः** रचिताः= तत्र स्थानेषु विरचिताः सन्तः अवयवाः= चञ्चुपुटचरणाद्य-वयवाः **व्यजायन्त** ॥ ५८ ॥

**प्रजाः पुपुषतुः प्रीतौ दम्पती पुत्रवत्सलौ ।**
**शृण्वन्तौ कूजितं तासां रवन्तौ कळभाषितैः ॥ ५९ ॥**

**तासां पतत्रैः सुस्पर्शैः कूजितैर्मुखचेष्टितैः ।**
**प्रत्युद्गमैरदीनानां पितरौ मुदमापतुः ॥ ६० ॥**

**स्नेहबद्धानुहृदयावन्योन्यं विष्णुमायया ।**
**विमोहितौ दीनधियौ शिशून् पुपुषतुः प्रजाः ॥ ६१ ॥**

**एकदा जग्मतुस्तासामशनार्थं कुडुम्बिनौ ।**
**परितः कानने तस्मिन्नर्थिनौ चेरतुश्चिरम् ॥ ६२ ॥**

**दृष्ट्वा तान् लुब्धकः कश्चिद् यदृच्छातो वनेचरः ।**
**जगृहे जालमावृत्य चरतः स्वालयान्तिके ॥ ६३ ॥**

**कपोतश्च कपोती च प्रजापोषे सदोत्सुकौ ।**
**गतौ पोषणमादाय स्वनीडमुपजग्मतुः ॥ ६४ ॥**

**प्रजाः** जातान् शिशून् स्वयं **रवन्तौ** प्रतिकूजितानि कुर्वन्तौ कळभाषिणौ च **प्रत्युद्गमैः** स्वाभिमुखागमैः **अदीनानां** सम्पन्नकामानाम् । **तासां** प्रजानां **सुस्पर्शैः** पतत्रस्पर्शादिभिः **पितरौ** माता च पिता च **मुदमापतुः ।** विष्णोर्मायया सर्वपोषणानुकूलशक्त्या **विमोहितौ** पोषकान्तराभावात् 'मयैव एतत्पोषणं कर्तव्यम्' इति बुद्ध्युपेतौ **दीनधियौ** असन्तुष्टहृदयौ, सदाऽपि विषयाघातेनेति भावः । **प्रजाः** पुत्रान् पुपुषतुः । **अर्थिनौ** प्रजापोषणमपेक्षमाणौ, **लुब्धकः** पक्ष्यादिभिः जीवनवान् इत्यर्थः, **यदृच्छातः** अदृष्टप्रेरकेश्वरेच्छया **जालं** पाशरूपं पक्षिबन्धकं **आवृत्य** परितः निवेश्य **चरतः तान्**

पक्षिशावकान् **जगृहे । सदोत्सुकौ** आसक्तौ आहारानयनार्थं पूर्वं **गतौ** तत्र चिरं चरन्तौ **पोषणमादाय नीडं**= विहाराश्रयं **उपजग्मतुः** ॥ ६४ ॥

**कपोती स्वात्मजान् वीक्ष्य बालकान् जालसंवृतान् ।**
**तानभ्यधावत् क्रोशन्ती क्रोशतो भृशदुःखिता ॥ ६५ ॥**

**साऽसकृत्स्नेहगुणिता दीनचित्ताऽजमायया ।**
**स्वयं चाबध्यत सिचा बद्धान् पश्यन्त्यपस्मृतिः ॥ ६६ ॥**

**कपोतश्चात्मजान् बद्धानात्मनोऽप्यधिकप्रियान् ।**
**भार्यां चात्मसमां दीनां विललापातिदुःखितः ॥ ६७ ॥**

जालेन सर्वतः पाशैः संवृतान्= बद्धान् **क्रोशतः** दुःखेनाक्रन्दमानान् अजमायया प्राप्तेन **असकृत्** बहुधा सम्पन्नः यः स्नेहः तेन गुणिता= वृद्धा सा माता **दीनचित्ता** स्वाभिलाषरहितचित्ता बद्धान् पश्यन्त्यपि अजस्य मायया आवरकशक्त्या= अनिष्ट-साधनत्वज्ञानावरकशक्त्या **अपस्मृतिः** अनिष्टसाधनत्वज्ञानरहिता **सिचा** जालेन **स्वयं** च आबध्यत ॥ ६७ ॥

**अहो मे पश्यतापायमल्पपुण्यस्य दुर्मतेः ।**
**अतप्तस्याकृतार्थस्य**[1] **गृहस्त्रैवर्गिको हतः ॥ ६८ ॥**

**अतप्तस्य** चान्द्रायणादिव्रतोपेतादन्यस्य, **अकृतार्थस्य** कृतार्थात् धर्मरक्षणप्रयो-जनोपेतादन्यस्य वर्गिकः धर्मार्थकामानुबन्धी **गृहः** गृहस्थाश्रमः गृहा इति वा **हतः** ॥ ६८ ॥

---

[1] 'अतृप्तस्याकृतार्थस्य' इति पाठान्तरम् ।

**अनुरूपाऽनुकूला च यस्य मे पतिदेवता ।**
**शून्ये गृहे मां सन्त्यज्य पुत्रैः स्वर्याति साधुभिः ॥ ६९ ॥**

**सोऽहं शून्यगृहे दीनो मृतदारो मृतप्रजः ।**
**जिजीविषे किमर्थं वा विधुरो दुःखजीवनः ॥ ७० ॥**

**तांस्तथैवावृतान् सिग्भिर्मृत्युग्रस्तान् विचेष्टतः ।**
**स्वयं च कृपणः शिक्षु पश्यन्नप्यबुधोऽपतत् ॥ ७१ ॥**

**तं लब्ध्वा लुब्धकः क्रूरः कपोतं गृहमेधिनम् ।**
**कपोतकान् कपोतीं च सिद्धार्थः प्रययौ गृहम् ॥ ७२ ॥**

**एवं कुडुम्ब्यशान्तात्मा द्वन्द्वारामः पतत्रिवत् ।**
**पुष्णन् कुडुम्बं कृपणः सानुबन्धोऽवसीदति ॥ ७३ ॥**

**यः प्राप्य मानुषं लोकं मुक्तिद्वारमपावृतम् ।**
**गृहेषु खगवत् सक्तस्तमारूढच्युतं विदुः ॥ ७४ ॥**

**॥ इति श्रीमद्भागवते एकादशस्कन्धे सप्तमोऽध्यायः ॥**

**पतिदेवता** पतौ देवता अस्तीतिबुद्धिर्यस्याः सा, पतिः देवतावत् मान्यः यस्याः सा, **विधुरः** एक एवेत्यर्थः **शिग्भिः** सर्वतः पाशैः **आवृतान्** पश्यन् स्वयमपि **शिक्षु** जालेषु **अपतत्** । **क्रूरः** दयारहितः । **अशान्तात्मा** परमात्मासक्तचित्तरहितः **एवं** खगवत् विषयासक्तः **अवसीदति** स्वाभिमतसुखाद् भ्रश्यति । तिर्यगादिदेहस्थापेक्षया पुरुषदेहस्थस्य विषयासक्तिः परदेवताराधनराहित्यं च हस्तङ्गतनित्यसौख्यविभ्रंशः इत्याह- **यः प्राप्येति** । **लोकं** देहं, **अपावृतं** ईश्वरादिज्ञाने आवरणमस्तीति भावः ।

यः **गृहेषु सक्तः तं** आरूढः सन्= नित्यसौख्यपुष्कळसाधनं प्राप्तः सन् पुनः नित्यसौख्यच्युतः यः तादृशं **विदुः** ज्ञानिनः । आरूढात्= प्राप्तात् नित्यसौख्यात् च्युतं विदुः इति वा ॥

॥ इति श्रीयादवेंद्रयतिविरचिते एकादशस्कन्धव्याख्याने सप्तमोध्यायः ॥

# 8 | अष्टमोऽध्यायः

स्वर्गादिसाधनधर्मादिकं भवान् न करोति, तत् कुतः ? इति प्रश्नस्य उत्तरमाह-**सुखमिति ।**

**ब्राह्मण उवाच-**

**सुखमैन्द्रियकं राजन् स्वर्गे नरक एव वा ।**
**देहिनां यद् यथा दुःखं तस्मान्नेच्छेत तद् बुधः ॥ १ ॥**

देहिनः **नरके** इह च **दुःखं यथा** हेयं स्वरूपसुखानुभवविरोधित्वादिति भावः । तथा **ऐन्द्रियकं स्वर्गे** इह च सुखमपि हेयम् विषयसुखस्य महादुःखानुषङ्गादिति भावः । **तस्माद्** विषयसुखस्यापि हेयत्वात् **तत्** विषयसुखमपि **नेच्छेत ।** अतो मम तादृशधर्मादौ न यत्न इति भावः ॥ १ ॥

भवान् देहस्थित्यर्थम् आहारसम्पादनं वा कुतो न करोति ? इत्यत आह-**ग्रासमिति ।**

**ग्रासं विसृष्टं दिष्टेन महान्तं स्तोकमेव वा ।**
**यदृच्छयैवापतितं ग्रसेदजगरोऽक्रियः ॥ २ ॥**

**दिष्टेन** पुरुषकर्मणा **विसृष्टं** विविधतया सृष्टं= उत्पन्नं **ग्रासम्** अन्नं **यदृच्छया** ईशेच्छया इदानीं तदन्नग्राससम्पादनरूपयत्नं विनेति भावः । **आपतितं** समीपम् आप्तं **स्तोकं वा** स्वल्पं वा **अक्रियः** ग्रासार्थं सञ्चारहितः कर्मफलभोक्ता सन् ॥ २ ॥

**शयीताहानि भूरीणि निराहारोऽनुपक्रमः ।**
**यदि नोपनमेद् ग्रासो महाहिरिव दिष्टभुक् ॥ ३ ॥**

**ओजःसहोबलयुतं बिभ्रद् देहमकर्मकम् ।**
**शयानो वीतनिद्रश्च नेहेतेन्द्रियवानपि ॥ ४ ॥**

**महाहिरिव** अजगर इव **अनुपक्रम एव** आहारार्थं सञ्चाररहित एव **भूरीण्यप्यहानि शयीत ।** तेन कर्मनिवृत्तिर्भवेत् । देहावस्थानकारणकर्मणि सति **सहः** निष्ठुरवचनादि-सहनशक्तिः **बलं** बालोद्धरणादिशक्तिः एभिर्युतम् एतत्प्रापकौजसहोबलयुतपरमात्मांशै-र्युक्तत्वात् इति भावः । तदा न विद्यते कर्म= सञ्चारादि यस्य सः तम् **अकर्मकं देहं बिभ्रत् शयानः । अकर्मकं** यथा भवति तथा शयान इति वा । **वीतनिद्रः** परमात्माज्ञानरहितः **नेहेत** द्रविणशाल्यादिषु यत्नं न कुर्यात् ॥ ४ ॥

अर्णवगुणशिक्षामाह- **मुनिरिति ।**

**मुनिः प्रसन्नगम्भीरो दुर्विगाह्यो दुरत्ययः ।**
**अनन्तपारो ह्यक्षोभ्यः स्तिमितोद इवार्णवः ॥ ५ ॥**

स्तिमितानि= निश्चलानि उदानि= उदकानि यस्य सः **अर्णव इव मुनिः** प्रसन्नः= परहितानुकूलचित्तव्यापारः, स चासौ गम्भीरश्च प्रसन्नगम्भीरः, अविदितस्वभावश्च स्यात् । **दुर्विगाह्यः** वशीकर्तुमशक्यः द्रविणादिविषयदानेनापीति भावः । **दुरत्ययः** परैः ईश्वरध्यानादिलक्षणस्वगुणनाशरहितः । अन्तः= नाशः इयत्ता वा, पारः= निरोधकारणं ताभ्यां रहितः । **अक्षोभ्यः** निष्ठुरवचनादिभिः वनितादिविषयैः च क्षोभं कर्तुम् अशक्यः स्यादिति शिक्षितवान् ॥ ५ ॥

ननु भिक्षालाभे मनसः उत्साहलक्षणोद्रेको दृश्यते, तदलाभे मनसः उत्साहह्रासः । अतः कथं स्तिमितोदार्णवसाम्यम् ? इत्यत आह- **समृद्धकाम** इति ।

**समृद्धकामो हीनो वा नारायणपरो मुनिः ।**
**नोत्सर्पेत न शुष्येत सरिद्भिरिव सागरः ॥ ६ ॥**

**दृष्ट्वा स्त्रियं देवमायां तद्भावैरजितेन्द्रियः ।**
**प्रलोभितः पतत्यन्धे तमस्यग्नौ पतङ्गवत् ॥ ७ ॥**

मुनिः नारायणपरः न तु विषयपर इति भावः, काम्यन्त इति कामाः= विषयाः समृद्धकामः नोत्सर्पेत कामैर्हीनो वा न शुष्येत । यथा सागरः वर्षासु सरिद्भिः नोत्सर्पति, अन्यथा न शुष्यति, तथेत्यर्थः । विषयदोषावधारणवान् विषयालाभे नोत्सर्पतीति भावः । पतङ्गः= शलभः । पतङ्गवत् अग्नौ पतन्तं पतङ्गं दृष्ट्वा 'वनिताकामनाद्ययोग्यकर्म न कर्तव्यम्' इति बुद्धिं शिक्षयेदित्यर्थः ॥ ७ ॥

सुरभिन्नानां स्वैरिणीयोगेन ज्ञानहानिं पापं चाह- **योषिदिति ।**

**योषित्सु तल्पशरणाभरणाम्बरादिद्रव्येषु मायारचितेषु मूढः ।**
**प्रलोभितात्मा ह्युपभोगबुद्ध्या पतङ्गवन्नश्यति नष्टदृष्टिः ॥ ८ ॥**

**मायारचितेषु** माया= ईश्वरस्य मोहकारणशक्तिः तया विरचितेषु, मोहकारणशक्तियुक्तेष्विति भावः । योषिदादिषु **द्रव्येषु** । उपभोगाः भुज्यन्ते इति भोगाः । महाभोज्यानि महासुखसाधनानीति बुद्ध्या प्रलोभितः= विषयासक्तिं प्राप्तः आत्मा यस्य सः **पतङ्गवत्** शलभवत् **नष्टदृष्टिः** श्रीहरिज्ञानरहितो भवति **नश्यति** दुःखवान् भवति ॥ ८ ॥

श्रीहरिश्रवणाद्यासक्तस्य देहधारणोपायमाह- **स्तोकमिति** ।

**स्तोकं स्तोकं ग्रसन् ग्रासं देहो वर्तेत यावता ।**

**गृहान् व्रजेत् समातिष्ठन् वृत्तिं माधुकरीं मुनिः ॥ ९ ॥**

**माधुकरीं** मधुकरसम्बन्धिनीं वृत्तिं **समातिष्ठन्** आश्रितः **गृहान्** बहुगृहान् **व्रजेत्** । तत्र **स्तोकं स्तोकं** स्वल्पं स्वल्पम् अन्नं याचयेदित्यर्थः । बह्वन्नयाचनया गृहिणां मनःपीडां न कुर्यादित्यर्थः । लब्धेन यावत्परिमित्या ग्रासेन **देहो वर्तेत** तावत् तं **ग्रासं** नदीतटाकतीरे देवाय निवेदयित्वा **ग्रसेत्** । 'भुञ्जानस्य सरित्तटे' इत्युक्तेः । तत्तद्गेहे प्रत्येकं स्वल्पग्रासतोऽलमिति भावः ॥ ९ ॥

प्रकारान्तरेणापि मधुकरवृत्तिमाह- **अणुभ्यश्चेति** ।

**अणुभ्यश्च महद्भ्यश्च शास्त्रेभ्यः कुशलो नरः ।**

**सर्वतः सारमादद्यात् पुष्पेभ्य इव षट्पदः ॥ १० ॥**

**अणुभ्यः** ब्रह्मसूत्रादिभ्यः **महद्भ्यश्च** भारतादिभ्यश्च **शास्त्रेभ्यः कुशलः** सन् सार-स्वीकारे कुशलः **सर्वतः** कलाविद्याभ्यश्च **सारं** श्रीहरिगुणोत्कर्षं तदुपयुक्तं च **आदद्यात्** अनुसन्दध्यात् । षट्पदवत् **पुष्पेभ्यः सारं** मध्विव सङ्गृह्णीत इति भावः ॥ १० ॥

मधुकरव्यापारात् पुनर्बुद्धिविशेषं शिक्षितवानित्याह- **सायन्तनमिति** ।

**सायन्तनं श्वस्तनं वा न सङ्गृह्णीत भिक्षितम् ।**

**पाणिपात्रोदरामत्रो मक्षिकेव न सङ्ग्रही ।**

**मक्षिका इव सङ्गृह्णन् सह तेन विनश्यति ॥ ११ ॥**

**पाणिपात्रः** पाणौ उदकपात्रं यस्य स कुटीचकादिः । उदरम् अमत्रम् अन्नाधानं यस्य सः । उदकपात्रं हस्तादिः । **भिक्षितं** याञ्चया प्राप्तं **न सङ्गृह्णीत,** तदैव भुञ्जीत इत्यर्थः । **मक्षिकेव** मधुकर इव **सायन्तनं श्वस्तनं** श्वस्तनभोजनमुद्दिश्य भिक्षितस्य **सङ्ग्रही न** स्यात् । सङ्ग्रहे बाधकमाह- **मक्षिका इवेति । तेन** सङ्गृहीतेन सह **विनश्यति** चोरादिभिः, स्वयं च दुःखं प्राप्नोति इति भावः ॥ ११ ॥

**पदाऽपि युवतीं भिक्षुर्न स्पृशेद् दारवीमपि ।**
**स्पृशन् करीव बध्येत करिण्या अङ्गसङ्गतः ॥ १२ ॥**

**भिक्षुरपि युवतीं दारवीमपि** दारुकृतप्रतिमामिव, दारुप्रतिमानुसन्धाने सति युवति-स्मरणाच्चित्तविक्षेपःस्यादिति भावः । कदाऽपि **न स्पृशेत् । करिण्याः** स्त्रीगजस्य, **करी** पौरैः *यथा* बध्यते ॥ १२ ॥

स्वैरिणीसङ्गस्य बाधकान्तरमप्याह- **नाधिगच्छेदिति ।**

**नाधिगच्छेत् स्त्रियं प्राज्ञः कर्हिचिन्मृत्युमात्मनः ।**
**बलाधिकैर्विहन्येत गजैरन्यैर्गजो यथा ॥ १३ ॥**

**न देयं नोपभोग्यं च लुब्धैर्यद् दुःखसञ्चितम् ।**
**भुङ्क्ते स्वमपि तच्चान्यो मधुहेवार्थविन्मधु ॥ १४ ॥**

**सुदुःखोपार्जितैर्वित्तैराशासानां गृहाशिषः ।**
**मधुहेवाग्रतो भुङ्क्ते यतिर्वै गृहमेधिनाम् ॥ १५ ॥**

**कर्हिचित्** कदाचिदपि करीयुक्तगजो **यथा** हन्येत । एतादृशं **स्वं** द्रव्यं **अर्थवित्** स्वकार्यपरः **मधुहेव** मध्वपहारीव अन्योऽपि राजा वा **भुङ्क्ते ।** धर्मानुपयुक्तस्य वित्तस्य

सर्वसाधारणत्वादिति भावः । **यतिरपि मधुहेव गृहाशिषः** गृहस्थानां मनोरथान् **आशासानां** वित्तैः कर्तुमिच्छतां **गृहमेधिनां** अन्नादि स्वम् उपादेयम् **अग्रतः भुङ्क्ते** । गृही यक्षवित्तश्चेत्[1] ततः बलिदानादि स्वीकर्तव्यमिति भावः ॥ १५ ॥

**ग्राम्यगीतं न शृणुयाद् यतिर्वनचरः क्वचित् ।**
**शिक्षेऽहं हरिणाद् बद्धान्मृगयोर्गीतमोहितात् ॥ १६ ॥**

**नृत्तवादित्रगीतानि जुषन् ग्राम्याणि योषिताम् ।**
**आसां क्रीडनकान्धः स्याद् ऋष्यशृङ्गो यतिर्यथा ॥ १७ ॥**

**मृगयोः** मृगग्रहीतुः तस्य गीतेन मोहितात् **बद्धात् हरिणात्** तथा मया दृष्टादिति, भावः । **वनचरः यतिः ग्राम्यगीतं** क्वचिदपि न शृणुयादित्याह- **शिक्ष** इति । नृपशुः विवेकहीनः बद्धो भवेत् । मुनेस्तु कुतो बन्धः ? इत्यत आह- **नृत्तेति** । ऋष्यशृङ्गमुनिरिव **आसां** मोहशक्त्युपेतानां **योषितां यतिः** निर्जितेन्द्रियग्रामोऽपि **क्रीडनकः** क्रीडोपयुक्तः स्यात्, सचासौ अन्धश्च स्यात् तस्मात् वादित्रगीतादीनि कदाऽपि यतिर्नैव शृणुयात् इति भावः ॥ १७ ॥

विषयेष्वाविशतः मदिरादिरसासक्तौ बाधकमाह- **जिह्वया इति** ।

**जिह्वयाऽतिप्रमाथिन्या जनो रसविमोहितः ।**
**मृत्युमृच्छत्यतद्बुद्धिर्मत्स्यस्तु बडिशैर्यथा ॥ १८ ॥**

**अतिप्रमाथिन्या** मथनं चित्तक्षोभः अत्यन्तचित्तक्षोभकर्त्रा सुरसभोज्यान्नलाभेनेति भावः । **जिह्वया** रसानुभवकरणेन रसे विमोहितः= आसक्तः, रस एव महासुखकारणमिति भ्रान्तो वा । **अतद्बुद्धिः** तस्य विषयस्य अनिष्टसाधनत्वबुद्ध्या रहितः **मृत्युं** पापं

[1] 'यथेष्टवित्तश्चेत्' इति पाठः सम्भाव्यते । यक्षवित्त इति पाठः प्रामादिकः ।

वा **ऋच्छति** प्राप्नोति । विषयासक्त्या रागद्वेषादिनेति भावः । **बडिशैः** मांसप्रोतवक्र-सूचिभिः मत्स्यग्राहकैः इति भावः । मीनः यथा मृत्युं ऋच्छति । तस्मात् रसनेन्द्रिय-वशेन भवेदिति बुद्धिं शिक्षितवान् ॥ १८ ॥

रसनेन्द्रियजयस्य असुलभत्वात् रसनाजये जागरूकेन भाव्यमित्याह- **इन्द्रि-याणीति** ।

**इन्द्रियाणि जयन्त्याशु निराहारा मनीषिणः ।**
**वर्जयित्वा तु रसनमसौ रस्ये च वर्धते ॥ १९ ॥**

**तावज्जितेन्द्रियो न स्याद् विजितान्येन्द्रियः पुमान् ।**
**न जयेद् रसनं यावज्जितं सर्वं जिते रसे ॥ २० ॥**

**निराहाराः** आहाररहिताः, इन्द्रियाणां शक्तिह्रासार्थमिति भावः । **रसनां वर्जयित्वा इन्द्रियाणि आशु जयन्ति** । **असौ** रसना **रस्ये** रस्यः= विषयरागः तस्मिन् सति **विवर्धते** । रागे सति निराहारेऽपि रसनाशक्तिह्रासो नास्तीति भावः । **विजितान्येन्द्रि-योऽपि पुमान् रसनां याव** त्पर्यन्तं **न जयेत तावत् जितेन्द्रियो न स्यात्** । इन्द्रियोपोद्बल-कस्य रागस्य सत्त्वादिति भावः । रसनाजयः कदा ? इति जिज्ञासायामाह- **जितमिति** । **रसे** विषयरागे **जिते** सम्यक् तिरस्कृते सति **सर्वं** रसनादीन्द्रियजातं **जितं** स्यात् इति बुद्धिं शिक्षितवान् ॥ २० ॥

**पिङ्गळा नाम वेश्याऽऽसीद् विदेहनगरे पुरा ।**
**तस्याः संशिक्षितं किञ्चिन्निबोध नृपसत्तम ॥ २१ ॥**

**सा स्वैरिण्येकदा कान्तं सङ्केतमुपनेष्यती ।**
**अभूत् काले गृहद्वारि बिभ्रती रूपमुत्तमम् ॥ २२ ॥**

**मार्ग आगच्छतो वीक्ष्य पुरुषान् पुरुषर्षभ ।**
**तान् शुल्कदान् वित्तवतः कान्तान् मेनेऽर्थकामुका ॥ २३ ॥**

**आगतेष्वपयातेषु सा सङ्केतोपजीवना ।**
**अप्यन्यो वित्तवान् कोऽपि मामुपेष्यति भूरिदः ॥ २४ ॥**

**एवं दुराशयध्वस्तनिद्रा द्वार्यवलम्बती ।**
**निर्गच्छन्ती प्रविशती निशीथं समपद्यत ॥ २५ ॥**

**स्वैरिणी** स्वेच्छानुसारेण कामिषु सङ्गवती **सा** पिङ्गला **सङ्केतं** स्वसङ्गस्य कृतं प्राप्य[1] **कान्तं** गृहम् **उपनेष्यती** प्रापयिष्यन्ती सती **रूपं** देहं **उत्तमं बिभ्रती** सती अलङ्कृतदेहेत्यर्थः । **काले** सायङ्काले **गृहद्वारि अभूत्** स्थितवती । **अर्थकामुका** यतः अतः **तान् शुल्कदान्** स्वरत्यै द्रविणदान् **मेन** । रागातिशयाद् भ्रान्तिरुत्पन्नेति भावः । **आगतेषु** स्वगेहसमीपम् आगतेषु **अपयातेषु** स्वाभिमतवित्तदानाय अनुमति-मकृत्वेति भावः । सङ्केतेन= कामिजनप्राप्तद्रव्येण उपजीविनी **सा** पिङ्गला **अन्यः** अपयातेभ्यः अन्यः **भूरिदः कोऽपि** यःकश्चित् **माम् उपेष्यति** इत्येवं दुराशया **द्वारि अवलम्बती** द्वारावलम्बनं कुर्वती गेहं **प्रविशन्ती** पुनः **निर्गच्छन्ती** इत्थं रात्रेः अर्धं समपद्यत ॥ २५ ॥

**तस्या वित्ताशया शुष्यद्वक्राया दीनचेतसः ।**
**निर्वेदः परमो जज्ञे चिन्ताहेतिः सुखावहः ॥ २६ ॥**

---

[1] 'स्वसङ्गस्य वित्तं (शुल्कं) प्राप्य' इति पाठः स्यादिति भाति । 'स्वसङ्कल्पितशुल्कं प्राप्य' इति वा पाठः स्यात् । 'स्वसङ्गस्य कृतम्' इत्यन्वयानुपपत्तेः ।

**तथा निर्विण्णचित्ताया गीतं शृणु यथा मम ॥ २७ ॥**

**निर्वेद आशापाशानां पुरुषस्य यथा ह्यसिः ।**
**नह्यङ्गाजातनिर्वेदो देहबन्धं जिहासति ॥ २८ ॥**

**तस्याः** पिङ्गलायाः दीनं= विकारोपेतं चेतो यस्याः । अभिलषितस्य अलाभेनेति भावः । **चिन्ताहेतिः** चिन्ताछेदे आयुधरूपः **निर्वेदः** दुःखानुभवप्राप्तविरागः इह **सुखावहः परमः** अनिवर्त्यः **जज्ञे** । निर्वेदं स्तौति आशालक्षणपाशानां बन्धकानां यथा लक्ष्यमनतिक्रान्तः **असिः** बन्धच्छेदकं तथेति भावः । परत्रापि सुखकारणं दुःखनिवर्तकं चेति स्तौति- **नह्यङ्गेति** । देहेन प्राप्तः बन्धः= दुःखानुबन्धः तम् **अजातनिर्वेदः न हि जिहासति** जातनिर्वेद एव बन्धं जिहासतीत्यर्थः । **तथा** तादृशदुःखेन **निर्विण्णचित्तायाः** विरागसम्पन्नचित्तायाः, चेतनायाः[1] यद् **गीतं** तत् शृणु ॥ २८ ॥

**पिङ्गळोवाच-**

**अहो मे मोहविततिं पश्यताविजितात्मनः ।**
**या कान्ताद् असतः[2] कामं कामये येन बालिशा ॥ २९ ॥**

**सन्तं समीपे रमणं रतिप्रदं वित्तप्रदं नित्यमिमं विहाय ।**
**अकामदं दुःखभयाधिशोकमोहप्रदं तुच्छमहं वृणेऽज्ञा ॥ ३० ॥**

**अविजितात्मनः** मनोवशीकरणरहितायाः, विषयदोषदर्शनाभावेन इति भावः । **मे मोहविततिं** भ्रान्तिविस्तारं हे सख्यः ! **पश्यत** या अनेन मोहेन **बालिशा** प्रेक्षारहिता **असतः** दुर्वित्तात् **कामं** यथेष्टं **कान्तात् कामये** कान्तत्वेन वृणोमि । **अहो** अविवेक-निरसनशक्तावपि अविवेकः प्राप्नोति आश्चर्यम् ! मोहो नाम अनिष्टे इष्टत्वज्ञानं,

---

[1] 'पिङ्गलायाः' इति पाठः स्यात् । 'चेतनायाः' इति पाठोऽधिकः प्रामादिकः । [2] 'व्रजतः' इति पाठान्तरम् ।

परमेष्टस्य ज्ञानराहित्यम् अज्ञानम्, उभयं च मम जातमित्याह- **सन्तमिति । समीपे** हृदयगुहायां **सन्तं नित्यं** सुखप्रदम् अजानती एतादृशं विहाय **अकामदम्** अभीष्टप्रदाने असमर्थम्, आधिः= चिन्ताप्राप्तमनोदुःखं, शोकः= विषयनाशप्राप्तदुःखं, मोहः= पुण्यपापाद्यपलापबुद्धिः, एतेषां दातारं स्वसङ्गादिति भावः । **तुच्छः** असङ्कल्पः तं, अस्वतन्त्रत्वादिति भावः । **अहं** विषयमोहोपेता । सुखादिदातृत्वेन **वृणे** ॥ ३० ॥

**अहो मयाऽऽत्मा परितापितो वृथा साङ्केत्यवृत्त्याऽतिविगर्ह्यवार्तया ।**
**स्त्रैणान् नरांश्वार्थतृषाऽनुशोच्यान् क्रीत्वा हि वित्तं रतिमात्मनेच्छती ॥ ३१ ॥**

**अहो अर्थतृषा** द्रव्यतृषया **शोच्यान्** शोकविषयान् दुर्वित्तान् इत्यर्थः । **स्त्रैणान्** उद्दिश्य **आत्मना** देहवित्तेन **वित्तं क्रीत्वा** अथवा वित्तमुद्दिश्य[1] देहद्रव्येण **क्रीत्वा** कायेन लब्ध्वा **रतिमिच्छती** या अहं तया **मया आत्मा** चेतनः **वृथा** निश्रेयसलक्षणफलं विना स्वस्या अतिविगर्ह्या वार्ता= क्रयविक्रयादिलक्षणा यस्याः, वार्ता= जननिन्दा वा, वार्ता जीविका वा **सङ्केतवृत्त्या** द्रविणदानसम्मतवृत्त्या **परितापितः** अधर्मप्रापितं दुःखं वा प्रापितः[2] ॥ ३१ ॥

जुगुप्सितविविधकामिजनसङ्गलक्षणं स्वस्य स्वैरिणीत्वं विनिन्दति- **यदस्थिभि-रिति ।**

**यदस्थिभिर्निर्मितवंशवंश्यस्थूणं त्वचा रोमनखैः पिनद्धम् ।**
**क्षरन्नवद्वारमगारमेतद् विण्मूत्रपूर्णं मदुपैति काऽन्या ॥ ३२ ॥**

**विदेहानां पुरे ह्यस्मिन् अहमेकैव मूढधीः ।**
**याऽन्यमिच्छन्त्यतः स्वस्मादात्मदात् कान्तमच्युतात् ॥ ३३ ॥**

---

[1] अयं सम्भावितः पाठः । मूलपुस्तके तु "विमुक्तिमुद्दिश्य" इति पठ्यते । तदनन्तरं "श्रवणात्" इति च पठ्यते । सम्पातायातं स्यात् ।
[2] अत्र "वित्ताशया तदलाभचिन्तया चेति भावः" इत्यधिकं पठ्यते मूलपुस्तके । सम्पातायातं स्यात् ।

**यत्** शरीरं **अस्थिभिरेव** निर्मिताः अस्थिरूपा इत्यर्थः । वंश्यः= दीर्घतुलावंश्यः वंशे अनुषङ्गाः स्थानद्वयफलकाः **स्थूणाः** वंशाधारस्तम्भाः यस्य तत् । **त्वचा** चर्मणा **पिनद्धम्** आच्छादितं, यत् **रोमनखैः** सहितं क्षरन्ति= स्रवन्ति मलोदकस्रवणोपेतानि नव द्वाराणि यस्य तत् । विण्मूत्राभ्यां पूर्णं निशीथसमये इति भावः । यत् **अगारं** गृहमिव स्थितं तत् एतत् शरीरं **मत्** मत्तः **अन्या का उपैति** अपेक्षते, न काऽपीत्यर्थः । **याऽहं स्वस्मात् अच्युतात्** मयि अन्तर्यामिमूर्तिभिः सदा सन्निहितात् **आत्मदात्** आनन्दस्वभावप्रदात् **अतः अः** = विष्णुः तस्मात्, **अन्यम्** अल्पम् **इच्छन्ती साऽहम् एकैव** विदेहदेशानां राज्ञां वा सम्बन्धिपुर अहमेकैव **मूढधीः** बुद्धिरहिता ॥ ३३ ॥

पिङ्गला सा स्वस्याः परमभिमतं आलोचयति- **सुहृदिति** ।

**सुहृत् प्रेष्ठतमो नाथ आत्मा चायं शरीरिणाम् ।**
**तं विक्रीयात्मनैवाहं रमेऽनेन यथा रमा ॥ ३४ ॥**

**नाथः** स्वामी **अयं** विष्णुः **सुहृत्** अनिमित्तोपकारी, **प्रेष्ठतमः** सर्वस्मात् प्रियतमः स्वचेतनस्वरूपादिप्रदत्वात्, **शरीरिणाम् आत्मा च** विषयभोगादिकर्ता च यः **तम् आत्मना** चेतनस्वरूपेण **विक्रीय** क्रयेण लब्ध्वा **अनेन** लब्धेन प्रियतमेन सह **अहं रमा यथा** तथा **रमे** । पिङ्गलायाः अप्सरत्वेन परमात्माङ्गसङ्गयोग्यत्वात् इयं बुद्धिर्युक्तेति भावः ॥ ३४ ॥

परमात्मैव सर्वकालेषु चेतने स्थित्वा सदा उपकर्ता इति स्तौति- **कियत् प्रियमिति** ।

**कियत् प्रियं ते व्यभजन् कामान् मे कामदा नराः ।**
**आद्यान्तवन्तो भार्याया देवा वा कालविद्रुताः ॥ ३५ ॥**

**नूनं मे भगवान् प्रीतो विष्णुः केनापि कर्मणा ।**

**निर्वेदोऽयं दुराशाया यन्मे जातः सुखावहः ॥ ३६ ॥**

**नराः मे कामान्** विषयान् दत्त्वा **कियत् प्रियं व्यभजन्?** कियत् स्वानन्दं कृतवन्तः? प्रत्युत चिन्ताक्लेशमेव कृतवन्तः । अतस्ते परित्याज्या इति भावः । वा पक्षान्तरम् । **देवाः** प्रियकर्तारः भजनीयाः यद्यपि । अथाऽपि तेऽपि कालेन= परमात्मना विद्रुताः= वशीकृताः, परमात्मा तु स्वतः उपकर्ता, मुख्यतया भजनीय इति भावः । मे **दुराशायाऽपि** विषयेष्वासक्तियुक्तयाऽपि **निर्वेदः** विरागः **जातः** इति यत् तेन अनुमापकेन **विष्णुः मे प्रीतः** इति ॥ ३६ ॥

एवं निश्चयं सा क्लेशाद् अनुमोदते- **मैवमिति ।**

**मैवं स्युर्मन्दभाग्यायाः क्लेशा निर्वेदहेतवः ।**

**येनानुबन्धं निर्हृत्य पुरुषः शममृच्छति ॥ ३७ ॥**

येन निर्वेदेन **अनुबन्धं** कर्मबन्धं **निर्हृत्य** परिहृत्य **पुरुषः** चेतनः **शमं** दुःखशान्तिं **ऋच्छति** प्राप्नोति तादृशनिर्वेदहेतवः **क्लेशाः** मे भवन्तु । एवं निर्वेदजनका इत्यर्थः । क्लेशाः मन्दभाग्यायास्तु **मा** भवन्तु ॥ ३७ ॥

स्वकर्तव्यमाह- **तेनोपकृतमिति ।**

**तेनोपकृतमादाय शिरसा ग्राम्यसङ्गताः ।**

**त्यक्त्वा दुराशाः शरणं व्रजामि तमधीश्वरम् ॥ ३८ ॥**

**सन्तुष्टा श्रद्दधत्येतद् यथालाभेन जीवती ।**

**विहराम्यमुनैवाहमात्मना रमणेन वै ॥ ३९ ॥**

**तेन** विष्णुना **उपकृतं** निर्वेदं **शिरसा आदाय** बहुमानपुरस्सरं स्वीकृत्य विरागासक्तीः दृढीकृत्येति भावः । **ग्राम्यसङ्गताः** लौकिकविषयिणीः **दुराशाः** त्यक्त्वा **तम्** उपकारिणं **व्रजामि** । सन्तुष्टो विष्णुर्मे शरणमिति निश्चयेनेति भावः । विरागेण वा सन्तोषवती 'विष्णुर्मे रक्षकः' इत्यवधारणमुद्दिश्य **श्रद्धधती** 'अस्ति'इति बुद्ध्युपेता, न तु चञ्चल-चित्तेनेति भावः । **यथा** स्वकर्मानतिक्रम्य प्राप्तेन स्वकर्मप्रेरकेण विष्णुना प्राप्तेन इति भावः । **लाभेन** अन्नेन **जीवती** प्राणधारणं कुर्वन्ती सती **अमुना आत्मना** कल्याणगुणपूर्णेन **रमणेन** सह सुखदात्रा सह **विहरामि** ॥ ३९ ॥

सर्वानिष्टनिवर्तकत्वेन सर्वेष्टप्रदत्वेन च विष्णुरेव भजनीय इत्याह- **संसारेति** ।

**संसारकूपे पतितं विषयैर्मुषितेक्षणम् ।**
**ग्रस्तं कालाहिनाऽऽत्मानं कोऽन्योऽस्मात् त्रातुमीश्वरः ॥ ४० ॥**

कर्मबन्धसहितो देहबन्धः, स एव कूपः= स्वेच्छाविहारविरोधी, तत्र **पतितं विषयैः** विषयासक्त इत्यर्थः । **मुषितेक्षणं** निरस्तस्वहितज्ञानं **कालाहिना** कालः= कर्मपरिपाकयुक्तकाल एव अहिः तेन, **ग्रस्तम् आत्मानम्** एवम् **अस्मात्** अधीश्वरात् **अन्यः कः त्रातुम्** अनिष्टनिवृत्तीष्टप्रदानलक्षणरक्षां कर्तुम् **ईश्वरः**? न कोऽपि । त्रातुं अयमेवेश्वर इत्यर्थः ॥ ४० ॥

उक्तं विवृणोति- **आत्मैवेति** ।

**आत्मैव ह्यात्मनो गोप्ता निर्विद्येत यथाऽखिलात् ।**
**अप्रमत्त इदं पश्येद् ग्रस्तं कालाहिना जगत् ॥ ४१ ॥**

यः **अप्रमत्तः** सर्वतो जागरूकः सन् **इदम्** इष्टं **जगत्** कालाहिना कालः= संहरणकर्ता स एव अहिः= अजगरः तेन **ग्रस्तं पश्येत्** । ततः अखिलाद् भोगाद् **यथा** विस्मयातिशयेनेत्यर्थः । **निर्विद्येत** विरागवान् भवेत् । **यथा** स्वाकारं अनतिक्रम्येति वा । तत्राश्रमोचितविरागवान् भवेदित्यर्थः । तस्य **आत्मनः** जीवस्य **आत्मैव** परमात्मैव **गोप्ता** पालकः ॥ ४१ ॥

**ब्राह्मण उवाच-**

**एवं व्यवसितमतिर्दुराशाः कान्ततर्षजाः ।**

**छित्त्वोपशममास्थाय शय्यामुपविवेश ह ॥ ४२ ॥**

**आशा हि परमं दुःखं नैराश्यं परमं सुखम् ।**

**यथा सञ्छिद्य कान्ताशां सुखं सुष्वाप पिङ्गळा ॥ ४३ ॥**

**॥ इति श्रीमद्भागवते एकादशस्कन्धे अष्टमोऽध्यायः ॥**

**एवं** मननेन 'परमात्मैव भजनीयः' इति **व्यवसितमतिः** निश्चयमतिः= निश्चयबुद्धिः निश्चयरूपबुद्ध्युपेता सतीत्यर्थः । कान्ताः= कामुकाः तेषु तर्षः= आसक्तिः तेन जाताः **दुराशाः** विषयसुखद्रव्यलाभादिविषया आशाः छित्त्वा 'परमात्मैव भजनीयः' इति निश्चयेन इति भावः । **उपशमं** परमात्मनि मनःस्वास्थ्यं **आस्थाय** दृढं कृत्वा सा **पिङ्गला** निद्रार्थं **शय्यां** शय्यायाम् **उपविवेश** । अतिजाग्रतो योगासम्भवादिति भावः । **पिङ्गला** यथा येन परमात्मविषयकनिश्चयेन **सुखं** यथा भवति तथा **सुष्वाप**, तथा तेन निश्चयेन अहमपि **नैराश्यं परमं सुखं** 'स्वसुखव्यञ्जकम्' इति बुद्धिं शिक्षितवान् ॥ ४३ ॥

॥ इति श्रीयादवेन्द्रयतिविरचिते एकादशस्कन्धव्याख्याने अष्टमोऽध्यायः ॥

# 9 | नवमोऽध्यायः

नृणां यद्यत्प्रियतमं तस्य तस्य विविधभोग्यस्य परिग्रहः दुःखाय भवति । सुखहेतोः कथं दुःखहेतुत्वम्? इत्यत आह- **परिग्रहो हीति** ।

**ब्राह्मण उवाच-**

**परिग्रहो हि दुःखाय यद्यत् प्रियतमं नृणाम् ।**
**अनन्तसुखमाप्नोति तद् विद्वान् यस्त्वकिञ्चनः**[1] **॥ १ ॥**

अन्ततः परैः विषयापहारे सति **दुःखाय** भवति । **तत्** परिग्रहस्य महादुःखत्वं **विद्वान्** सन् न्यस्तं किञ्चन भोग्यं येन सः । मनसा भोग्यपरित्यागवान् सन् **सुखमाप्नोति** । विषयाशाराहित्यस्य स्वसुखव्यञ्जकत्वादिति भावः ॥ १ ॥

इयं बुद्धिः कुररव्यापारात् प्राप्तेत्याह- **सामिषमिति** ।

**सामिषं कुररं जघ्नुर्बलिनो ये निरामिषाः ।**
**तदामिषं परित्यज्य स सुखं समविन्दत ॥ २ ॥**

**सामिषं** मांसपरिग्रहोपेतं **कुरराख्यं** पक्षिणम् अन्यपक्षिणः **निरामिषाः** मांसम् आकाङ्क्षमाणा इति भावः । **जघ्नुः** चञ्चुभिः कृन्तनादि कृतवन्त इत्यर्थः । **तत् परित्यज्य स** कुररः **सुखं समविन्दत** । उपद्रवक्षयेऽपि स्वसुखव्यक्तिरस्तीति भावः ॥ २ ॥

---

[1] 'न्यस्तकिञ्चनः' इति पाठान्तरम् ।

**न मे मानावमानौ स्तो न चिन्ता येह पुत्रिणाम् ।**
**आत्मक्रीड आत्मरतो विचरामीह बालवत् ॥ ३ ॥**

**मे बालवत् पुत्रिणां** पुत्रादिपरिग्रहवतां या **चिन्ता** वित्तादिसङ्ग्रहचिन्ता सा **नास्ति ।** अतः **मानावमानौ** अपि **न स्तः ।** मानावमानयोः स्वकर्मप्राप्तत्वात्, नृषु सन्तोषकोपौ मे न स्त इत्यर्थः । अतः **आत्मरतः** परमात्मना सुखवान् **आत्मक्रीडः** परमात्मध्यानादि-लक्षणक्रीडावान् **इह** भूमौ **विचरामि** ॥ ३ ॥

विषयाशादिराहित्यं सुखव्यञ्जकमिति बुद्धिं दृढयन्नाह- **द्वावेवेति ।**

**द्वावेव चिन्तया मुक्तौ परमानन्द आप्लुतौ ।**
**यो विमूढो जडो बालो यो गुणेभ्यः परं गतः ॥ ४ ॥**

**विमूढः** धनधान्यसङ्ग्रहबुद्धिरहितः **जडः** जडसदृशः विषयसङ्ग्रहाय आचारादिरहित इत्यर्थः । **यः** बालः **गुणेभ्यः** गुणविकारोपेतेभ्यः चेतनेभ्यः **परम्** अत्यन्तविलक्षणं सम्पूर्णगुणमिति वा परमात्मानं **गतः** समाधिना प्राप्तः **यः**, एतौ **द्वावेव चिन्तया** विषयसङ्ग्रहचिन्तया **मुक्तौ,** दुःखेन च हीनौ इति भावः । ततः परमानन्देन **आप्लुतौ** च ॥ ४ ॥

कुमारीगुणात् शिक्षितं वक्तुं तद्व्यापारमाह- **क्वचिदिति ।**

**क्वचित् कुमारी त्वात्मानं वृण्वानान् गृहमागतान् ।**
**स्वयं तानर्हयामास क्वापि यातेषु बन्धुषु ॥ ५ ॥**

**तेषामभ्यवहारार्थं शालीन् दृषदि पार्थिव ।**
**अवघ्नन्त्याः प्रकोष्ठस्थाः शङ्खाश्चक्रुः स्वनं महत् ॥ ६ ॥**

**सा तं जुगुप्सितं मत्वा महती व्रीळिता ततः ।**
**बभञ्जैकैकशः शङ्खान् द्वौ द्वौ पाण्योरशेषयत् ॥ ७ ॥**

**उभयोरप्यभूद् घोषो अवघ्नन्त्याः स्म शङ्खयोः ।**
**तत्राप्येकं निरभिनदेकस्मान्नाभवद् ध्वनिः ॥ ८ ॥**

**अनुशिक्ष इमं[1] तस्या उपदेशमरिन्दम ।**
**लोकाननुचरन्नेताँल्लोकतत्वविवित्सया ॥ ९ ॥**

**क्वचित्** कदाचित् **क्वापि** कञ्चन ग्रामं प्रति **बन्धुषु** मात्रादिषु, **आत्मानं वृण्वानान्** सतः कन्यावरणार्थम् आगतान् **स्वयं** कन्यैव **अर्हयामास** अतिथिपूजां कृतवती । तेषाम् आगतानाम् **अभ्यवहारार्थं** भोजनार्थं **शालीन्** कळमव्रीहीन् **दृषदि** अश्मोलूखले **अवघ्नन्त्याः** कुट्टनं कुर्वन्त्याः **प्रकोष्ठस्थाः** हस्ताग्रे धृताः **शङ्खाः** शङ्खवलयानि **महत्** उच्चैः यथा भवति तथा **स्वनं चक्रुः ।** कुट्टनप्राप्तपरस्पराभिघातादिति भावः । **सा** कन्या **महती** सती कन्यार्थिभिः मान्या भवन्ती **तं** महास्वनं **जुगुप्सितं** हेयं **मत्वा** स्वदेहकार्शत्वव्यञ्जकत्वादिति भावः । **व्रीळिता** सती तत्परिहाराय शङ्खवलयं पाण्योः **एकैकशः** एकैकत्वेनेत्यर्थः **बभञ्ज** पृथक् कृतवती । **तत्रापि** द्वयोर्द्वयोरपि एकं वलयं **निरभिनत्** प्रत्येकं नीतवती, **इमम्** 'एकेन स्थातव्यम्' इत्युपदेशं अहमनुशिक्षम् । निजेन प्रदेशेन सता त्वया अयं व्यापारः कथं दृष्टः ? इत्याशङ्क्य आह- **लोकानिति ।** लोकतत्वं= सात्विकादिस्वभावः तस्य विवित्सया निमित्तेन **लोकान् अनुचरन्** अन्व-शिक्षम् ॥ ९ ॥

तम् उपदेशं विवृणोति- **वास** इति ।

---

[1] 'अन्वशिक्षमिमं' इति पाठान्तरम् ।

**वासो बहूनां कलहे[1] भवेद् वार्ता द्वयोरपि ।**

**एक एव चरेत् तस्मात् कुमार्या इव कङ्कणः ॥ १० ॥**

दुर्जनैः सह संवासः कलहे निमित्तम् ॥ १० ॥

शरकाराच्छिक्षितमाह- **मन** इति ।

**मन एकत्र संयुञ्ज्याज्जितश्वासो जितासनः ।**

**वैराग्याभ्यासयोगेन ह्रियमाणमतन्द्रितः ॥ ११ ॥**

**जितासनः** सन् देहपालनमकुर्वन्निति भावः । वैराग्ययुक्तेन= विषयचिन्तारहितेनेति भावः । अभ्यासः= कुम्भकाभ्यासः स एव योगः तेन, **जितश्वासः** सन् **ह्रियमाणं** निरुध्यमानं विषयसञ्चाररराहित्यलक्षणनिरोधवत्तया कृतं **मनः अतन्द्रितः** सन् आलस्यरहितः सन् **एकत्र** परमात्मरूपे **संयुञ्ज्यात्** सक्तं कुर्यादित्यर्थः ॥ ११ ॥

परमात्मनि मनःसक्तेः फलमाह- **यस्मिन्** इति ।

**यस्मिन् मनो लब्धपदं यदेतच्छनैःशनैर्मुञ्चति कर्मरेणून् ।**

**सत्वेन वृद्धेन रजस्तमश्च विधूय निर्वाणमुपैत्यनिन्धनम् ॥ १२ ॥**

**यस्मिन्** परमात्मनि **मनः लब्धपदं सत्** प्राप्तास्पदं सत् तत्र सक्तमित्यर्थः । **कर्मरेणून्** ज्ञानप्रतिबन्धककर्माणि **शनैःशनैः** ध्यानाभिवृद्धिक्रमेण **मुञ्चति** नश्यति । ततः तन्मनः **वृद्धेन सत्वेन** भागेन रजस्तमोभागौ स्वसंस्थौ **विधूय निर्वाणं** स्थूलपरिमाणनाशम् **उपैति** । तदा चिन्मनः प्राधान्येन प्रवर्तत इति भावः । **अनिन्धनं** शुष्ककाष्टवर्जितं तेज इव लीनं भवति इत्यर्थः ॥ १२ ॥

[1] 'कलहो' इति पाठान्तरम् ।

**तदेवमात्मन्यवरुद्धचित्तो न वेद किञ्चिद् बहिरन्तरं वा ।**
**यथेषुकारो नृपतिं व्रजन्तम् इषौ गतात्मा न ददर्श पार्श्वे ॥ १३ ॥**

तदा **एवं** भूत्वा रजस्तमो नाशं प्राप्य तस्मिन् **आत्मनि अवरुद्धचित्तः** असंप्रज्ञात-समाध्युपेतः सन् **बहिः** बाह्यविषयान् **न वेद, किञ्चिदपि** दंशादिपीडामपि **न वेद । अन्तरं** वा आत्ममनसोर्धर्मान् वा **न वेद ।** तदा ज्ञानसामग्र्यां सत्यामपि परमात्मगुणा-सक्तेः विषयान्तरज्ञानाच्छादकत्वात् इति भावः । **इषुकारः** शरार्जवकृत् **इषौ गतात्मा** सन् आसक्तचित्तः **पार्श्वे व्रजन्तं नृपतिं** न वेद यथा, तथा एवं बुद्धिं शिक्षितवानिति भावः ॥ १३ ॥

सर्पाच्छिक्षितमाह- **एकचारीति ।**

**एकचार्यनिकेतः स्यादप्रमत्तो गुहाशयः ।**
**अलक्ष्यमाण आचारैर्मुनिरेकोऽल्पतोषणः ॥ १४ ॥**

**मुनिः** सर्पवत् **अनिकेतश्च** गृहारम्भरहितश्च स्यात् । **अप्रमत्तः** अनिष्टपरिहारे इष्टसम्पादने च जागरूकः स्यात् । गृहानारम्भे कुत्र शयनम् ? इति जिज्ञासायामाह- **गुहाशय** इति । **एकः** सन् स्थितः **आचारैः अलक्ष्यमाणः** स्यात् । यदि स्वस्य आचारज्ञानं परेषां स्यात् तत्कृतविनयपूजादिना जनसङ्घर्षवान् स्यादिति भावः । अल्पेनापि आहारेण **तोषणः** स्यात् ॥ १४ ॥

ननु गुहायां कथं शयनं स्यात् ? वृकव्याघ्रादिसञ्चारस्यापि तत्र सत्त्वात् । अतः मुनेरपि गृहनिर्माणमावश्यकम् ? इत्यत आह- **गृहारम्भो हीति ।**

**गृहारम्भो हि दुःखाय विफलश्चाध्रुवात्मनः ।**
**सर्पः परकृतं वेश्म प्रविश्य सुखमेधते ॥ १५ ॥**

**दुःखाय** श्रीहरिध्यानविनाशकाय दुःखाय भवति, **अध्रुवात्मानः** अनित्यस्वभावस्य गृहस्य आरम्भः विफलश्च **अध्रुवात्मनः** अस्थिरदेहस्य इति वा । शयनाय आश्रयमाह- **परकृतमिति ।** परार्थं कृतं विजनदेवालयमण्टपादिलक्षण**वेश्म** सर्पवत् अयं मुनिः **प्रविश्य सुखं** यथा भवति तथा, **एधते** श्रीहरिध्यानेन अभिवृद्धो भवति । जनसङ्कुल-वेश्मसु अवस्थाने मनोविक्षेपः स्यादिति भावः ॥ १५ ॥

ऊर्णनाभिव्यापारलक्षणनिदर्शनेन परमात्मनि अवधारितान् गुणानाह- **एको नारा-यणेति ।**

**एको नारायणो देवः पूर्वसृष्टं स्वमायया ।**
**संहृत्य कालकलया कल्पान्त इदमीश्वरः ॥ १६ ॥**

**एक एवाद्वितीयोऽभूदात्मारामोऽखिलाश्रयः[1] ।**
**कालेनात्मानुभावेन साम्यं नीतासु शक्तिषु ॥ १७ ॥**

**नारायणः** सम्पूर्णसर्वकल्याणगुणः **देवः** प्रकाशमानः **एक** एव सहायरहित एव **स्वमायया** स्वाधीनप्रकृतिप्राकृतैरित्यर्थः । **पूर्वसृष्टं** ब्रह्माण्डतदन्तर्गतपाताळादिलोक-गतासुरादिसमूहं कालाख्यस्वांशेन **कल्पान्ते** ब्रह्मकल्पान्ते **संहृत्य** देवानां प्रकृतिबन्ध-परिहारायेति भावः । **ईश्वरः** सर्वसामर्थ्यसम्पन्नः **अद्वितीयः** गुणे स्वसमरहितः **आत्मा-नुभावेन** स्वसामर्थ्येन कात्स्न्र्येन दुर्गादिरूपेण **शक्तिषु** ईश्वरशक्तिविषयेषु सत्वादिषु **साम्यं नीतासु** सत्वगुणे रजोगुणावेशे सति गुणानां गुणान्तरानुप्रवेशेन साम्यमित्यर्थः ।

---

[1] 'एवाद्वितीयोऽभूदात्माधारोऽखिलाश्रयः' इति पाठान्तरम् ।

महदादिष्वपि लीनेष्विति भावः । **एक एवाभूत्** सर्वकार्यरहितोऽभूदित्यर्थः । तथात्वे तस्य कथं रमणलक्षणलीला ? इति जिज्ञासायामाह- **आत्माराम** इति । आत्मभिः= स्वमूर्तिभिः तत्तद्भेदनियामकमहालक्ष्मीमूर्तिषु सन्निहितासु वा । यथेष्टं रमत इति **आत्मारामः** । अखिलानां= मुक्तामुक्तानाम् आश्रयः= उदरे पोषकः । सर्वप्रकृतीनां कारणमूर्तीनां आश्रय इति वा । कैवल्यमिति वा ॥ १७ ॥

अनन्तरं पुनः सृष्टिं वक्तुं तदुपयुक्तपरमात्मगुणानाह- **आदिपुरुष** इत्यादि ।

**सत्वादिष्वादिपुरुषः प्रधानपुरुषेश्वरः ।**
**परावराणां परम आस्ते कैवल्यसञ्ज्ञितः ॥ १८ ॥**

**आदिपुरुषः** सर्वकार्यापेक्षया प्रथमं विद्यमानः पुरुषः= पूर्णसर्वज्ञादिगुणः **परा-वराणां** चेतनाचेतानानां मध्ये **परमः** सर्वगुणैः उत्कृष्टः, परे= इन्द्रादयः अवरा येभ्यः ते रुद्रादयः परावराः, तेभ्यः परमः, प्रधानस्य= सरस्वत्याः, पुरुषस्य= विरिञ्चस्य, ईश्वरः= सृष्ट्यादिकरणे समर्थः ॥ १८ ॥

**केवलानुभवानन्दसन्दोहो निरुपाधिकः ।**
**कालेनात्मानुभावेन स्वमायां त्रिगुणात्मिकाम् ॥ १९ ॥**

**संक्षोभयन् सृजत्यादौ तया सूत्रमरिन्दम ।**
**तामाहुस्त्रिगुणां व्यक्तिं सृजन्तीं विश्वतोमुखम् ।**
**यस्मिन् प्रोतमिदं विश्वं येन संसरते पुमान् ॥ २० ॥**

उपाधिः= सृष्ट्यादिप्रवर्तकं स्वप्रयोजनम्, तद्रहितः **निरुपाधिकः** । प्रतिबिम्ब-प्रयोजकोपाधिरहितो वा । तर्हि तेन सृष्ट्यादिकं कथं स्यात् ? इति जिज्ञासायामाह-

**केवलानुभवान्देति** । केवलौ= सातिशयादन्यौ, सम्पूर्णावित्यर्थः । केवलौ= सर्व-ज्ञानानन्दानां मध्ये अपूर्णतादिदोषरहिताविति वा । अनुभवानन्दावेव सन्दोहः मध्य-देहादिसर्वदेहः यस्य सः, न तु प्राकृतदेह इत्यर्थः । सन्दोहः= प्रपूरणं वा, अनुभवानन्दयोः सन्दोहो यस्य सः । आनन्दोद्रेकात् सृष्ट्यादौ प्रवृत्तिरिति भावः । **आत्मानुभावेन** स्वसामर्थ्येन प्राप्तेन **कालेन** सृष्टिकालेन **स्वमायां** स्वाधीनां प्रकृतिं चिदचिद्रूपां **सङ्क्षोभयन्** सृष्ट्यपयुक्तव्यापारोपेतं कुर्वन् **त्रिगुणात्मिकां सृजति** गुणत्रया-त्मना परिणतां करोतीत्यर्थः । प्रकृतिसामर्थ्यमाह- **यस्मिन्निति** । **यस्मिन्** गुणत्रयात्मके प्रकृतौ या गुणरूपेण सृष्टा तामिति वा । **तां** प्रकृतिं **विश्वतोमुखं** यथा भवति तथा, सर्वप्रदेशैः इत्यर्थः । सर्वकार्याणि **सृजन्तीं त्रिगुणां** त्रिगुणरूपां **व्यक्तिं** कार्यम् **आहुः** । प्रकृतिं गुणत्रयात्मिकामाहुः इत्यर्थः । गुणत्रयात्मिकया प्रकृत्या **आदौ** प्रथमं अहङ्कारादिसृष्टेः पूर्वं विरिञ्चं **सृजति,** यस्मिन् प्रोतमिति परमात्मविशेषणं वा । उत्तरत्र स महेश्वर इत्यनेन अन्वेति ॥ २० ॥

अत्र सृष्ट्यादिव्यापारे निदर्शनमाह- **यथोर्णनाभिरिति** ।

> **यथोर्णनाभिर्हृदयादूर्णां सन्तत्य वक्रतः ।**
> **तया विहृत्य भूयस्तां ग्रसत्येवं महेश्वरः ॥ २१ ॥**

ऊर्णाः नाभौ देशे उदरे यस्य सः । **हृदयात्** प्रदेशात् निर्गताम् **ऊर्णां** लूतातन्तुं अविक्कणमिति भावः । **वक्रतः** मुखव्यापारेण यथा अश्नाति क्रमं विना **सन्तत्य** वितानवत् परस्परं निषिध्य, यथा पुनः **विहृत्य** मक्षिकादीनि बन्धनेन विहृत्य **भूयः ताम्** ऊर्णां **ग्रसति** वदनपुरःसरं उदरे निवेशयति । **एवं महेश्वरो** ऽपि असुरादिसृष्टिबन्धनसंहारादिविहरणं करोति इत्यर्थः ॥ २१ ॥

**यत्र यत्र मनो देही धारयेत् सकलं धिया ।**

**स्नेहाद् द्वेषाद् भयाद् वाऽपि याति तत्तत्सरूपताम् ॥ २२ ॥**

यो **देही** जीवः **यत्र** यस्मिन् **सकलं** व्यासङ्गरहितः यथा भवति तथा इत्यर्थः । **मनः भयात्** भयेन वा युक्तादित्यर्थः । **स्नेहात्** धारयेत् स **तत्सरूपतां** ध्येयसमानरूपं भय**धिया** ध्यानेन **याति** । **द्वेषाद्** असुरः मनो **धारयेत्** तत्सरूपतां द्वेषलक्षणदोषरूपतां तया धिया याति । अत एव नियमभङ्गो नास्तीति भावः ॥ २२ ॥

तत्र निदर्शनमाह- **कीट** इति ।

**कीटः पेशस्करं ध्यायन् कुड्यं[1] तेन प्रवेशितः ।**

**याति तत्समतां राजन् पूर्वरूपमसन्त्यजन् ॥ २३ ॥**

**कुड्यं** कुड्यविवरं **प्रवेशितः** तं पेशस्कृतं मृदुपिण्डकर्तारं **कीटः ध्यायन्** प्रतिदिनम् आहारप्रदानप्राप्तस्नेहातिशयादिति भावः ॥ २३ ॥

**एवं गुरुभ्य एतेभ्य एषा मे शिक्षिता मतिः ।**

**स्वात्मोपशिक्षितां बुद्धिं शृणु मे वदतः प्रभो ॥ २४ ॥**

**देहो गुरुर्मम विरक्तिविवेकहेतुर्बिभ्रत् स्म सत्वनिधनं सततात्युदर्कम् ।**

**तत्वान्यनेन विमृशामि यथा तथाऽपि पारक्यमित्यवसितो विचराम्यसङ्गः ॥ २५ ॥**

**स्वात्मोपशिक्षितां** स्वात्मना= स्वदेहेन उपशिक्षितां= प्राप्तां **बुद्धिं शृणु** प्रतिपादक-शब्देन जानीहि । देहस्य तत्वज्ञानजनकत्वलक्षणगुरुत्वम् उपपादयति- **देह** इति । सत्वं= बलज्ञानसमाहारः निधीयते अस्मिन् परमेश्वर इति **सत्वनिधानं** बलज्ञानसमाहार-सम्पन्न इत्यर्थः । सततं सर्वदा अति= अतिशयेन उत्= उच्चैः अर्= ज्ञानं कं=

[1] 'कुड्यां' इति पाठान्तरम् ।

सुखं च एतत्स्वरूपं अप्रतिमबलप्रकाशरूपं वा उदं सान्द्रं कं इति वा भगवन्तं **बिभ्रत्** दधानः देहः । पूर्णस्यापि मुक्तब्रह्मानन्दस्य सातिशयत्वमस्ति । पूर्णस्यापि इन्दिरानन्दस्य सातिशयत्वमस्ति । तद्वत् सातिशयत्वशङ्कापरिहाराय 'अति' 'उत्' इति विशेषणम्, आनन्दज्ञानयोः पराधीनत्वशङ्कापरिहाराय ''सततम्'' इत्युक्तम् । अन्यच्च= देहं च गुरुं निबोध इत्यर्थः । पृथिव्यादेरिव देहगतधर्मेण स्वस्मिन् धर्मस्य शिक्षणात् 'देहो गुरुः' इति पृथगुक्त इति भावः । विवेकः= विषयाणां दुःखलक्षणसदोषत्वज्ञानं, विरक्तिहेतुत्वं च विषयानुभवप्राप्तदेहालस्यानुभवादिति भावः । तस्माद् **गुरुः** स्वतन्त्रपरतन्त्रतत्त्वानि **यथा** विवक्षामनतिक्रम्य यथार्थतो वा **अनेन** देहेन **विमृशामि** मननेन निश्चिनोमि । अतश्च गुरुः । देहस्य तत्त्वज्ञानहेतुत्वात् एतत्संरक्षणे यत्नं कुतो न करोषि ? इत्यत आह- **तथाऽपि** तत्वज्ञानहेतुत्वेऽपि **पारक्यं** कर्मप्रेरकपरमात्माधीनं शरीरं, न तु मदिच्छानुसारि इति **अवसितः** निश्चयवान् । **असङ्गः** देहादिषु अभिमानरहितः सन् **विचरामि** लोकविलक्षणः सन् चरामि ॥ २५ ॥

एवं स्वतः परतो वा भक्तिः ज्ञानविरागौ सम्पादनीयौ । एतद्रहितस्य दुःखलक्षण-बन्धो भवतीत्याह- **जायात्मजेति ।**

**जायात्मजार्थपशुभृत्यगृहाप्तवर्गान् पुष्णाति यः प्रियचिकीर्षतया वितन्वन् ।**
**सोऽन्ते सुकृच्छ्रमवरुद्धमनाः स्वदेहं सृष्ट्वा स्वबीजमिव सीदति वृक्षधर्मा ॥ २६ ॥**

**यः** ज्ञानविरागाभ्यां रहितः चेतनः **प्रियचिकीर्षतया** जायादीनां सन्तोषकरणेच्छया अवरुद्धं= प्रतिबद्धं मनो यस्य सः । परमात्मनि निवृत्तमनाः सन् । **सुकृच्छ्रम्** अतिकष्टं पापं कर्म **वितन्वन्** धनधान्यलाभार्थमिति भावः । जायादीन् **पुष्णाति**

यथासम्भवं रक्षति । अन्नवस्त्रादिदानेनेति भावः । **स वृक्षधर्मा** वृक्षसदृशः । इव शब्दः अल्पार्थः । **स्वबीजं** स्वस्य= चेतनस्य बीजं पुनः अल्पाकारसम्पादकं स्वस्य देहं **सृष्ट्वा** कर्मभिः उत्तरदेहं सम्पाद्य बीजकार्यं स्वर्गनरकाद्यारोहणादिकं कुर्वन् कर्मभिरिति भावः । अथवा स्वस्य बीजं= विकारबीजं दुःखं सृष्ट्वा बीजार्थं दुःखार्थम् आरोहणादि कुर्वन् इत्यर्थः । आरोहणं देहसङ्गमिति वा । अन्ते अवसीदति नित्यसौख्येन रहितो भवति ॥ २६ ॥

"प्रियचिकीर्षया अवरुद्धमनाः" इत्युक्तं विवृणोति- **जिह्वैक** इति ।

**जिह्वैकतोऽमुमनुकर्षति कर्हि तर्षा शिश्नोऽन्यतस्त्वगुदरं श्रवणं कुतश्चित् ।**
**घ्राणोऽन्यतश्चपलदृक् क्व च कर्मशक्तिर्बह्व्यः सपत्न्य इव गेहपतिं लुनन्ति ॥ २७ ॥**

**एकतः** रसोपेते विषये **जिह्वा अमुं** जायादिरहितमपि ईश्वरज्ञानोपयुक्तदेहसम्पन्नं **अनुकर्षति** पुनः पुनः आकर्षति, ईश्वरज्ञाने मनःप्रतिरोधं करोति इत्यर्थः । **तर्षा** मनसः विषयतृष्णा कर्हिचिद्विषये अमुं विकर्षति= ईश्वरज्ञानेच्छून् प्रतिबध्नाति इति भावः । एवं सर्वाण्यपि इन्द्रियाणि स्वस्वविषये कर्षन्ति । **कर्मशक्तिः** कर्मेन्द्रियपापादि **क्व च** धनगेहादिकं प्रति विकर्षति, न तु भक्तसमीपं प्रति नयति । एवम् **अमुं लुनन्ति** च्छिन्दन्ति= नित्यानन्दानुभवरहितं कुर्वन्तीत्यर्थः । **गेहपतिमिव** गृहस्वामिनमिव ॥ २७ ॥

पुरुषदेहस्य ईश्वरज्ञाने अन्तरङ्गसाधनत्वमाह- **सृष्ट्वेति** ।

**सृष्ट्वा पुराणि विविधान्यजयाऽऽत्मशक्त्या वृक्षान् सरीसृपपशून् खगदंशमत्स्यान् ।**
**तैस्तैरतुष्टहृदयः[1] पुरुषं विधाय ब्रह्मावबोधधिषणं मुदमाप देवः ॥ २८ ॥**

---

[1] 'तैस्तैरतृप्तहृदयः' इति पाठान्तरम् ।

वृक्षमत्स्यादीन् सृष्ट्वा । सरीसृपाः= सर्पाः, दंशाः= वनमक्षिकाः, अन्यानि **विविधानि पुराणि** जीवाधिष्ठितानि च **सृष्ट्वा तैः** स्थावरपश्वादिभिः अतुष्टहृदयः सन् सृष्ट्वा, एतेषां स्वाध्यायप्रवचनाद्यशक्तत्वादिति भावः । ब्रह्मणः= वेदार्थस्य अवबोधे= श्रवणादौ धिषणं= ज्ञानशक्त्युपेतं **पुरुषं विधाय देवः** च **मुदमाप** एते ईश्वरश्रवणाद्याराधा-नानि करिष्यन्ति इति बुद्ध्या इति भावः ॥ २८ ॥

पुरुषदेहस्यैव ईश्वरज्ञानादिसाधनत्वात् देवताप्रसादसम्पादकत्वात् ईश्वरगुणानु-सन्धानादिकम् अवश्यं विषयपरित्यागेन कर्तव्यमित्याह- **लब्ध्वेति** ।

**लब्ध्वा सुदुर्लभमिदं बहुसम्भवान्ते मानुष्यमर्थदमनित्यमपीह धीरः ।**
**तूर्णं यतेत न पतेदनुमृत्यु यावन्निःश्रेयसाय विषयः खलु सर्वतः स्यात् ॥ २९ ॥**

**बहुसम्भवान्ते** स्थावरपश्वाद्यात्मनां अन्ते **मानुष्यं** मनुष्यभावं लब्ध्वा **निश्रेयसाय यतेत** ईश्वरगुणश्रवणादिसक्तो भवेदित्यर्थः । विषयप्राप्तेः सर्वदेहेष्वपि सम्भवात्, विषयाः निःश्रेयसवत् आदरणीया न भवन्तीत्याह- **विषयः खल्विति** । **सर्वतः** सर्वदेहेषु । सर्वतो विषयान् अनुभूय वार्धके निश्रेयसाय प्रयत्नं कुर्मः ! इत्यत आह- **अनुमृत्यु** सहमृत्यु, अतः **अनित्यम्,** स्वेच्छानुसारेण न स्यादित्यर्थः । एवं सति अनेन देहेन किं भविष्यति ? इत्यत आह- **अर्थदमिति** । भक्त्या मुहूर्तम् ईश्वरगुणानुसन्धानेऽपि क्रमेण नित्यसौख्यप्रदमिति । अतः **तूर्णं** ज्ञानाद्यर्थं यतेत । 'अमुमपकर्षति' इत्याद्युक्तेः कथं श्रवणादौ यत्नः ? इत्यत आह- **धीर** इति । इन्द्रियनिग्रहस्थैर्योपेतः । अथवा धिया= विषयदोषावधारणेन रमति विषयचिन्ताभावा-दिति भावः । एतादृशेन्द्रियाणि न बाधन्त इति भावः । अतो देहो यावन्न पतेत् ततः पूर्वं **तूर्णं यतेत** । तेन श्रवणावृत्तिर्वा भवेदिति भावः ॥ २९ ॥

**एवं सञ्जातवैराग्यो विज्ञानालोक आत्मनि ।**
**विचरामि महीमेतां मुक्तसङ्गोऽनहङ्कृतिः ॥ ३० ॥**

**आत्मनि** अन्तर्यामिणि विषये **विज्ञानालोकः** आलोक इव आलोकः, विज्ञान-लक्षणतमोनिवर्तकेन सम्पन्नः । शास्त्रादिजातज्ञानेन सर्वोत्तमावधारणवानित्यर्थः, अप-रोक्षवानिति वा । **मुक्तसङ्गः** देहतदनुबन्धिषु प्रीतिरहितः । अतः **अनहङ्कृतिः** अहङ्कार-जन्यभ्रमरहितः, अभिमानलक्षणदुःखकारणभ्रमाभावात्, दुःखेन विकारोऽपि मम नास्तीति भावः । एवंविधः **महीं विचरामि ।** ज्ञानालोकसहितस्य मह्यं सञ्चारो अज्ञानबाधक इति भावः ॥ ३० ॥

बहुगुरूपसत्तिः विविधज्ञानफलाय भवतीत्याह- **नह्येकस्मादिति ॥**

**नह्येकस्माद् गुरोर्ज्ञानं सुस्थितं स्यात् सुपुष्कळम् ।**
**ब्रह्मैतदद्वितीयं वै गीयते बहुधर्षिभिः ॥ ३१ ॥**

**एकस्मात्** एकशब्दः अन्यवादी । आदिगुरुचतुर्मुखेन पुष्कळं ज्ञानं भवतीत्याह-**गुरोर्ज्ञानं सुपुष्कळमिति ।** बहुगुरूपदेशः अन्येषामवश्यक इत्यत्र साधकमाह- **बहुधेति ।** **ऋषिभिः बहुधा** विविधगुणशक्त्यादिविशिष्टतया **गीयते ।** बहवो बहुजानन्ति । लौकिकः सर्वं न जानातीति भावः । **अद्वितीयं** ब्रह्मत्वेन द्वितीयरहितमित्यर्थः ॥ ३१ ॥

**श्रीभगवानुवाच-**

**इत्युक्त्वा स यदुं विप्रस्तमामन्त्र्याङ्ग धीरधीः ।**
**वन्दितोऽभ्यर्चितो राज्ञा ययौ प्रीतो यथाऽऽगतम् ॥ ३२ ॥**

**अवधूतवचः श्रुत्वा सर्वेषां नः प्रपूर्वजः ।**
**सर्वसङ्गविनिर्मुक्तः समचित्तो बभूव ह ॥ ३३ ॥**

**॥ इति श्रीमद्भागवते एकादशस्कन्धे नवमोऽध्यायः ॥**

श्रीभगवानाह- **इत्युक्त्वेति । राज्ञा** यदुराजेन । **यथा** येन अवधूतरूपेण **आगतं** तथा **ययौ ।** राज्ञा अर्चनसमये समर्पितं दुकूलादिकं परित्यज्य इति भावः । **नः सर्वेषां** यादवानां च **प्रपूर्वजः** सर्वेषु= विषयेषु, सङ्गेन= प्रीत्या विनिर्मुक्तः, समः= सर्वरूपेषु पूर्णः परमात्मा, तस्मिन् चित्तः= ध्यानवान् इत्यर्थः । **बभूव** समचित्तः समः= राज्ये विरक्त इत्यर्थः ॥ ३३ ॥

॥ इति श्रीयादवेन्द्रयतिविरचिते एकादशस्कन्धव्याख्याने नवमोऽध्यायः ॥

# 10 | दशमोऽध्यायः

ज्ञानवताऽपि श्रौतस्मार्तधर्माः कर्तव्या इत्याह- **मयोदितेष्विति ।**

**श्रीभगवानुवाच-**

**मयोदितेष्ववहितः स्वधर्मेषु मदाश्रयः ।**

**वर्णाश्रमकुलाचारमकामात्मा[1] समाचरेत् ॥ १ ॥**

**स्वधर्मेषु** ईश्वरश्रवणध्यानादिषु **अवहितः** सदा उत्साहवान् **मदाश्रयः** सन्, अहं आश्रयः यस्य मय्यासक्त इत्यर्थः । **अकामात्मा** आत्मा= स्वभावः, फलकामस्वभाव-रहित इत्यर्थः । **कुलाचारान्** आश्वलायनादिस्वतन्त्रऋषिप्राप्ताचारान्, आन्ध्रद्राविड-साध्याचारान् वा **समाचरेत् ॥** १ ॥

अकामेत्युक्तम्, सर्वेषामपि सुखार्थित्वात् कथं सुखसाधनपरित्यागः? इत्यत आह- **अन्वीक्षेतेति ।**

**अन्वीक्षेत विशुद्धात्मा देहिनां विषयात्मनाम् ।**

**गुणेषु तत्वध्यानेन[2] सर्वारम्भविपर्ययम् ॥ २ ॥**

**विशुद्धात्मा** विषयरागरहितमनाः, रागे इष्टविरोधिषु विषयेषु इष्टसाधनत्वभ्रमः स्यादिति भावः । **गुणेषु** विषयेषु **तत्त्वध्यानेन** प्रतिदिनम् इष्टत्वानुसन्धानेन प्राप्ताः ये सर्वारम्भाः= विषयप्राप्त्युपायाः तेषां विपर्ययं= महादुःखहेतुत्वम् **अन्वीक्षेत** पुनः

---

[1] 'वर्णाश्रमकुलाचारानकामात्मा' इति पाठेन भाव्यमिति भाति । [2] 'तत्वज्ञानेन' इति पाठान्तरम् ।

पुनः विषयाणां महादुःखानुबन्धित्वं जानीयादित्यर्थः । तेन विषयपरित्यागो भवेदिति भावः ॥ २ ॥

ननु स्वेच्छानुसारेण स्वस्य प्रयत्नदर्शनात् कथं कामलक्षणस्वेच्छापरित्यागः? इत्याशङ्क्य अयं कामः स्वभावे तु न भवतीत्याह- **सुप्तस्येति** ।

**सुप्तस्य विषयालोको ध्यायतो वा मनोरथः ।**
**नानात्मकत्वाद् विफलस्तथाऽभेदः स्वधीगुणैः ॥ ३ ॥**

**स्वधीगुणैः** धीः बुद्धिलक्षणं करणम्, तत्र भवैः गुणैः स्वसम्बन्धि**गुणैः** विषयकामक्रोधादिभिः **अभेदः** केवलं चेतनधर्मत्वबुद्धिः **विफलः** । कुतः ? इत्यत आह- **नानात्मकत्वादिति** । वस्तुस्थित्यपेक्षया अन्यथा ज्ञानरूपत्वादित्यर्थः । विफलत्वे दृष्टान्तमाह- **सुप्तस्येति** । **विषयालोकः** स्वप्नविषयाणां जाग्रद्विषयाभेदज्ञानं यथा विफलं फलवत्प्रवृत्तिजनको न । **मनोरथः** मानसवासनारूपार्थानुसन्धानं यथा विफलम् अभिमतसम्पादको न, तथा भ्रमः सर्वोऽपि निष्फलप्रवृत्तिहेतुः । अतः विषयकामनाऽपि दुःखसम्पादिका भवतीति भावः ॥ ३ ॥

**निवृत्तं कर्म सेवेत प्रवृत्तं मत्परस्त्यजेत् ।**
**जिज्ञासायां सम्प्रवृत्तो नाद्रियेत् कर्मचोदनाम् ॥ ४ ॥**

तस्मात् **निवृत्तं** मत्प्रीतिफलकं **सेवेत, प्रवृत्तं** स्वर्गादिफलाशां **त्यजेत्** । ननु कर्मफलं हेयं चेत् किमर्थं कर्मविधौ फलप्रतिपादनम् इत्यत आह- **जिज्ञासायामिति** । वेदतात्पर्यविषयार्थनिश्चये **सम्प्रवृत्तः** वेदार्थमननवान् इत्यर्थः । **कर्मचोदनां** कर्मफलप्रतिपादकवचनं **नाद्रियेत्** श्रद्धाविषयं न कुर्यात् । किन्तु ब्रह्मप्रतिपादका सर्वेऽपि

वेदाः ब्रह्मज्ञानोपयुक्ताः । कर्मफलप्रतिपादनं रुच्युत्पादनार्थम् इति जानीयादित्यर्थः ॥ ४ ॥

नित्याभ्यसनीयगुणानाह- **यमानभीक्ष्णमिति ।**

**यमानभीक्ष्णं सेवेत नियमान् मत्परः क्वचित् ।**
**मदभिज्ञं गुरुं शान्तमुपासीत मदात्मकम् ॥ ५ ॥**

सदा **यमान् सेवेत । क्वचित्** तत्तत्काले **नियमान् सेवेत ।** यमाः= अहिंसादयः नियमाः= शौचादयः वक्ष्यन्ते चोत्तरत्र । श्रुतवेदार्थोऽपि पुनः श्रवणे प्रवर्तेत इत्याह- **मदभिज्ञमिति । मदभिज्ञं** मयि सम्यक् ज्ञानेन सम्पन्नं **शान्तं** विषये कामादिशान्त्युपेतं **मदात्मकं** मद्ध्यानपरं **गुरुम् उपासीत ॥** ५ ॥

गुरुसमीपं प्राप्तस्य विशेषतः एभिर्गुणैः भाव्यमित्याह- **अमानीति ।**

**अमान्यमत्सरो दक्षो निगमे दृढसौहृदः ।**
**असत्वरोऽर्थजिज्ञासुरनसूयुरमोघवाक् ॥ ६ ॥**

**अर्थजिज्ञासुः** वेदार्थपरमात्मजिज्ञासावान् **अमानी** स्यात् । **अमोघवाक्** सत्यवाक् भवेत् । ग्राम्यकथावान्न भवेदिति भावः । त्वरा= शैघ्र्यं, **असत्वरः,** अर्थग्रहणधारणादौ त्वरावान्न भवेत् । ज्ञानपाटवार्थं सदसद्विवेकार्थं चेति भावः । **अनसूयुः** सहश्रोतरि ज्ञानाधिके असूयां न कुर्यात् । **अमानी** स्वस्य ज्ञानाधिक्ये सति गर्ववान् न भवेत् । **अमत्सरः** स्वोक्तार्थदूषके मात्सर्यवान् न भवेत् । **दक्षः** स्वयमपि विविधार्थज्ञानसम्पादने समर्थो भवेत् । **निगमे** वेदादिषु **दृढसौहृदः** प्रीतिमान् स्यात् । विश्वासवान् स्यादिति भावः । एभिः गुणैः सम्पन्नस्य परमात्मज्ञानपौष्कल्यं भवेदिति भावः ॥ ६ ॥

ननु गृहस्थस्य कथं यमनियमादिगुणाः सम्भवन्ति ? इत्यत आह- **जायापत्येति** ।

**जायापत्यगृहक्षेत्रस्वजनद्रविणादिषु ।**
**उदासीनः समं पश्येत् सर्वेष्वर्थमिवात्मनः ॥ ७ ॥**

**सर्वेषु** जायापत्यस्वजनेषु **आत्मनः** स्वस्मिन्निव **अर्थं** फलम्[1] स्वार्जितद्रव्यादेरिति भावः । **समं पश्येत्** ततः क्षेत्रादिषु उदासीनो भवेत् । आसक्तो न भवेदित्यर्थः । अनासक्तस्य तूक्तगुणाः सम्भवन्ति इति भावः ॥ ७ ॥

ननु परमात्मजिज्ञासा कथं कर्तव्या ? तस्यापि जीववत् देहविशिष्टावरणसहितत्वात् 'युवाहं', 'कृशोऽहम्' इति देहाद्विविक्ततया प्रतीयमानस्य जीवस्य देहापगमे अवस्थानायोगात् किमर्थं जिज्ञासा ? इत्याशङ्क्याह- **निरो** धेति ।

[2]**निरोधोत्पत्त्यणुबृहन्नानात्वं तत्कृतान् गुणान् ।**
**अनुप्रविष्ट आधत्ते एवं देहगुणान् परः ॥ ८ ॥**

**अनुप्रविष्टः** देहे स्थितः जीवः निरोधः= मरणं अणुत्वं बृहत्त्वम् एतानि **नानात्वं** नरतिर्यगादिजातिं **तत्कृतान् वा गुणान्** हेयत्वोपादेयत्वादीन् वा आधत्ते प्राप्नोति । विविधदेहगुणैः विविधविकारवान् भवति । ईश्वरेच्छया देहाभिमानाच्चेति भावः ॥ ८ ॥

एवं परः परमात्माऽपि देहगुणान् आधत्त इति यद्यपि प्रतीयते । अथापि जीवपरमात्मनोर्जिज्ञासा युज्यते । विशिष्टाकारात् भिन्नत्वादित्याह- **विलक्षण** इति ।

---

[1] अत्र ''फलम् आयासो'' इत्यधिकं पठ्यते । सम्पातायातं स्यात् । [2] अयं श्लोकः प्रसिद्धपाठेषु नवमत्वेन परिगणितः ।

**विलक्षणः स्थूलसूक्ष्माद् देहादात्मेक्षिता स्वदृक् ।**
**यथाग्निर्दारुणो दाह्याद् दाहकोऽन्यः प्रकाशकः ॥ ९ ॥**

**आत्मा** जीवः स्थूलात् सूक्ष्माच्च **देहाद् विलक्षणः ईक्षिता** सर्वस्य द्रष्टा । **स्वदृक्** स्वविषयप्रकाशः । ईश्वरोऽपि एतद्देहाद्विलक्षणः **अग्निः दाह्यात्** दाहविषयात् **दारुणः** काष्ठाद् **अन्यः** दग्धदारुगताग्नेः अधिष्टानादविवेकेन ज्ञानेऽपि यथा भेदः एवमिहापीत्यर्थः । अथवा तत्कृतान्= दारुप्राप्तान् गुणान् अग्निः यथा आधत्ते एवं परोऽपि आधत्त इव प्रतीयत इत्यर्थः ॥ ९ ॥

देहे तादृशस्य कुतः दुःखादिः ? इत्यत आह- **योऽसाविति ।**

**योऽसौ गुणैर्विरचितो देहोऽयं पुरुषस्य हि ।**
**संसारस्तन्निबन्धोऽयं पुंसोऽविद्यास्थितात्मनः ॥ १० ॥**

**पुरुषस्** य सम्बन्धी **योऽसौ** कर्मप्राप्तः **देहोऽ** स्ति **अयं गुणैः विरचितः** तामसैः भूतैः निर्मितः । पञ्चपर्वाविद्यया आस्थितः= आवृतः आत्मा= ज्ञानसुखादिस्वभावः यस्य तस्य **पुंसः अयं संसारः** दुःखप्राप्तविकारः **तन्निबन्धः** देहसम्बन्धप्राप्तः । अविद्या-कर्मणोरपगमे बन्धोऽपि गच्छतीति भावः ॥ १० ॥

देहादिविलक्षणस्य जीवस्य नित्यत्वात् जिज्ञासा कर्तव्या इत्याह- **तस्मादिति ।**

**तस्माज्जिज्ञासयाऽऽत्मानमात्मस्थं केवलं परम् ।**
**सङ्गम्य निरसेदस्य वस्तुबुद्धिं यथाक्रमम् ॥ ११ ॥**

**जिज्ञासया** वेदपुराणादिश्रवणावृत्त्या **आत्मस्थं** जीवादिषु विद्यमानं **केवलं** देहादि-प्राप्तदोषरहितं **परं** जीवाद्विलक्षणं **सङ्गम्य** सम्यक् ज्ञात्वा **अस्य** बद्धस्य जीवजातस्य

**वस्तुबुद्धिं** कार्येषु शक्तत्वबुद्धिम् ईश्वरप्रेरणां विनेति भावः । **यथाक्रमं** श्रवणमननादि-क्रमेण **निरसेत्** परिहरेत् । कार्येषु ''अहमेव कर्ता'' इति बुद्धिं देहादिषु ''ममेवेदम्'' इति अभिमानं च त्यजेदिति भावः ॥ ११ ॥

ज्ञानस्य यथा अनिष्टपरिहारहेतुत्वं तथा इष्टप्राप्तिसाधनत्वमप्यस्तीत्याह- **आचार्य** इति ।

**आचार्योऽरणिराद्या स्यादन्तेवास्युत्तरारणिः ।**
**तत्सन्धानं प्रवचनं विद्यावह्निः सुखावहः ॥ १२ ॥**

**आद्या** अधःस्तनः **अरणिः । अन्तेवासी** शिष्य **उत्तरारणिः** उपरितनारणिः । **प्रवचनं तत्सन्धानं** अरणिसन्धानमिव । तेन सन्धानलक्षणप्रवचने अतः **विद्या** तत्व-ज्ञानादिः सा वह्निरिव अर्थप्रकाशरूपत्वात् । स **सुखावहः** देहाभिमानतः प्राप्तक्लेश-परिहारपुरस्सरं स्वरूपसुखव्यञ्जकम् ॥ १२ ॥

देहबन्धकारणाविद्यायाः तामसान्तःकरणकर्मादीनां च कथं निवृत्तिः इति जिज्ञा-सायामाह- **वैशारदीति ।**

**वैशारदी साऽतिविशुद्धबुद्धिर्धुनोति मायां गुणसम्प्रसूतिम् ।**
**गुणांश्च सन्दह्य यदात्म्यमेतत् स्वयं च शाम्यत्यसमिद् यथाग्निः ॥ १३ ॥**

**सा** श्रवणादिपुरस्सरं ध्यानोत्कर्षादिप्राप्ता इत्यर्थः । विशारदः सृष्टिपालनादि-कुशलः परमात्मा तद्विषयिणी **वैशारदी ।** विविधं शारं= बन्धलक्षणं संसारं द्यतीति विशारदः इति वा । **अतिविशुद्धबुद्धिः** अपरोक्षरूपा इत्यर्थः । सर्वसंशयनिवर्तकत्वा-दिति भावः । **गुणान्** रागद्वेषादीन् तन्निमित्तरजस्तमोभावान् **सन्दह्य** एतत्प्रत्यक्षं

दुःखान्यथाज्ञानादिकं **यदात्म्यं** यत्स्वरूपेण प्राप्तं तां **गुणसंप्रसूतिं** कामक्रोधादिजननीं **मायां** जीवगुणाच्छादिकां **सन्दह्य** प्राकृतं मनश्च सन्दह्य **स्वयं** च **शाम्यति** नष्टा भवति । स्वरूपज्ञानाभिव्यक्त्यति- शयेन मुक्तौ सुखभोग इति भावः । काष्टादिरहितः अग्निर्यथा शाम्यति एवं देहादिः ॥ १३ ॥

यथा परमात्मनः जीवभेदः तथा भावानां परस्परं च भेदः इत्याह- **अथैषां** इति ।

**अथैषां कर्मकर्तॄणां भोक्तॄणां सुखदुःखयोः ।**
**नानात्वमथ नित्यत्वं लोककालागमात्मनाम् ॥ १४ ॥**

**मन्यसे सर्वभावानां संस्था ह्यौत्पत्तिकी तथा ।**
**तत्तदाकृतिभेदेन जायते भिद्यते च धीः ॥ १५ ॥**

**अथ** अथापि ज्ञानरुपत्वेऽपि इत्यर्थः **भोक्तॄणां** च एकस्मिन् समये एको दुःखम् एकः सुखमनुसन्धत्ते । अतः जीवानां परस्परं **नानात्वम् । अथ** अन्यदपि ज्ञेयम् । **नित्यत्वं** देहापगमेऽपि जीवानां सदा स्थायित्वं, लोकानाम् आगमानाम् आत्मनां= व्याप्तानाम् आकाशप्रकृतीनाम् आत्मनः= परमात्मनः एतेषां सर्वभावानां तत्कार्यगुणमहदादिभेदेन संस्थितिः **औत्पत्तिकी** स्वभावसिद्धा इति । अथ अन्यदपि ज्ञेयं **तत्तदाकृतिभेदेन** तिर्यङ्नरसुरादिभेदेन, सात्विकादिस्वभावभेदेनेति भावः । **धीः भिद्यते** इति । हे उद्धव ! त्वं **मन्यसे** एतद्वस्तुषु वैलक्षण्यं मया न वक्तव्यम् इति भावः । एवं भेदज्ञानमावश्यकमिति भावः ॥ १५ ॥

देहजीवयोः भेदः प्रत्यक्षसिद्धश्चेत्याह- **एवमुद्धवेति ।**

**एवमुद्धव सर्वेषां देहिनां देहयोगतः ।**

**कालावयवतः सन्ति भावा जन्मादयोऽसकृत् ॥ १६ ॥**

**देहिनां** जीवानां **देहयोगतः** यथा जन्मादयः भवन्ति तथा **देहिनां** कालेभ्यः= क्षणादिभ्यः अवयवेभ्यः= उपचयकारणेभ्यः अन्नादिभ्यश्च जन्मादयः **भावाः** धर्माः **सन्ति । असकृत्** एकस्मिन्नपि दिने बहुशो भवन्तीत्यर्थः । क्षणविशिष्टाकारेण देहेन उपचयविशिष्टाकारेण च जीवानां उत्पत्त्यादिकमिति भावः । बालदेहात् यौवनयुक्त-देहाच्च स्थविरस्य स्वस्य भेदः प्रत्यक्षसिद्ध इति भावः ॥ १६ ॥

अस्वतन्त्रेण जीवेन इष्टप्राप्तये स्वतन्त्रेश्वरः भजनीय इत्याशयेनाह- **तत्रापीति ।**

**तत्रापि कर्मणां कर्तुरस्वातन्त्र्यं च लक्ष्यते ।**

**भोक्तुश्च सुखदुःखानां को न्वर्थो विवशं भजेत् ॥ १७ ॥**

**तत्रापि** मनुष्यदेहेऽपि कर्मकर्तुः **अस्वातन्त्र्यं** परनियम्यत्वं **लक्ष्यते** । हिताकरणात् अहितकरणाच्च इति भावः । **भोक्तुः** जीवस्य सुखभोगेच्छायामपि अस्वातन्त्र्यं दुःख-भोक्तृत्वादिति भावः । **विवशं** पापकर्मप्रेरकासुरवशं प्राप्तं जीवं **कोनु** को वा **अर्थः** किं वा सुखं **भजेत्** प्राप्नुयात् । दुःखासहचरितं सुखं परमात्मप्रसादाभावे न भवेदित्यर्थः ॥ १७ ॥

सुखसाधनधर्मस्य ज्ञानवतां सुखं भवेत्? इत्यत आह- **विदुषामपीति ।**

**न देहिनां सुखं किञ्चिद् विद्यते विदुषामपि ।**

**तथा च दुःखमूढानां तथाऽहङ्कारिणां परम् ॥ १८ ॥**

विदुषामपि **देहिनां सुखं नास्ति ।** देहाभिमानस्य सत्वादिति भावः । ज्ञानिनां देहाभिमानमात्रेण सुखं नास्ति, किं वक्तव्यम् अज्ञानाद्यनेकदोषवतामिति भावेनाह- **दुःखमूढानामिति ।** तथा ज्ञानिवत् दुःखयुक्ताः ज्ञानेन रहिताः दुःखमूढाः एतेषाम् **अहङ्कारिणां परं** केवलम् अहङ्कारलक्षणाभिमानयुक्तानां **तथा** प्रस्तुतं मनुष्यदेहेन प्रसक्तं नित्यसुखं **न विद्यते ॥** १८ ॥

ननु पापस्य अकरणे दुःखाभावः, पुण्यकरणे सुखमिति जानताम्, एवं कुर्वतां सुखमेव भवेत्? इत्यत आह- **यदि प्राप्तिमिति ।**

**यदि प्राप्तिं विघातं च जानन्ति सुखदुःखयोः ।**
**तेऽप्यद्धा न विदुर्योगं मृत्युर्न प्रभवेद् यथा ॥ १९ ॥**

ये प्राकृतानां मध्ये विद्वत्वेन प्रसिद्धाः **तेऽपि** यद्यपि सुखप्राप्त्युपायं दुःखविघातोपायं **जानन्ति ।** अथापि **यथा** येन ईश्वरप्रसादलक्षणेन **मृत्युः** पूर्वजन्मसु प्राप्तः कर्मबन्धः **न प्रभवेत् ।** तं **योगम्** ईश्वरप्रसादसम्पादनं **न विदुः ॥** १९ ॥

किञ्च विषयसुखस्य महादुःखानुषङ्गाद् दुःखत्वमेवेत्याह- **कोन्वर्थ इति ।**

**कोन्वर्थः सुखयत्येनं कामो वा मृत्युमन्तिके ।**
**आघातं नीयमानस्य वध्यस्येव पदेपदे ॥ २० ॥**

**अन्तिके मृत्युं** सन्निहितमृत्युम् **एनम्** अनादिपापकर्तारं न कोऽप्य**र्थः** विषयः **सुखयति । वध्यस्य** धनचोरस्य **आघातं** वधार्हस्थलं **नीयमानस्य** वधमनुसन्धाय दुःखवत इति भावः । **अर्थः** क्षीरान्नभोजनं न सुखाय यथा तथा तस्मात् वैषयिकसुखं अनुपादेयमिति भावः ॥ २० ॥

ननु स्वर्गसुखं उपादेयं भवेत् इत्यत आह- **श्रुतञ्चेति** ।

**श्रुतं च दृष्टवन्नङ्क्षेत् स्पर्धासूयात्ययाप्ययैः ।**
**बह्वन्तरायैर्विहतं कृषिवच्चापि निष्फलम् ॥ २१ ॥**

**दृष्टवत्** भौमसुखवत् **श्रुतं** स्वर्गसुखं **नङ्क्षेत्** । कर्मप्राप्तत्वादिति भावः । यागादि-कर्मापि नियमेन न स्वर्गफलकमित्याह- **बह्वन्तरायैरिति** । **स्पर्धा** समगुणासहिष्णुता दोषारोपो वा **अत्ययः** महापातकेन पुण्यस्य नाशः अङ्गवैकल्यं वा **अप्ययः** लयः, एकदेशेन नाशः एतैः[1] **बह्वन्तरायैः** बहुविघ्नैः युक्तत्वात्, **कृषिवच्चापि निष्फलम्** अन्तरायैर्विहतकृषिरिव यागादिधर्मः फलजनको न भवति, स्वर्गादि यागादिधर्मः न क्षरति न ददातीति न भावः । 'क्षर विनाशसन्ततदानयोः' ।[2] २१ ॥

राजसानां यागादिधर्मः यदि फलजनकः तदा कीदृशं भोगं जनयति ? इति जिज्ञासायामाह- **अन्तरायैरिति** ।

**अन्तरायैरविहतो यदि धर्मः स्वनुष्ठितः ।**
**तेनापि निर्जितं स्थानं यथा गच्छति तच्छृणु ॥ २२ ॥**

**इष्ट्वेव देवता यज्ञैः स्वर्लोकं याति याज्ञिकः ।**
**भुञ्जीत देववत् तत्र भोगान् दिव्यान् निजार्जितान् ॥**

**स्वपुण्योपचिते तत्र विमान उपगीयते ।**
**गन्धर्वैर्विहरन् मध्ये देवीनां हृद्यवेषधृक् ॥ २४ ॥**

---

[1] अत्र "एतद्दुःखैः" इत्यधिकं पठ्यते । सम्पातायातं स्यात् । [2] अयं सम्भावितः पाठः । मूलपुस्तके तु- "बहुविघ्नैः युक्तत्वात् अन्तरायाकामत्वाद्वा स्वर्गादिना धर्मः रक्षतीति भावः । कृषिवच्चापि निष्फलम् ।" इति पठ्यते ।

**स्त्रीभिः कामगयानेन किङ्किणीजालमालिना ।**
**क्रीडन् न वेदात्मपातं सुराक्रीडेषु निर्वृतः ॥ २५ ॥**

**तावत् प्रमोदते स्वर्गे यावत् पुण्यं समाप्यते ।**
**क्षीणपुण्यः पतत्यर्वागनिच्छन् कालचालितः ॥ २६ ॥**

**यद्यधर्मरतः सङ्गादसतामजितेन्द्रियः ।**
**कामात्मा कृपणो लुब्धः स्त्रैणो भूतविहिंसकः ॥ २७ ॥**

**पशूनविधिनाऽऽलभ्य प्रेतभूतगणान् यजन् ।**
**नरकानवशो जन्तुर्गत्वा यात्युल्बणं तमः ॥ २८ ॥**

**अन्तरायैः** विघ्नैः **अविहतः** अनाहतः **धर्मः यदि स्वनुष्ठितः** साङ्गमनुष्ठितः भवेत् तेन धर्मकर्ता राजसं स्थानं स्वर्गः **निर्जितं** प्राप्तः **याज्ञिकः** क्रतुकर्ता । **विमाने** स्थितः **देवीनां** स्वर्गस्थानां कासाञ्चित् युवतीनां मध्ये **हृद्यवेषधृक्** अपेक्षितभूषणाद्यलङ्कारवान् । **सुराक्रीडेषु** देवोद्यानेषु । **क्रीडन् न वेद** पतनम् अनिच्छन् । राजसव्यापारमुक्त्वा तामसव्यापारमाह- **यद्यधर्मे** इति । **कामात्मा** विषयचित्तः । **कृपणः** विषयाप्राप्त्या दुःखवान् । भूतानि पञ्चनखाः प्राणिनः तेषां **विहिंसकः**, स्वोदरपूरणार्थमिति भावः । **आलभ्य** छागादिसंज्ञपनं कृत्वा ॥ २८ ॥

सात्विकव्यापारमाह- **कर्माणीति ।**

**कर्माणि दुःखोदर्काणि कुर्वन् देहेन तैः पुनः ।**
**देहमाभजते तत्र किं सुखं मर्त्यधर्मिणः ॥ २९ ॥**

**दुःखोदर्काणि** अल्पसुखफलकारीणिति भावः ॥ २९ ॥

ननु स्वर्गस्य कर्मप्राप्ततया भयाभावः ! इत्यत आह- **लोकानामिति ।**

**लोकानां लोकपालानां मद्भयं कल्पजीविनाम् ।**
**ब्रह्मणोऽपि भयं मत्तो द्विपरार्धपरायुषः ॥ ३० ॥**

परस्य= परसंज्ञस्य ब्रह्मणः शतायुषः, अर्धं परार्धं द्वे परार्धे यस्य तद् द्विपरार्धम्, तादृशं परायुर्यस्य तस्य ब्रह्मणः विराड्ब्रह्मणः । चतुर्मुखस्य परार्धम् आयुरिति भावः ॥ ३० ॥

ननु जीवस्य असह्यं कर्म कस्माद् भवति ? इति जिज्ञासायामाह- **गुणा** इति ।

**गुणाः सृजन्ति कर्माणि कालोऽनु सृजते गुणान् ।**
**जीवस्तु गुणसंयुक्तो भुङ्क्ते कर्मफलान्यसौ ॥ ३१ ॥**

**गुणाः** रजःप्रभृतयः **कर्माणि** सात्विकराजसतामसानि जीवे **सृजन्ति । कालः** सर्वकल्याणगुणसम्पन्नः परमात्मा **अनु** प्रकृतिलक्षणोपादानमादाय **गुणान् सृजते ।** देहगतत्वेपि कर्मकर्तृत्वेपि परमात्मा न भुङ्क्ते इति ज्ञापनाय तुशब्दः । **जीवः गुणसंयुक्तः** सन् **भुङ्क्ते** ॥ ३१ ॥

परमात्मकल्याणगुणजिज्ञासया कर्मबन्धपरिहर्तव्य इत्युक्तम् । तद्विरोधितया प्रसक्तं कुमतं दूषयितुमनुवदति- **यावत्स्यादिति ।**

**यावत् स्याद् गुणवैषम्यं तावन्नानात्वमात्मनः ।**
**नानात्वमात्मनो यावत् पारतन्त्र्यं तदैव हि ॥ ३२ ॥**

**यावदस्यास्वतन्त्रत्वं तावदीश्वरतो भयम् ।**
**य एतत् समुपासीरंस्ते मुह्यन्ति शुचाऽर्पिता: ॥ ३३ ॥**

**गुणवैषम्यं** गुणविकारः, रजस्तमःकार्याणि **याव** त्पर्यन्तं स्युः **ताव** त्पर्यन्तम् **आत्मनः** अविच्छिन्नस्य **नानात्वम्** औपाधिको भेदः । आत्मनो जीवः ब्रह्म इति **नानात्वं** यावत् तावत् **अस्य** जीवस्य **पारतन्त्र्यम्** ईश्वराधीनता । जीवस्य **अस्वतन्त्रत्वं यावत् तावत ईश्वरतः** प्रबलाद्वा भयं, दुःखानुभवरूपत्वम् इत्यर्थः । दूषयति **य एतदिति । एतद्** मतं **समुपासीरन्** आदरेण ध्यायन्ति **ते मुह्यन्ति** भ्रान्ता भवन्ति । शुचा नित्यदुःखेन **अर्पिताः** प्राप्ताः भवन्ति । दुःखानुभवः भवतीति भावः । तस्मात् जीवपरौ स्वभावतो भिन्नौ, परमात्मा स्वाभाविकोऽनन्तकल्याणगुणवांश्चेति भावः ॥ ३३ ॥

"कालोऽनुसृजते गुणान्" इत्युक्तम् स कालः कीदृश ? इति जिज्ञासायामाह- **काल** इति ।

**काल आत्माऽऽगमो लोकः स्वभावो धर्म एव च ।**
**इति मां बहुधा प्राहुर्गुणव्यतिकरेऽसति ॥ ३४ ॥**

पूर्णानन्तगुणवत्वात् "कालः" इति मां प्राहुः । तत्र निमित्तमाह- **आत्मत्वा-दिति ।** अन्तर्यामिमूर्तिभिः सर्ववस्तुप्राप्यत्वनिमित्तेन अथवा सर्वकामैः प्राप्तत्वात्, गुणैः प्राप्तत्वादिति, चेतनाचेतनसर्वविषयज्ञानवत्वात् **आगमः** अवगच्छति विश्वमिति प्राहुः । ज्ञास्वरूपत्वात् **लोकः ।** स्वयमेव भवति सदा इति स्वतन्त्रः **स्वभाव** शब्दार्थः । अहं सर्वस्य धारणात् **धर्म** इति । बहुधा बहुनामभिः मां प्राहुः । ननु कालादिशब्दानां अन्यत्रापि व्यवहारदर्शनात् कथं भवानेवार्थः ? इत्यत आह- **गुणव्यतिकरे** सृष्टौ **असति=** प्रलये, मुक्ताः मामेवं प्राहुः इत्यर्थः ॥ ३४ ॥

ननु ब्रह्म जीवभावमापन्नं संसरतीति वर्णयन् संसारसमये जीवब्रह्मणोः सुख-दुःखव्यवस्थां पृच्छतीत्याह- **गुणेष्विति** ।

**उद्धव उवाच-**

**गुणेषु वर्तमानोऽपि देहजेष्वनपावृतः ।**

**गुणैर्न बध्यतेऽदेही बध्यते वा कथं विभो ॥ ३५ ॥**

**गुणेषु** रसादिविषयेषु प्राप्तेषु । **देहजेषु** देहाधिकरणजन्येषु विषयानुभवेषु वर्तमानः । **अदेही** स्वतः देहरहितः परमात्मा गुणैर्न बद्ध्यते । **अनपावृतः** सन् । बद्ध्यते चेत् कथं बद्ध्यते ? वा शब्दः चेच्छब्दार्थः ॥ ३५ ॥

कथं बध्यते ? इत्येतद्विवृणोति **कथं भुञ्जीतेति** ।

**कथं वर्तेत विहरेत् कैर्वा ज्ञायेत लक्षणैः ।**

**किं भुञ्जीतोत विसृजेच्छयीतासीत याति वा ॥ ३६ ॥**

अनादिमुक्तस्य अनादिबन्धः कथं घटते इत्यर्थः ॥ ३६ ॥

**एतदच्युत मे ब्रूहि प्रश्नं प्रश्नविदां वर ।**

**नित्यमुक्तो नित्यबद्ध एक एवेति मे मतिः ॥ ३७ ॥**

**॥ इति श्रीमद्भागवते एकादशस्कन्धे दशमोऽध्यायः ॥**

तवायं प्रश्नः किमर्थम् इत्याशङ्क्याह- **मे मतिरिति** । एकजीववादिमतानुसारेणाह- **नित्यमुक्त** इति । सम्यगवधारणार्थं पूर्वपक्षप्रसञ्जनेन सिद्धान्तं पुनः पृच्छामीति भावः ॥ ३७ ॥

॥ इति श्रीयादवेन्द्रयतिविरचिते एकादशस्कन्धव्याख्याने दशमोऽध्यायः ॥

# 11 | एकादशोऽध्यायः

जीवस्य नित्यबद्धत्वमुक्तं पूर्वपक्षिणा, तन्न सम्भवतीत्याह- **बद्धो मुक्त** इति ।

**श्रीभगवानुवाच-**

**बद्धो मुक्त इति ह्याख्या गुणतो मे न वस्तुतः ।**

**गुणस्य मायामूलत्वान्न मे मोक्षो न बन्धनम् ॥ १ ॥**

**मे गुणतः** मदधीनसत्वादेः । रजोनिमित्ताद् जीवस्य **बद्ध इत्याख्या** व्यपदेशः । **वस्तुतः** स्वभावतः जीवः बद्धो **न** । ननु सादिर्गुणोऽपि केवलचेतनबन्धकश्चेत् अविशेषादीश्वरस्य कुतो न बन्धक इत्यत आह- **गुणस्येति** । तमोगुणस्य रजोगुणस्य वा माया= प्रकृतिरूपाज्ञानं तत् मूलं= कारणं यस्य सः तस्य भावः, तस्मात् । अज्ञस्य जीवस्य अनादितः बन्धो भवति । **मे** सर्वज्ञस्य नेति भावः । अज्ञानाभावादिति भावः । अतः **मोक्षः** बन्धनिवृत्तिः **मे न** । अहं नित्यमुक्त इति भावः ॥ १ ॥

'जीवस्य बद्ध इत्याख्या न वस्तुतः' इत्युक्तम् । तत् स्पष्टं प्रतिपादयति- **शोकमोहाविति** ।

**शोकमोहौ सुखं दुःखं देहोत्पत्तिश्च मायया ।**

**स्वप्ने यथाऽऽत्मनः ख्यातिः संसृतिर्नतु वास्तवी ॥ २ ॥**

**मायया** अज्ञानेन **आत्मनः** स्वजाग्रद्देहस्य यथा स्वप्नदेहे **ख्यातिः** जाग्रद्देहाभेद-प्रतीतिः तया शोकः= दुःखं रोदनं वा मोहः= चिन्ता तौ भवतः । तथा **मायया आत्मनः** जीवस्य **देहोत्पत्तिः सुखं दुःखं** च भवति । आत्मनः **ख्यातिश्च** अन्तःकरणगत-

दुःखस्य स्वीयतया भ्रान्तिश्च, तया विकारलक्षणा **संसृति** र्भवति, **न तु वास्तवी,** वस्तुतो जीवस्य ज्ञानस्वरूपत्वात् । अविद्या स्वभावसिद्धाऽनित्या, सा वास्तवी न भवतीति अवास्तवी निवर्त्यत्वादिति भावः ॥ २ ॥

ननु मायाख्यजडप्रकृतिर्वा कथं चेतनस्वरूपस्य आच्छादिका ? चेतनस्य जडापेक्षया प्रभूतत्वात् । बन्धकत्वे वा अविद्यायाः प्रबलत्वात् ज्ञानस्य दुर्बलत्वात् अविद्यामोक्षो न स्यात् ? इत्याशङ्क्याह- **विद्याविद्येति ।**

**विद्याविद्ये मम तनू विद्ध्युद्धव शरीरिणाम् ।**
**मोक्षबन्धकरी आद्ये मायया मे विनिर्मिते ॥ ३ ॥**

विद्याविद्ययोः नियामकदेवते श्रीदुर्गे **आद्ये** प्राथमिके **मम** तनू इव **तनू ।** मम अधिष्ठाने ते श्रीदुर्गे **शरीरिणां** मोक्षबन्धकृती स्याताम् इति **मे मायया** मदिच्छया **विनिर्मिते** नियमिते इत्यर्थः । रूपाभिव्यक्त्यपेक्षया विनिर्मितत्वोक्तिर्वा । जडस्यापि अज्ञानस्य प्रबलचेतनसहकृतत्वात् बन्धकत्वम् । ज्ञानस्यापि प्रबलचेतनसहकृतत्वात् मोचकत्वम् । जडचेतनयोः प्राबल्येन दौर्बल्येन साम्येन वा न बन्धमोक्षौ, किन्तु ईश्वरेच्छावशादिति भावः ॥ ३ ॥

अमुमर्थं दृढीकुर्वन् पुनराह- **एकस्येति ।**

**एकस्यैव ममांशस्य जीवस्यैवं महामते ।**
**बन्धोऽस्याविद्ययाऽनादिर्विद्यया च तथेतरत् ॥ ४ ॥**

**मम अंशस्य** मद्दत्तज्ञानादिभिः ईषत् मम सदृशस्य इत्यर्थः । **जीवस्य** चेतनस्य **एकस्यैव** जडापेक्षया मुख्यस्यैव **अविद्यया** मदिच्छानियमितया बन्ध इति भावः । **विद्यया** मदिच्छाविशेषनियमितया इति भावः । **इतरत्** मोक्षः ॥ ४ ॥

एवं प्राप्तस्य बन्धस्य अनित्यत्वमुक्त्वा 'एक एवेति मे मतिः' इत्यस्य (भागवते ११-१०-३७) उत्तरमाह- **अथ बद्धस्येति ।**

**अथ बद्धस्य मुक्तस्य वैलक्षण्यं वदामि ते ।**
**विरुद्धधर्मिणोस्तात स्थितयोरेकधर्मिणि ॥ ५ ॥**

**अथ** कार्त्स्न्येन **विरुद्धधर्मिणोः** विरुद्धौ स्वरूपगुणशक्त्यादिभ्यः परस्परं भिन्नौ परस्परं एतन्निषेधरूपत्वं विरोधः, तद्वन्तौ । तौ धर्मिणौ च । तयोः निर्धर्मकत्वं तु अप्रामाणिकमिति भावः । **एकधर्मिणि** देहे **स्थितयोः वैलक्षण्यं** भिन्नानि लक्षणानि **वदामि** ॥ ५ ॥

**सुपर्णावेतौ सयुजौ[1] सखायौ यदृच्छया कृतनीडौ च वृक्षे ।**
**एकस्तयोः खादति पिप्पलान्नमन्यो निरन्नोऽपि बलेन भूयान् ॥ ६ ॥**

**आत्मानमन्यं च स वेद विद्वानपिप्पलादो न तु पिप्पलादः ।**
**योऽविद्ययाऽन्धः स तु नित्यबद्धो विद्यामयो यः स तु नित्यमुक्तः ॥ ७ ॥**

**सुपर्णौ** सुपरानन्दस्वरूपौ **सयुजौ** नित्ययुक्तौ **सखायौ** परस्परं आदरवत्वाद् इति भावः । **यदृच्छया** ईशेच्छया **वृक्षे** वृश्च्यते छिद्यत इति वृक्षः, अनित्यो देहः तत्र **कृतनीडौ** कृताश्रयौ स्थितावित्यर्थः । एतादृशौ यौ **तयोः एकः** पूर्णबलसुखज्ञानादि-रहितः **पिप्पलान्नं** पिप्पलं= कर्मफलरूपं अन्नं= भोग्यं स्वाद्विति बुद्ध्या **खादति**

---
[1] 'सदृशौ' इति पाठान्तरम् ।

अनुभवति । दुःखमिति तस्य अस्वादुत्वादिति भावः । **अन्यः** अपूर्णचेतनाद्विलक्षणः ज्ञानसुखबलादिभिः पूर्ण इति भावः । **निरन्नोऽपि** अन्ननिबन्धनफलरहितोऽपि, नित्यम् अशनायापिपासाभ्यां रहितत्वादिति भावः । **बलेन भूयान्** निजबलेन पूर्णः, लीलया विषयभोक्ता चेति भावः ॥

**स** स्वभावसिद्धपूर्णकल्याणगुणः **अपिप्पलादः** कर्मप्रसञ्जितभोगरहितः **आत्मानम् अन्यञ्च** अशेषविशेषान् **वेद,** अतः **विद्वान्** स एव । पिप्पलादस्तु कर्मप्राप्तविषयभोगवान् न तु विद्वान् किञ्चिज्ज्ञ इति भावः । **यः नित्यबद्धः** नित्यं विष्ण्वधीनः **सः अविद्यया अन्धः** ईश्वरापरोक्षरहितश्च । **विद्यामयः** पूर्णज्ञानस्वरूपः **यः स नित्यम्** अज्ञानबन्धाद् विमुक्तः । अतः जीवपरयोः स्वरूपतः गुणतश्च परस्परं भेदः । अन्यथा एकस्यैव बन्धो न स्यादिति भावः ॥ ७ ॥

यदि देहसम्बन्धः जीवदुःखहेतुः तदा ईश्वरस्य विकारः स्यात् देहस्थत्वात् । कुतो न दुःखविकारः? इत्यत आह- **देहस्थोऽपीति** ।

**देहस्थोऽपि न देहस्थो विद्वान् स्वप्नाद् यथोत्थितः ।**
**अदेहस्थोऽपि देहस्थः कुमतिः स्वप्नदृग् यथा ॥ ८ ॥**

**विद्वान्** सर्वज्ञः ईश्वरः स्वेच्छया **देहस्थोऽपि न देहस्थः** देहस्थात् जीवात् विलक्षणः । दुःखविकारवान् न भवति इत्यर्थः । कुतः ? इत्यत आह- **स्वप्नादिति** । स्वप्नदुःखादुत्थित इव स्वस्मिन् दुःखारोपरहितत्वात् इति भावः । **अदेहस्थोऽपि** देहस्थासुरादन्योऽपि जीवः **देहस्थः** सन् **कुमतिर्भवति** । स्वस्मिन् देहादिगतधर्मारोपवान् भवति । तेन नीचतादिविकारवान् इति भावः । **स्वप्नदृक्** स्वप्नदेहे जाग्रद्देहाभेदभ्रमवान् दुःखी **यथा** तथेति भावः ॥ ८ ॥

अविद्याच्छादनं भ्रमं जनयति, पापादिसम्पादनपुरस्सरं दुःखं सम्भवति । हेतुस्तु अहङ्कारादिभ्रमः । ईश्वरस्य तादृशाहङ्काराभावात् न दुःखमित्याह- **इन्द्रियैरिति ।**

**इन्द्रियैरिन्द्रियार्थेषु गुणैरपि गुणेषु च ।**
**गृह्यमाणेष्वहङ्कुर्यान्न विद्वान् यस्त्वविक्रियः ॥ ९ ॥**

**गुणैः** ईश्वराधीनैः जीवैः कर्तृभिः **इन्द्रियैः इन्द्रियार्थेषु** सत्सु ये गुणाः दुःखादयः प्राप्नुवन्ति तेषु **गुणेषु** ईश्वराधीनेषु दुःखादिषु **अहङ्कुर्यात्** जीवः अहं दुःखीति दुःखं स्वस्मिन् आरोपयेदित्यर्थः । तेन विक्रियते च । **यो विद्वान्** सर्वज्ञः सन् **न कुर्यात्** स्वस्मिन् दुःखारोपं न करोति । अतः **अविक्रियः** नीचतादिविकारलक्षणसंसाररहितः ॥ ९ ॥

जीवस्य अस्वातन्त्र्येण विकारलक्षणबन्धश्चेत् ईश्वरस्य बन्धकत्वं कथम् ? इति जिज्ञासायामाह- **दैवाधीन** इति ।

**दैवाधीने शरीरेऽस्मिन् गुणभाव्येन कर्मणा ।**
**वर्तमानोऽबुधस्तत्र कर्ताऽस्मीति निबध्यते ॥ १० ॥**

दैवं= अदृष्टप्रेरकपरमात्मा तस्य अधीने तस्य स्वाम्ये, सर्वव्यापारेषु तेन प्रेर्यमाणे इति वा अर्थः । **अस्मिन् शरीरे** स्थितः जीवः **गुणभाव्येन** गुणः अप्रधानः, 'अस्वतन्त्रोऽहं अस्मिन् कर्मणि' इति भावनीयेन अनुसन्धानार्हेण **कर्मणा** सह **वर्तमानः** तत्वदेवैः क्रियमाणं कर्म कुर्वन् इत्यर्थः । **अबुधः** सर्वव्यापारे ईश्वरस्य स्वातन्त्र्यमजानन् 'अहमेव कर्तास्मि' इति स्वातन्त्र्यारोपेण **निबध्यते** स्वस्मिन् अविद्यमानम् ईश्वरस्वातन्त्र्यम् अनुसन्दधानः तदपराधात् ईशेन बन्धवान् भवतीति भावः ॥ १० ॥

पापसम्पादकस्वातन्त्र्यभ्रमपरिहारोपायमाह- **एवं विरक्त** इति ।

**एवं विरक्तः शयन आसनाटनमज्जने ।**
**दर्शनस्पर्शनघ्राणभोजनश्रवणादिषु ॥ ११ ॥**

**न तथा बध्यते विद्वान् तत्र तत्राददद् गुणान् ।**
**प्रकृतिस्थोऽप्यसंसक्तो यथा खं सविताऽनिलः ॥ १२ ॥**

**एवं विद्वान्** अन्तर्यामिणः सर्वव्यापारेषु स्वातन्त्र्यं, जीवस्य पारतन्त्र्यं च विद्वान् सः अनुसन्दधानः शयनादिषु= विषयभोगव्यापारादिषु **विरक्तः** स्वेच्छामात्रेण विषयाणामलाभादिति भावः । **गुणान्** विषयान् **आददत्** अनुभवन्नपि, **तथा** परमात्मनि स्वातन्त्र्यादिज्ञानरहित इव **बध्यत इति न** । **प्रकृतिस्थोऽपि** भूतबन्धवानपि, देहवानपि **असंसक्तः** विषयासक्तिरहितो भवति । **यथा** वाय्वादिदेवानां विषयसम्बन्धे विषयकृत-विकारो नास्ति इति भावः ॥ १२ ॥

श्रवणादिना एवं विदुषः ध्यानक्रमेण अपरोक्षसम्पन्नस्य फलमाह- **वैशारद्येति** ।

**वैशारद्येक्षयाऽसङ्गशितया च्छिन्नसंशयः ।**
**प्रतिबुद्ध इव स्वप्नान्नानात्वाद् विनिवर्तते ॥ १३ ॥**

**वैशारद्या** योगकुशलेन सम्पादितया परमात्मविषयिण्येति वा । असङ्गेन= विषयेषु दृढविरागेण शितया= अतिसमर्थया इत्यर्थः । **ईक्षया** अपरोक्षज्ञानेन, छिन्नः संशयः[1] यस्य सः । **स्वप्नात् प्रतिबुद्धः** स्वप्नभ्रान्तिरहित इव **नानात्वात्** भ्रमात् 'तस्मिन् अतद्' इति ग्रहणात् बन्धमूलकारणादिति भावः । **विनिवर्तते** रहितो भवतीत्यर्थः ॥ १३ ॥

अपरोक्षज्ञानिनः विषयभोगेऽपि बन्धराहित्यमाह- **यस्येति** ।

---
[1] अत्र 'प्रारब्धरागप्राप्तः' इत्यधिकं पठ्यते मूलपुस्तके, सम्पातायातं स्यात् ।

**यस्य स्युर्वीतसङ्कल्पाः प्राणेन्द्रियमनोधियाम् ।**

**वृत्तयः स विनिर्मुक्तो देहस्थोऽपि हि तद्गुणैः ॥ १४ ॥**

**यस्य** अपरोक्षवतः प्राणवृत्तिः= व्यापारः सञ्चारः, इन्द्रियवृत्तिः= विषयज्ञानं, मनोवृत्तिः= बाह्यार्थस्मरणं, धीलक्षणकरणस्य वृत्तिः= कार्यनिश्चयः एताः **वीतसङ्कल्पाः** एवमेवं करोमीति विषयसङ्कल्परहिताः **स्युः** भवन्ति । देहादावभिमानाभावादिति भावः । **सः** अपरोक्षज्ञानी **देहस्थोऽपि गुणैः** रागद्वेषादिभिः चिन्तादुःखादिभिर्वा **विनिर्मुक्तः** जीवन्मुक्त इत्यर्थः ॥ १४ ॥

अपरोक्षवतः देहादौ ममतादिभ्रमरहितस्य गुणान्तरमाह- **यस्यात्मेति ।**

**यस्यात्मा हिंस्यते हिंस्रैर्येन किञ्चिद् यदृच्छया ।**

**अर्च्यते वा क्वचित् तत्र न तु विक्रियते बुधः ॥ १५ ॥**

**यदृच्छया** प्रारब्धसहकृतया **यस्य** अपरोक्षिणः **आत्मा** देहः **हिंस्रैः** हिंसाशीलैः **हिंस्यते** प्रहारविषयो भवति । **क्वचित्** येन केनचित् पुरुषेण **अर्च्यते** वा । **तत्र** तादृशदेहे स्थितोऽपि **बुधः** अपरोक्षी **न तु विक्रियते** नीचतादिविकारवान् न भवति ॥ १५ ॥

विकाराभावात् निन्दादिकं न करोतीत्याह- **न स्तुवीतेति ।**

**न स्तुवीत न निन्देत कुर्वतः साध्वसाधु वा ।**

**वदतो गुणदोषाभ्यां वर्जितः समदृङ् मुनिः ॥ १६ ॥**

**समदृक्** शत्रुमित्रयोः इष्टानिष्टयोः, स्वकर्मप्राप्तत्वनिश्चयवानिति भावः । **साधु वा असाधु वा कुर्वतः वदतश्च** जनस्य गुणदोषान् **न स्तुवीत न निन्देत** । गुणेन=

अल्पगुणेन वर्जितः, महागुणवान् इति भावः । दोषेण च वर्जितः । गुणदोषयोरीश्वराधीनत्वबुद्धिमान् इति भावः ॥ १६ ॥

**न कुर्यान्न वदेत् किञ्चिन्न ध्यायेत् साध्वसाधु वा ।**
**आत्मारामोऽनया वृत्त्या विचरेज्जडवत् स्थितः[1] ॥ १७ ॥**

अपरोक्षज्ञानी **आत्मारामः** आत्मध्यानादिप्राप्तानन्दवान् इत्यर्थः । **अनया वृत्त्या** देहादौ अभिमानाभावलक्षणव्यापारेण । 'जडवत् स्थितः' इति पाठः । स्थितिः= उक्तनियमः, तत्सम्पन्नः स्थितः **विचरेत्** परमात्मानं स्मरेदित्यर्थः । देहपोषणादौ विशेषतः यत्नरहितः सन् **न कुर्यात्** अर्थार्जनादिकम् । अन्नादिदातारं प्रति **जडवत् न वदेत् । किञ्चिदपि** कार्यं जडवत् **न ध्यायेत्,** विषयलाभार्थमिति भावः । अन्नाद्यप्राप्तौ च 'इदमसाधु' इति न ध्यायेत किन्तु साधु कुर्यात् विष्णुप्रीतिकरं ध्यानादिकं च कुर्याद् इत्यर्थः । उक्ताः सर्वे गुणाः अपरोक्षिणः सिद्धाः । जिज्ञासुभिः अवश्यं सम्पादनीया इति भावः ॥ १७ ॥

एवं ज्ञानिगुणानुक्त्वा श्रीहरिज्ञानासक्तिरहितं द्विजं निन्दति- **शब्दब्रह्मणीति ।**

**शब्दब्रह्मणि निष्णातो न निष्णायात् परे यदि ।**
**श्रमस्तत्र भ्रमफलो ह्यधेनुमिव रक्षतः ॥ १८ ॥**

**शब्दब्रह्मणि** वेदे **निष्णातः** वेदाध्ययनादिलक्षणनियमवान् **परे** सम्पूर्णकल्याणगुणे ब्रह्मणि यदि **न निष्णायात्** परमात्मगुणानुसन्धाने नियमवान् न स्यात्, यदि परमात्मध्यानासक्तो न भवेदित्यर्थः । तस्य पुरुषस्य **श्रमः** गुरुकुले वेदपाठादिश्रमः **भ्रमफलः** स्वर्गभूभ्रमणफलकः । भ्रमः दुःखानुभवेन मनःक्षोभलक्षणं भ्रमणं वा फलं यस्य

[1] 'विचरेज्जडवन्मुनिः' इति पाठान्तरम् ।

सः तथाविधो भवति, न तु नित्यसौख्यसम्पादकः । परब्रह्मणि निष्णातस्य फलं नित्यसौख्यमिति भावः । **अधेनुं** क्षीरदोहरहितां **गां रक्षतः** रक्षणश्रमवतः क्षीरवणिजः अधेनुरक्षणाय अटव्यां तृणहरणार्थभ्रमणं यथा दुःखफलं तथा ॥ १८ ॥

पुंसां श्रीहरिध्यानमेव सदा कर्तव्यम् । तद्रहितव्यापारः दुःखायेत्याह- **गां दुग्ध्दोहामिति ।**

**गां दुग्धदोहामसतीं च भार्यां देहं पराधीनमसत्प्रजां च ।**
**वित्तं त्वतीर्थीकृतमङ्ग वाचं हीनां मया रक्षति दुःखदुःखी ॥ १९ ॥**

**यस्यां न मे पावनमङ्ग कर्म स्थित्युद्भवत्राणनिरोधनस्य[1] ।**
**लीलावतारेधितकर्म वा स्याद् वन्ध्यां गिरं तां बिभृयान्न धीरः ॥ २० ॥**

दुग्धायाः= पूर्वं सञ्जातदोहायाः दोहः= पुनः दोहनं यस्याः सा दुग्धदोहा= क्षीररहिता पूर्वदुग्धा सती पुनः दोहनवती इति वा ताम् । क्षीररहितां गां क्षीरमात्र-प्रयोजनो यो वणिक् रक्षति स दुःखदुःखी यथा । यः **असतीं भार्यां** रक्षति स यथा, यः **पराधीनं** नित्यं मृत्युगृहीतम् ईश्वरसेवानर्हं देहं रक्षति स यथा । **असत्प्रजाम्** असन्तं व्यङ्गं पुत्रं यो रक्षति स यथा । **अतीर्थीकृतं** महत्सु असमर्पितं **वित्तं** यो रक्षति स यथा । तथा **मया हीनां** कर्ममात्रपरतया योजितां**वाचं** वेदवाचं यो **रक्षति** स **दुःखदुःखी** दुःखादपि दुःखमेवाप्नोति ॥ २० ॥

त्राणं= पोषणं **निरोधनं** = सर्वकार्यनाशः एतानि येन सः= स्थित्यादिकर्ता तस्य **मे कर्म** स्वरूपसत्ताप्रदानादिव्यापाराः **अस्य** जगतः स्थित्यादिनिरोधमुद्दिश्य यत्कर्म इति वा । स्थित्युद्भवनिरोधाः यस्य तत् कर्म इति वा **यस्यां** वाचि **न** प्रतिपाद्यम् ।

[1] 'स्थित्युद्भवत्राणनिरोधमस्य' इति पाठान्तरम् ।

मे लीलावतारैः एधितं= प्रकाशितं अभिवृद्धं वा **कर्म** असुरनिग्रहेण देवपरिपालनादीनि वा यस्यां न प्रतिपाद्यम् । **तां वन्ध्यां** निष्फलां **गिरं** वाचं ग्राम्यगाथाः, वृथालापाः, कलाविद्या वा एतादृशीं गिरं **न बिभृयात्** । कदाचिन्मनसः तत्र प्रवृत्तावपि **धीरः** स्यात् मनोनिवर्तने धैर्यवान् स्यात् स्थैर्यवान् स्यात् इति वा ॥ २० ॥

**एवं जिज्ञासयाऽपोह्य नानात्वभ्रममात्मनि ।**
**उपारमेत विरजं मनो मय्यर्प्य सर्वगे ॥ २१ ॥**

**एवं** विविधविषयविरागसम्पत्त्यनन्तरं **जिज्ञासया** श्रवणाद्यावृत्त्या **आत्मनि नानात्व-भ्रमं** जीवस्य ईश्वरत्वभ्रमं, स्वातन्त्र्याद्यारोपलक्षणभ्रमं कुसमयासङ्गनितभ्रमं, वा **अपोह्य** निराकृत्य सर्वजीवादिषु स्वमूर्तिभिः व्याप्ते **मयि, विरजं** रजोभागेन तत्कार्येण च रहितं मयि ध्यानातिशयेनेति भावः । **मनः** समर्प्य समाधिं सम्पाद्येत्यर्थः । **उपारमेत** बन्धरहितः स्यात् । समाधिप्राप्तादपरोक्षादिति भावः ॥ २१ ॥

ध्यानादिपरिपाकरहितस्य कार्यमाह- **यद्यनीश** इति ।

**यद्यनीशो धारयितुं मनो ब्रह्मणि निश्चलम् ।**
**मयि सर्वाणि कर्माणि निरपेक्षः समाचर ॥ २२ ॥**

**अनीशः मनः निश्चलं** यथा भवति तथा **धारयितुम् । निरपेक्षः** फलापेक्षारहितः **सर्वाणि कर्माणि मयि** समर्प्य समाचार कर्माण्याचर ॥ २२ ॥

मनसः परमात्मनिश्चलत्वादिसम्पादनाय सम्पाद्यगुणानाह- **श्रद्धालुरिति ।**

**श्रद्धालुर्मे कथाः शृण्वन् सुभद्रा लोकपावनीः ।**
**गायन्ननुस्मरन् कर्म जन्म वाऽभिनवं मुहुः ॥ २३ ॥**

**मदर्थं धर्मकामार्थान् आचरन् मदपाश्रयः[1] ।**
**लभते निश्चलां भक्तिं मय्युद्धव सनातने ॥ २४ ॥**

**सत्सङ्गलब्धया भक्त्या मयि मां य उपासते ।**
**स वै मे दर्शितं सद्भिरञ्जसा विन्दते पदम् ॥ २५ ॥**

मद्गुणान् मन्नामानि गायन् **अभिनवं** सदातनं वार्धक्यादिदोषरहितमिति भावः । **जन्म** अवतारान् **कर्म** दुष्टनिग्रहसाधुपरिपालनादीनि, गुणमहदादीनां ब्रह्माण्डादीनां च सृष्ट्यादीनि कर्माणि **स्मरन्** मत्= मत्प्रीत्यर्थम् अपाश्रयः गृहादिरहितः **मदर्थं** कामान् देहपोषणादीन् अर्थान्= धनधान्याद्यर्जनादीनि आचरन् गृहस्थः प्रवचनकर्ता[2] चेति भावः । **मयि मत्सङ्गलब्धया भक्त्या मां य उपासते स निश्चलां भक्तिं लभत । स** निश्चलभक्तिसम्पन्नः **मे पदं विन्दते** श्रीहरिचरणं प्राप्नोति, स्वयोग्यवैकुण्ठादिकं प्राप्नोति इति वा ॥ २५ ॥

**उद्धव उवाच-**
**साधुत्व उत्तमश्लोक मनः कीदृग्विधं प्रभो ।**
**भक्तिस्त्वय्युपयुञ्जीत कीदृशी सद्भिरादृता ॥ २६ ॥**

**एतन्मे पुरुषाध्यक्ष प्रपन्नाय च कथ्यताम् ॥ २७ ॥**

**साधुत्वे सति** तस्य साधो**र्मनः कीदृक्?** साधोः किं लक्षणमिति प्रश्नार्थः । या **त्वयि भक्तिः** अपवर्गार्थम् उपयुज्येत **सा कीदृशी । हे पुरुषाध्यक्ष !** पुरुषस्य= विरिञ्चस्य अध्यक्ष= स्वामिन् **एतत्** प्रश्नोत्तरं **प्रपन्नाय** शरणं प्राप्ताय **कथ्यताम् ॥** २७ ॥

---

[1] 'मदुपाश्रयः' इति पाठान्तरम् । [2] 'पञ्चयज्ञकर्ता' इति पाठः सम्भाव्यते ।

अन्यो गुरुः उत्तरं निर्दिशति । किमर्थं मां प्रति पुनः पुनः प्रश्नः ? इत्याशङ्क्याह- **त्वं ब्रह्म** इति ।

**त्वं ब्रह्म परमं व्योम पुरुषः प्रकृतेः परः ।**
**अवतीर्णोऽसि भगवान् स्वेच्छोपात्तपृथग्वपुः ॥ २८ ॥**

**त्वं परमं ब्रह्म** निरतिशयज्ञानानन्दादिपूर्णः, उत्तरवक्ता त्वत्सदृशो नास्तीति भावः । **परमं व्योम** 'व्योतं जगदिदं यस्यां सा व्योम श्रीरुदाहृता', तस्याः **प्रकृतेः** अपि **परमः ।** त्वं पुरुषश्च । स्वेच्छया = कर्माधीनतां विनेति भावः, उपात्तं= स्वीकृतं पृथक् = अन्याभिमानविषयं वसुदेवादिसम्बन्धि वपुः= शरीरं येन सः । पूर्वं वसुदेवादिषु स्थित्वेति भावः । **अवतीर्णोऽसि ।** अतः भवान् सर्वगुरूत्तमः इति भावः ॥ २८ ॥

साधोर्लक्षणमाह- **कृपालुरिति ।**

**श्रीभगवानुवाच-**
**कृपालुरकृतद्रोहस्तितिक्षुः सर्वदेहिनाम् ।**
**सत्यसारोऽनवद्यात्मा समः सर्वोपकारकः ॥ २९ ॥**

**कामैरहतधीः शान्तो**[1] **मृदुः शुचिरकिञ्चनः ।**
**अनीहो मितभुक् शान्तः स्थिरो मच्छरणो मुनिः ॥ ३० ॥**

**अप्रमत्तो गभीरात्मा धृतिमान् जितषड्गुणः ।**
**अमानी मानदः कल्यो मैत्रः कारुणिकः कविः ॥ ३१ ॥**

---

[1] 'कामैरहतधीर्दान्तो' इति पाठान्तरम् ।

**आज्ञायैव गुणान् दोषान् मया दिष्टानपि स्वकान् ।**
**धर्मान् सन्त्यज्य यः सर्वान् मां भजेत् स च सत्तमः ॥ ३२ ॥**

**देहिनां** देहिनः प्रति **अकृतद्रोहः । तितिक्षुः** शीतोष्णादिद्वन्द्वसहिष्णुः । सत्य-वचनेषु सारो यस्य सः । ईषदप्यसत्यवक्ता न भवेदिति भावः । **अनवद्यात्मा** क्रोधासूयादिदोषरहितमनाः **समः** मित्रामित्रेषु, अतः असह्यादि रहितः । **कामैः** विषयाकाङ्क्षादिभिः **अहतधीः** अप्रतिबद्धपरमात्मज्ञानः । **शान्तः** इन्द्रियविषयपरित्यागे जागरूकः । **मृदुः** महत्सु नम्रः **अकिञ्चनः** रहितः । **शान्तः** कोपादिशान्त्युपेतः । **स्थिरः** स्वधर्माचरणे स्थिरः= चापलरहितः, अहं शरणं रक्षिता यस्य सः **मच्छरणः । अप्रमत्तः** विद्यातिशयेन प्रसक्तमदनिरसनसमर्थः, प्रमादरहितो वा **गभीरात्मा** अज्ञात-चित्तवृत्तिः । **धृतिमान्** कदाचित् अन्नाद्यलाभेऽपि धैर्यसम्पन्नः । जिताः= परिहृताः षड्गुणाः कामक्रोधादयः येन, षड्विषया येन इति वा । **अमानी** अभिजात्यादिप्राप्तगर्व-रहितः **मानदः** महत्सु बहुमानकर्ता, मानं= ज्ञानं, मानदः= ज्ञानदाता । **कल्यः** स्वधर्मे अलसतारहितः । **मैत्रः** समेषु मित्रव्यापारकर्ता । **कविः** श्रुतार्थविस्मरणरहितः, अपेक्षिततत्वज्ञानवान् **मया दिष्टान् गुणान्** ज्ञानभक्तिसम्पादकान् **दोषान्** उक्तगुणाभाव-लक्षणान् दोषान्, एवं प्रकारान् **आज्ञाय** सम्यक् ज्ञात्वा, विस्मरणरहितः सन् इति भावः । **स्वकान्** आश्रमोचितान् **धर्मान् सन्त्यज्य** फलोद्देशेनाचरणं परित्यज्य, मत्प्रीत्यर्थं कर्माणि कुर्वन् इति भावः । **यः मां भजेत्** श्रवणज्ञानादिरूपां मम सेवां कुर्यात् **स** च सोऽपि **सत्तमः** ॥ ३२ ॥

साधुलक्षणमुक्त्वा भक्तलक्षणमाह- **ज्ञात्वेति ।**

**ज्ञात्वा ज्ञात्वाऽथ ये वै मां यावान् यश्चास्मि यादृशः ।**
**भजन्त्यनन्यभावेन ते मे भक्ततमा मताः ॥ ३३ ॥**

**अथ** उक्तगुणसम्पत्त्यनन्तरं **मां ज्ञात्वा** जगदुत्पत्तिपालनादिकर्तारं ज्ञात्वा, वेदादिभिः गुरूपदेशैः इति भावः । अहं **यावान्** यादृशमहत्त्वोपेतः, **यश्च** यत्स्वरूपः, **यादृशः** यद्गुणसंपन्नः **अस्मि** तेनैव प्रकारेण माम् अथ पुनरपि **ज्ञात्वा** । परमात्मगुणोत्सुकतया पुनः श्रवणे प्रवृत्ता इति भावः । **अनन्यभावेन** अन्यस्मिन्= देवान्तरेऽपि समतया विद्यमानभक्तिः अन्यभावः, सा न भवति, परमात्मनि सर्वोत्कृष्टा भक्तिः **अनन्यभावः** तेन, **भजन्ति** सेवन्ते **ते भक्ततमाः** ॥ ३३ ॥

एतादृशभक्तिसम्पत्तिः कैः साधनैः इति जिज्ञासायां भक्तिसाधनान्याह- **मद्भक्तेति** ।

**मल्लिङ्गमद्भक्तजनदर्शनस्पर्शनार्चनम् ।**
**परिचर्या स्तुतिप्रह्वगुणकर्मानुकीर्तनम् ॥ ३४ ॥**

**मत्कथाश्रवणे श्रद्धा मदनुध्यानमुद्धव ।**
**सर्वलाभोपहरणं दास्येनात्मनि वेदनम् ॥ ३५ ॥**

**मज्जन्मकर्मकथनं मम पर्वानुमोदनम् ।**
**गीतताण्डववादित्रगोष्ठीभिर्मद्गृहोत्सवः ॥ ३६ ॥**

**यात्रा बलिविधानं च सर्ववार्षिकपर्वसु ।**
**वैदिकी तान्त्रिकी दीक्षा मदीयव्रतधारणा ॥ ३७ ॥**

**ममार्चास्थापने श्रद्धा मम सद्मनि चोद्यमः ।**
**उद्यानोपवनाक्रीडपुरमन्दिरकर्मणि ॥ ३८ ॥**

**सम्मार्जनोपलेपाभ्यां सैकमण्डनवर्तनैः ।**
**गृहे शुश्रूषणं मह्यं दासवद् यदमायया ॥ ३९ ॥**

लिङ्गं= प्रतिमा । **परिचर्या** तुळसीपुष्पाद्याहरणम् । प्रह्वः= प्रह्वीभावः नम्रता । **श्रद्धा** शास्त्रार्थे फले च अस्तीति बुद्धिः । सर्वेषां= धनधान्यादीनां लाभः= प्राप्तिः तस्य उपहरणं= परमात्मनि समर्पणम् । आत्मनि स्वस्मिन्, **वेदनम्** अन्तर्यामितया सत्त्वज्ञानम् । पर्वसु= उत्सवेषु अनुमोदनं= सन्तोषकरणं बान्धवानां[1] गोष्ठीभिः= नृत्तगीतादिव्यापारैः इत्यर्थः । उत्सवः= उत्सवकरणम् । सर्ववार्षिकपर्वसु क्रियमाणोत्सवेषु **यात्रा=** दर्शनार्थं गमनं, बलिविधानं पूजाकरणं च । **वैदिकी दीक्षा** क्रतुदीक्षा, **तान्त्रिकदीक्षा** पञ्चरात्रादिप्राप्ता विष्णुदीक्षा । मदीयव्रतं= विष्णुपञ्चकादि, मम अर्चा= प्रतिमा, **तस्याः** स्थापने= प्रतिष्ठादौ **श्रद्धा** सफलबुद्धितया प्रतिमादिप्रतिष्ठा, पूजादिकरणम् इति भावः । **सद्मनि** देवालयकरणे **उद्यमः** उत्साहः । उद्यानं= पुरमध्यस्थं उपवनं= पुराद् बहिष्ठं आक्रीडा= आक्रीडस्थलानि, पुरस्य= प्राकारस्य मन्दिरं= मध्यगृहं एतेषां कर्मसु= करणेषु उद्यमः= उत्साहलक्षणः प्रयत्नः । सम्मार्जनं= तृणधूल्यादिनिवर्तनक्रिया । उपलेपः= गोमयानुलेपनं, ताभ्यां सह सेकः= अङ्कणे उदसेचनं वितानैः= तोरणादिभिः मण्डनम्= अलङ्कारः, एतयोः वर्तनैः, मण्डलवर्तनैः अलङ्कारार्थं तत्र तत्र मण्टपे विचित्रधातुभिः रङ्गवल्यादिभिः विचित्रमण्डलकणैः । वर्तनं प्रदक्षिणमिति वा । **मह्यं** मम प्रीत्यर्थं **गृहे** देवालये स्वगृहे वा **शुश्रूषणं** एवं सेवाकरणं **दासवत्** दास इव ‘ममेदं कर्तव्यम्’ इति बुद्ध्या इत्यर्थः ॥ ३९ ॥

**अमानित्वमडम्भित्वं कृतस्यापरिकीर्तनम् ।**
**अपि दीपावलोकं मे नोपयुञ्ज्यान्निवेदितम् ॥ ४० ॥**

---

[1] अत्र ‘वर्तनम्’ इत्यधिकं पठ्यते मूलपुस्तके । सम्पातायातं स्यात् ।

**यद्यदिष्टतमं लोके यच्चातिप्रियमात्मनः ।**

**तत्तन्निवेदयेन्मह्यं तदानन्त्याय कल्पते ॥ ४१ ॥**

**अडम्भित्वं** डम्बराहित्येन, वेतनं विना वा शुश्रूषणं कर्तव्यम् । **अमानित्वं** कार्येषु 'अहमेक एव करोमि'इति अभिमानाभावः । **अडम्भित्वं** जनवञ्चनार्थम् अप्रवृत्तिः । **कृतस्य** धर्मस्य । **निवेदितं** समर्पितम् । अवलोक्यते= प्रत्यक्षीक्रियते अर्थः येन सः अवलोकः दीपलक्षणप्रकाशकं **नोपयुञ्ज्यात्** स्वप्रयोजनाय श्रीहरिसमर्पितं नोपयुञ्ज्यात् । **इष्टतमं** अलङ्कारेषु भूषणेषु इष्टं किन्तु श्रेष्ठं वा कृत्वा **मह्यं** मत्प्रीत्यर्थं **निवेदयेत्** किन्तु फलं त्यजेदित्यर्थः । **अतिप्रियं** भोज्येषु प्रीतिविषयं **मह्यं** मत्प्रीत्यर्थं **निवेदयेत्** । स्वयं न स्वीकुर्यात् इत्यर्थः । **तत्** मह्यं निवेदितं **आनन्त्याय** नित्यसौख्यसिद्धये **कल्पते** समर्थं भवति ॥ ४१ ॥

पूर्वं प्रतिमायाम् अर्चनमुक्तम् । तथा अन्यत्रापि उत्तमाधिकारिभिः पूजा कर्तव्या इत्याह- **सूर्योऽग्निरिति ।**

**सूर्योऽग्निर्ब्राह्मणा गावो वैष्णवः खं मरुज्जलम् ।**

**भूरात्मा सर्वभूतानि भद्र पूजापदानि मे ॥ ४२ ॥**

**ब्राह्मणः** द्विजः **वैष्णवः** सच्छूद्रः, वैष्णवो ब्राह्मण इति वा ॥ ४२ ॥

पूजास्थानविशेषमुक्त्वा पूजासाधनविशेषमाह- **सूर्येति ।**

**सूर्ये तु विद्यया त्रय्या हविषाऽग्नौ यजेत माम् ।**

**आतिथ्येन तु विप्राग्र्ये गोष्ठे गा यवसादिना ॥ ४३ ॥**

**सम्मार्जनोपलेपाभ्यां सैकमण्डनवर्तनैः ।**

**गृहे शुश्रूषणं मह्यं दासवद् यदमायया ॥ ३९ ॥**

लिङ्गं= प्रतिमा । **परिचर्या** तुळसीपुष्पाद्याहरणम् । प्रह्वः= प्रह्वीभावः नम्रता । **श्रद्धा** शास्त्रार्थे फले च अस्तीति बुद्धिः । सर्वेषां= धनधान्यादीनां लाभः= प्राप्तिः तस्य उपहरणं= परमात्मनि समर्पणम् । आत्मनि स्वस्मिन्, **वेदनम्** अन्तर्यामितया सत्त्वज्ञानम् । पर्वसु= उत्सवेषु अनुमोदनं= सन्तोषकरणं बान्धवानां[1] गोष्ठीभिः= नृत्तगीतादिव्यापारैः इत्यर्थः । उत्सवः= उत्सवकरणम् । सर्ववार्षिकपर्वसु क्रियमाणोत्सवेषु **यात्रा=** दर्शनार्थं गमनं, बलिविधानं पूजाकरणं च । **वैदिकी दीक्षा** क्रतुदीक्षा, **तान्त्रिकदीक्षा** पञ्चरात्रादिप्राप्ता विष्णुदीक्षा । मदीयव्रतं= विष्णुपञ्चकादि, मम अर्चा= प्रतिमा, **तस्याः** स्थापने= प्रतिष्ठादौ **श्रद्धा** सफलबुद्धितया प्रतिमादिप्रतिष्ठा, पूजादिकरणम् इति भावः । **सद्मनि** देवालयकरणे **उद्यमः** उत्साहः । उद्यानं= पुरमध्यस्थं उपवनं= पुराद् बहिष्ठं आक्रीडा= आक्रीडस्थलानि, पुरस्य= प्राकारस्य मन्दिरं= मध्यगृहं एतेषां कर्मसु= करणेषु उद्यमः= उत्साहलक्षणः प्रयत्नः । सम्मार्जनं= तृणधूल्यादिनिवर्तनक्रिया । उपलेपः= गोमयानुलेपनं, ताभ्यां सह सेकः= अङ्कणे उदसेचनं वितानैः= तोरणादिभिः मण्डनम्= अलङ्कारः, एतयोः वर्तनैः, मण्डलवर्तनैः अलङ्कारार्थं तत्र तत्र मण्टपे विचित्रधातुभिः रङ्गवल्यादिभिः विचित्रमण्डलकणैः । वर्तनं प्रदक्षिणमिति वा । **मह्यं** मम प्रीत्यर्थं **गृहे** देवालये स्वगृहे वा **शुश्रूषणं** एवं सेवाकरणं **दासवत्** दास इव 'ममेदं कर्तव्यम्' इति बुद्ध्या इत्यर्थः ॥ ३९ ॥

**अमानित्वमडम्भित्वं कृतस्यापरिकीर्तनम् ।**

**अपि दीपावलोकं मे नोपयुञ्ज्यान्निवेदितम् ॥ ४० ॥**

---

[1] अत्र 'वर्तनम्' इत्यधिकं पठ्यते मूलपुस्तके । सम्पातायातं स्यात् ।

**यद्यदिष्टतमं लोके यच्चातिप्रियमात्मनः ।**
**तत्तन्निवेदयेन्मह्यं तदानन्त्याय कल्पते ॥ ४१ ॥**

**अदम्भित्वं** डम्बराहित्येन, वेतनं विना वा शुश्रूषणं कर्तव्यम् । **अमानित्वं** कार्येषु 'अहमेक एव करोमि' इति अभिमानाभावः । **अदम्भित्वं** जनवञ्चनार्थम् अप्रवृत्तिः । **कृतस्य** धर्मस्य । **निवेदितं** समर्पितम् । अवलोक्यते= प्रत्यक्षीक्रियते अर्थः येन सः अवलोकः दीपलक्षणप्रकाशकं **नोपयुञ्ज्यात्** स्वप्रयोजनाय श्रीहरिसमर्पितं नोपयुञ्ज्यात् । **इष्टतमं** अलङ्कारेषु भूषणेषु इष्टं किन्तु श्रेष्ठं वा कृत्वा **मह्यं** मत्प्रीत्यर्थं **निवेदयेत्** किन्तु फलं त्यजेदित्यर्थः । **अतिप्रियं** भोज्येषु प्रीतिविषयं **मह्यं** मत्प्रीत्यर्थं **निवेदयेत्** । स्वयं न स्वीकुर्यात् इत्यर्थः । **तत्** मह्यं निवेदितं **आनन्त्याय** नित्यसौख्यसिद्धये **कल्पते** समर्थं भवति ॥ ४१ ॥

पूर्वं प्रतिमायाम् अर्चनमुक्तम् । तथा अन्यत्रापि उत्तमाधिकारिभिः पूजा कर्तव्या इत्याह- **सूर्योऽग्निरिति ।**

**सूर्योऽग्निर्ब्राह्मणा गावो वैष्णवः खं मरुज्जलम् ।**
**भूरात्मा सर्वभूतानि भद्र पूजापदानि मे ॥ ४२ ॥**

**ब्राह्मणः** द्विजः **वैष्णवः** सच्छूद्रः, वैष्णवो ब्राह्मण इति वा ॥ ४२ ॥

पूजास्थानविशेषमुक्त्वा पूजासाधनविशेषमाह- **सूर्येति ।**

**सूर्ये तु विद्यया त्रय्या हविषाऽग्नौ यजेत माम् ।**
**आतिथ्येन तु विप्राग्र्ये गोष्ठे गा यवसादिना ॥ ४३ ॥**

**सूर्ये** स्थितं मां **त्रय्या** गायत्र्या पूजयेत् । **हविषा** सह **विप्राग्र्ये** विप्रातिथ्येन अर्घ्यपाद्यादिना, विप्रातिरिक्ते वैष्णवे मृष्टान्नाशनेन च । गोष्ठस्थिताः **गाः** ग्रासतृणादि-भोज्येन अर्चयेत् ॥ ४३ ॥

**वैष्णवे बन्धुसत्कृत्या हृदि खे ध्याननिष्ठया ।**
**वायौ मुख्यधिया तोये द्रव्यैस्तोयपुरस्कृतैः ॥ ४४ ॥**

**स्थण्डिले मन्त्रहृदयैर्भोगैरात्मानमात्मनि ।**
**क्षेत्रज्ञं सर्वभूतेषु समत्वेन यजेत माम् ॥ ४५ ॥**

**वैष्णवे** बन्धौ या सत्कृतिः तया । वैष्णवे शूद्रेऽपि स्थितं मां बन्धुमिव उपेक्षां विना पूजयेत् । प्रणामं विना इति भावः । **हृदि खे** हृदयाकाशे स्थितस्य अन्तर्यामिणः उक्तध्यानेन सह वासनावस्तुभिः पूजा कार्या । **वायौ** देवदेवतायां **मुख्यधिया** 'वायुः सर्वदेवोत्तमः' इति बुद्ध्या मां तत्र पूजयेत् । **तोये** स्थितं मां **तोयपुरस्कृतैः** द्रव्यैः चन्दनपुष्पादिभिरर्चयेत् । **स्थण्डिले** भुवि कृतमण्डले **मन्त्रहृदयैः** नमोऽन्तैः मन्त्रैः । **आत्मनि** स्वदेहस्थितं **आत्मानं** मां **भोगैः** आश्रमोचितान्नादिविषयैः अर्चयेत् । **सर्वभूतेषु** स्थितं **क्षेत्रज्ञं** अन्तर्यामिणं **यजेत । समत्वेन** स्थानप्राप्तगुणवैल-क्षण्यबुद्धिं विना सर्वगुणैः समत्वबुद्ध्या । उत्तमाधिकारिविवक्षया इयमुक्तिरिति भावः ॥ ४५ ॥

पूजार्थं परमात्मनः मूर्तिध्यानमाह- **धिष्ण्येष्विति ।**

**धिष्ण्येष्वेतेषु मद्रूपं शङ्खचक्रगदाम्बुजैः ।**
**युक्तं चतुर्भुजं शान्तं ध्यायन्नर्चेत् समाहितः ॥ ४६ ॥**

**इष्टापूर्तेन मामेवं यो यजेत समाहितः ।**

**लभते मयि सद्भक्तिं मत्स्मृतिं साधुसेवया ॥ ४७ ॥**

ब्राह्मणादिदेहेषु स्थितं तं **शान्तं** सुखानुभवादिरूपं ***ध्यायन् समाहितः*** *मनसा* विषयध्यानरहितः **इष्टापूर्तेन** यज्ञैः तटाकवनैः **यजेत** *सर्वं कर्म मयि समर्पितं* कुर्यादित्यर्थः । एवम् उक्तगुणवान् **यः** स **सद्भक्तिम्** उत्तमाम् अचलां भक्तिं **लभते** । **साधुसेवया** प्रायेण **मत्स्मृतिं** निरन्तरं स्मरणं च लभते ॥ ४७ ॥

अपवर्गोपायेषु ज्ञानभक्त्योः प्राधान्यमाह- **भक्तियोगेनेति** ।

**प्रायेण भक्तियोगेन साङ्ख्येन च विनोद्धव ।**

**नोपायो विद्यते सध्र्यक् प्रायणं हि सतामहम् ॥ ४८ ॥**

**साङ्ख्येन** स्वतन्त्रास्वतन्त्रतत्वज्ञानेन विना । **सध्र्यक्** सम्यक् उत्तम इत्यर्थः । **उपायः न विद्यते** । ज्ञानभक्ती उत्तमोपायौ इत्यर्थः । 'साधुसेवया' इत्युक्तम्, साधूनामाधिक्यं कुतः ? इत्यत आह- **प्रायणमिति** । **सताम् अहं** मुख्याश्रयः । तस्मात् सन्तः महागुणाः ज्ञानभक्तिप्रदाः इति भावः ॥ ४८ ॥

उत्तराध्यायप्रतिपाद्यं वक्ष्यामीति प्रतिजानीते- **अथैतदिति** ।

**अथैतत् परमं गुह्यं शृण्वते यदुनन्दन ।**

**सुगोप्यमपि वक्ष्यामि त्वं मे भृत्यः सुहृत् सखा ॥**

**॥ इति श्रीमद्भागवते एकादशस्कन्धे एकादशोऽध्यायः ॥**

भक्तेः मोक्षसाधनेषु मुख्यत्वं **सुगोप्यमपि ते वक्ष्यामि** । तत्र निमित्तमाह- **भृत्य** इति । **मे** मया **त्वं** भृत्यः ज्ञानादिसौख्यदानपोष्यः । **सुहृत्** मयि प्रीतिमान् । उद्धवेन

भक्तेषु क्रियमाणः ज्ञानदानादिः स्वस्य उपकार इति भावः । अतः सुगोप्यमपि वक्ष्यामीति भावः ॥

॥ इति श्रीयादवेन्द्रयतिविरचिते एकादशस्कन्धव्याख्याने एकादशोऽध्यायः ॥

# 12 | द्वादशोऽध्यायः

**श्रीभगवानुवाच-**

**न रोधयति मां योगो न साङ्ख्यं धर्म एव च ।**
**न स्वाध्यायस्तपस्त्यागो नेष्टापूर्तं न दक्षिणाः ॥ १ ॥**

**व्रतानि यज्ञाश्छन्दांसि तीर्थानि नियमा यमाः ।**
**यथाऽवरुन्धेन्मत्सङ्गः सर्वदुःखापहो हि माम् ॥ २ ॥**

'सुगोप्यमपि वक्ष्यामी'ति पूर्वाध्याये भक्त्याधिक्यवर्णनं प्रसञ्जितं विवृणोति **न रोधयतीति** । **योगः** वायुजयादिः । **साङ्ख्यं** तत्त्वज्ञानम् । **स्वाध्यायः** उपनिषदः । **छन्दांसि** वेदाः । **नियमाः** शौचप्रभृतयः । **यमाः** अहिंसासत्यादयः । मयि सङ्गः= गुणसम्प्रीतिः भक्तिरित्यर्थः । **यथा मां अवरुन्धेत्** प्रापयतीत्यर्थः । तथा एते यज्ञादयः न रोधयन्ति= न प्रापयन्ति ॥

भक्त्या प्राप्तपदान्याह- **दैतेया** इति ।

**मत्सङ्गेन तु दैतेया यातुधाना मृगाः खगाः ।**
**गन्धर्वाप्सरसो नागाः सिद्धाश्चारणगुह्यकाः ॥ ३ ॥**

**विद्याधरा मनुष्येषु वैश्याः शूद्राः स्त्रियोऽन्त्यजाः ।**
**रजस्तमःप्रकृतयस्तस्मिंस्तस्मिन् युगेऽनघ ॥ ४ ॥**

भक्तेषु क्रियमाणः ज्ञानदानादिः स्वस्य उपकार इति भावः । अतः सुगोप्यमपि वक्ष्यामीति भावः ॥

॥ इति श्रीयादवेन्द्रयतिविरचिते एकादशस्कन्धव्याख्याने एकादशोऽध्यायः ॥

# 12 | द्वादशोऽध्यायः

**श्रीभगवानुवाच-**

**न रोधयति मां योगो न साङ्ख्यं धर्म एव च ।**

**न स्वाध्यायस्तपस्त्यागो नेष्टापूर्तं न दक्षिणाः ॥ १ ॥**

**व्रतानि यज्ञाश्छन्दांसि तीर्थानि नियमा यमाः ।**

**यथाऽवरुन्धेन्मत्सङ्गः सर्वदुःखापहो हि माम् ॥ २ ॥**

'सुगोप्यमपि वक्ष्यामी'ति पूर्वाध्याये भक्त्याधिक्यवर्णनं प्रसञ्जितं विवृणोति **न रोधयतीति** । **योगः** वायुजयादिः । **साङ्ख्यं** तत्त्वज्ञानम् । **स्वाध्यायः** उपनिषदः । **छन्दांसि** वेदाः । **नियमाः** शौचप्रभृतयः । **यमाः** अहिंसासत्यादयः । मयि सङ्गः= गुणसम्प्रीतिः भक्तिरित्यर्थः । **यथा मां अवरुन्धेत्** प्रापयतीत्यर्थः । तथा एते यज्ञादयः न रोधयन्ति= न प्रापयन्ति ॥

भक्त्या प्राप्तपदान्याह- **दैतेया** इति ।

**मत्सङ्गेन तु दैतेया यातुधाना मृगाः खगाः ।**

**गन्धर्वाप्सरसो नागाः सिद्धाश्चारणगुह्यकाः ॥ ३ ॥**

**विद्याधरा मनुष्येषु वैश्याः शूद्राः स्त्रियोऽन्त्यजाः ।**

**रजस्तमःप्रकृतयस्तस्मिंस्तस्मिन् युगेऽनघ ॥ ४ ॥**

**बहवो मत्पदं प्राप्ता त्वाष्ट्रकावन्तिकादयः ।**
**वृषपर्वा बलिर्बाणो मयश्चाथ विभीषणः ॥ ५ ॥**

**सुग्रीवो हनुमान् ऋक्षो गजो गृध्रो वणिक्पथः ।**
**व्याधः कुब्जा व्रजे गोप्यो यज्ञपत्न्यस्तथाऽपरे ॥ ६ ॥**

**ते नाधीतश्रुतिगणा नोपासितमहत्तमाः ।**
**अव्रतातप्ततपसो मत्सङ्गान्मामुपागताः ॥ ७ ॥**

**दैतेयाः** ते सात्विकस्वभावाः न तु तामसस्वभावा इति भावः । **यातुधानाः** पुण्यजनाः । राजसतामसदेहयुक्ताः । **पदं** मल्लोकं त्वाष्ट्रकादयः आवान्तिकाः द्विजाः तत्तद्देशस्थाः । दैतेया यातुधाना मृगा इत्युक्तम् । तान् तत्तत्संज्ञया एकदेशेन दर्शयति- **वृषपर्वा बलिरिति । वणिक्** तुलाधारः । **पथो** नाम शूद्रः । **मत्सङ्गात्** मद्गुणसम्प्रीत्या भक्त्या इति यावत् ॥ ७ ॥

**केवलेन हि भावेन गोप्यो गावो नगा मृगाः ।**
**येऽन्ये मूढधियो नागाः सिद्धा मामापुरञ्जसा ॥ ८ ॥**

**यं न योगेन साङ्ख्येन दानव्रततपोऽध्वरैः ।**
**व्याख्यास्वाध्यायसंन्यासैः प्राप्नुयाद् यत्नवानपि ॥ ९ ॥**

**केवलेनेति । केवलेन** अध्ययनादिसहकारिवर्जितेन **भावेन** मुख्यभक्त्या **सिद्धा** इव **माम् आपुः** ॥ ८ ॥

**यं** मां योगादिभिः **व्याख्यास्वाध्यायादिभिश्च यत्नवान्** प्राप्तुम् उत्साहवान् **अपि न प्राप्नुयात्** तं तादृशं मां **गोप्यो गावः** एतदादयः **आपुः ।** स्वर्गादौ ज्ञानाधिक्यं सम्पाद्य इति भावः ॥ ९ ॥

गोपीनां भक्त्याधिक्यमाह- **रामेण सार्धमिति ।**

**रामेण सार्धं मधुरां प्रणीते श्वाफल्किना मय्यनुरक्तचित्ताः ।**
**विगाढभावेन न मे वियोगतीव्राधयोऽन्यद् ददृशुः सुखाय ताः ॥ १० ॥**

**यासां क्षपाः प्रेष्ठतमेन नीता मयैव वृन्दावनगोचरेण ।**
**क्षणार्धवत् ताः पुनरङ्ग तासां हीना मया कल्पसमा बभूवुः ॥ ११ ॥**

**ता नाविदन् मय्यनुषङ्गबद्धधियस्तदाऽऽत्मानमदस्तथेदम् ।**
**यथा समाधौ मुनयोऽब्धितोये नद्यः प्रविष्टा इव नामरूपे ॥ १२ ॥**

**श्वाफल्किना** अक्रूरेण **मयि मथुरां प्रणीते** प्रापिते सति विगाढः= दृढः भावः= आसक्तिः तेन, वियोगेन तीव्रः आधिः= मनोव्यथा यासां ताः तथाविधाः सत्यः मय्यत्रागतेऽपीति भावः । **अन्यत्** मद्व्यतिरिक्तं **सुखाय न ददृशुः ।** मय्यचञ्चलादरं तासामभूदिति भावः । **मया प्रेष्ठतमेन** सहितानां **यासां क्षपाः** रात्रयः **क्षणार्धवत् नीताः** गताः इत्यर्थः । याभिः नीता इति वा । तदा मथुरायामवस्थानसमये **मयि** अनुषङ्गेन= भक्त्या सह बद्धा= आसक्ता धीः यासान्ताः तादृश्यः सत्यः **अदः** व्यवहितम् **इदं** सन्निहितं वस्तु **आत्मानं** स्वदेहं च **नाविदन् ।** तासां मय्यसंप्रज्ञात-समाधिरभूदिति भावः । **मुनयः** समाधिसमये **यथा** देहं च न ददृशुः । **अब्धितोये प्रविष्टाः** नदीदेवता **नामरूपे** गङ्गागोदावर्यादिनामानि रूपाणि स्वकीयान्युदकानि देहान् वाऽपि **नाविदन् ।** वरुणसान्निध्यप्राप्तहर्षातिशयादिति भावः ॥ १२ ॥

**मत्कामा रमणं जारम् अस्वरूपविदोऽबलाः ।**

**ब्रह्म मां परमं प्रापुः शतशोऽथ सहस्रशः ॥ १३ ॥**

शतसहस्रशः **अबलाः** गोप्यः मां रमणं जारमिव प्रथमं मत्वा, मयि कामः अभिलाषो यासान्ताः सत्यः सङ्गात् मद्गुणसम्प्रीत्या **अस्वरूपविदः** स्वदेहादिज्ञानरहिताः मयि ध्यानातिशयादिति भावः । **मां** मदभिन्नं **परमं ब्रह्म प्रापुः ॥** १३ ॥

**तस्मात् त्वमुद्धवोत्सृज्य चोदनां प्रतिचोदनाम् ।**

**प्रवृत्तं च निवृत्तं च श्रोतव्यं श्रुतमेव च ॥ १४ ॥**

**मामेकमेव शरणमात्मानं सर्वदेहिनाम् ।**

**याहि सर्वात्मभावेन यस्मिन्नस्त्यकुतोभयम् ॥ १५ ॥**

**तस्मात्** भक्तेः मुख्योपायत्वात्, 'सर्वात्मा' इति भावेन, सर्वस्यापि आत्मा= सुखभोगस्य कर्ता इति माहात्म्यज्ञानसहितेन भावेन= भक्त्या, **चोदनां** यागादिविधिं **प्रतिचोदनां** निषेधशास्त्रं **प्रवृत्तं** प्राणाग्निहोत्रादि **निवृत्तं** नित्यकर्म **श्रोतव्यं** आगमेन ज्ञातव्यम् सर्वं मां प्रति **उत्सृज्य** समर्प्य 'सर्वं मदाज्ञारूपम्' इति निश्चित्य इत्यर्थः । 'अहमेव सर्वव्यापारकर्ता'इति भ्रान्तिं परित्यज्य, कर्माणि कुर्वन्निति भावः । **आत्मान** मन्तर्यामिणं **एकं** प्राप्येषु मुख्यं **यस्मिन्** मयि सक्तस्य, कुतोऽपि भयं नास्ति तं मां **शरणं याहि** ॥ १५ ॥

'वायौ मुख्यधिया' इत्युक्त्वा विशेषतो गोपिकाप्रशंसनात् एतत् शृण्वतः किं वायुरुत्तमः किं वा गोपिकाः उत्तमाः ? इति संशयः उदेतीत्याह- **संशय** इति ।

**उद्धव उवाच-**

**संशयः शृण्वतो वाचं तव योगेश्वरेश्वर ।**

**न निवर्तत आत्मस्थो येन भ्राम्यति मे मनः ॥ १६ ॥**

**वाचं** उभयविधां वायूत्कर्षप्रतिपादनरूपां **शृण्वतः । येन** संशयेन **मनः भ्राम्यति** तत्त्वनिश्चयरहितं भवति । **संशयः आत्मस्थः** मनसि वर्तमानः **न निवर्तते** वाक्यतात्पर्या-विज्ञानादिति भावः ॥ १६ ॥

सर्वगुणैः सर्वोत्तमस्तु वायुरेव । स एव च हिरण्यगर्भः । इति दर्शयितुमाह- **य एष जीव** इति ।

**श्रीभगवानुवाच-**

**य एष जीवो विवरप्रसूतिः प्राणेन घोषेण गुहां प्रविष्टः ।**

**मनोमयं सूक्ष्ममुपैति रूपं मात्रा स्वरो वर्ण इति स्थविष्ठम् ॥ १७ ॥**

गोपिका अपि मामापुः, किमु वाय्वाद्या इति दर्शयितुं गोपिकाप्रशंसनं च कृतमिति भावः । **यः** पूर्वं वायुः **एष जीवः** ब्रह्मा **विवरप्रसूतिः** देववरा इन्द्रादयः तेषां प्रसूतिः । **प्राणेन** सर्वप्रेरकपरमात्मना **घोषेण** वेदात्मिकया प्रकृत्या लक्ष्म्या सरस्वत्या च सह **गुहां** गरुडादीनां हृदयगुहां **प्रविष्टः । मनोमयं** गरुडशेषादिमनःप्रेरकं **सूक्ष्मं** प्रेरकरूपान्तरैः परस्परं प्रतिघातरहितम् अणुरूपम् **उपैति ।** मनोमात्रादिषु लक्ष्मीः विष्णुः वायुश्च युक्ता भवन्तीत्यर्थः । तस्मात् वायुः एव उत्तम इति भावः ॥ १७ ॥

ब्रह्मलक्ष्म्यपेक्षया विशेषतः परमात्मन एव व्यक्तिस्थानं वेद इत्याह- **यथाऽनल** इति ।

**यथाऽनलः खेऽनिलबन्धुरूष्मा बलेन दारुण्यधिमथ्यमानः ।**

**अणुः प्रजातो हविषा समिद्ध्यते तथैव मे व्यक्तिरियं हि वाणी ॥ १८ ॥**

अनिलः बन्धुरिव अभिवृद्धिकरः यस्य सः । **ऊष्मा** उष्णस्पर्शवान् **अनलः** वह्निः **दारुणि खे** अवकाशे सति **मथ्यमानः** अणुत्वेन **प्रजातः हविषा** आज्येन **समिध्यते** अभिवृद्धो भवति । **तथा इयं** वर्णस्वरसमुदायरूपा **वाणी** वेदादिवाक् मथिता सती उपक्रमादिभिः विमर्शविषया सती **मे व्यक्तिः** प्रमाकारणं च भवति इत्यर्थः । अथवा मथितः विमर्शविषयः सन् वेदादिषु स्थितः अहं संप्रदृश्ये, अतः सा व्यक्तिस्थानमित्यर्थः ॥ १८ ॥

प्रसङ्गात् इन्द्रियादीन्यपि परमात्मनः विशेषतः व्यक्तिस्थानानीत्याह- **एवं गतिरिति ।**

**एवं गतिः कर्म रतिर्विसर्गो घ्राणो रसो दृक् स्पर्शः श्रुतिश्च ।**

**सङ्कल्पविज्ञानमथाभिमानः सूत्रं रजः सत्वतमो विकारः ॥ १९ ॥**

इन्द्रियविषयाः इन्द्रियाणि च व्यक्तिस्थानानीति ज्ञापनाय गतिरित्याद्युक्तिः । **गतिः** पादः । **कर्म** पाणिः । **रतिः** लिङ्गम् । **विसर्गः** पायुः । गत्यादिविषयाश्च वागिन्द्रियञ्च । श्रुतिः श्रोत्रम् । रसः रसना । एतद्विषयाश्च मे अभिव्यक्तिस्थानानि । सङ्कल्पः तत्कारणं मनः । विज्ञानं= बुद्धिः । **अभिमानः** तत्कारणं अहङ्कारः । एते व्यक्तिस्थानानि । **सूत्रं** वायुः विशेषतः परमात्मनः व्यक्तिस्थानम् । रजोगुणः, सत्वसहितं **तमः** व्यक्तिस्थानम् । **विकारः** एतेषां विपरिणामाः सुवर्णकोशः अभिव्यक्तिस्थानम् ॥ १९ ॥

पुनः वायुं विरिञ्चं स्तौति- **अयं हीति ।**

**अयं हि जीवस्त्रिवृदब्जयोनिरव्यक्त एको जगतामथाऽद्यः ।**
**विश्लिष्टशक्तिर्बहुधैव भाति बीजानि योनिं प्रतिपद्य यद्वत् ॥ २० ॥**

**त्रिवृत्** अभिव्यक्तज्ञानानन्दबलरूपः । **अब्जयोनिः** कमलसम्भवः **जीवः** गरुड-शेषरुद्रादीनां प्राणधारणकर्ता सन् **अव्यक्तः** सूक्ष्मरूपः **जगतामाद्यः** प्राथमिकः सर्वकर्ता **एकः** सर्वजीवेषु उत्तमः । विशेषेण श्लिष्टाः शक्तयो यस्य सः अनपगत-सामर्थ्यः । एतादृशः सन् **बहुधा** विविधकार्येषु कारणेषु च विविधरूपैः स्थितः **भाति** ऋजुभिः प्रतीयते । **बीजानि** बहुवचनं आद्यर्थकम्, कलमादिबीजं **योनिं** भूविशेषं प्रतिपद्य उप्तमित्यर्थः । **यद्वत्** प्रथमम् एकाकारम् अनन्तरं बह्वाकारोपेतं भवति । तथा ब्रह्मापि बहुशक्तिभिः अहङ्कारादिषु बहुधा भवति ॥ २० ॥

**यस्मिन्निदं प्रोतमशेषमोतं पटे यथा तन्तुवितानसंस्था ।**
**य एष संसारतरुः पुराणः कर्मात्मकः पुष्पफले प्रसूते ॥ २१ ॥**

**इदम्** अशेषं जगत् विराड्ब्रह्मणि महदादिरूपे वा **प्रोतम्** अन्तर्लग्नम् **ओतम** उपरि च स्थितं संश्लिष्टं च । तन्तुभिर्विताना विस्तृता रचिता संस्था पटाद्याकारस्थितिः पटे आधारे यथा अस्ति तथा इत्यर्थः । परतन्त्रतया जगत्स्वरूपज्ञानाय जगद्वृक्षस्थिति-माह- **य एष संसारेति । यः** परतन्त्र **एषः** दुःखकारणं **कर्मात्मकः** कर्मणा आत्मा स्वरूपं यस्य, कर्मप्राप्तः । संसारः= चेतनस्य अचेतनेन अनुबन्धविशेषः, स एव तरुः= वृक्षः **पुष्पफले प्रसूते** जनयति । पुष्पमैहिकं फलमामुष्मिकमित्यर्थः ॥ २१ ॥

तरुसाम्यमाह- **द्वे अस्येति ।**

**द्वे अस्य बीजे शतमूलस्त्रिनाळः पञ्चस्कन्धः पञ्चरसप्रसूतिः ।**
**दशैकशाखो द्विसुपर्णनीडस्त्रिवल्कलो द्विफलः खं प्रविष्टः ॥ २२ ॥**

**अस्य** तरोः **द्वे** ब्रह्मा सरस्वती च **बीजे** आदिकारणे। कर्मात्मकत्वमुक्तं विवृणोति- **शतेति।** शतं= बहूनि बहुविधानि वा कर्माणि मूलं यस्य सः। **नाळः** वृक्षस्य अधोभागः, त्रयः= अहङ्कारबुद्धिमनोदेवताः नाळः मध्यभागो यस्य सः। पञ्चभूतानि तद्देवताः स्कन्धः यस्य सः। पञ्चानां रसानां प्रसूतिः यस्मिन् सः। शब्दादिविषयाः पञ्च रसा इत्यर्थः। दश इन्द्रियाणि एकं मनश्च शाखा यस्य सः। द्वयोः सुपर्णयोः प्रवृत्तिमार्गनिवृत्तिमार्गस्थयोः पक्षिणोः नीडम्= आवासस्थानं यस्मिन् सः। त्रयः गुणा वल्कलाः= त्वचः यस्य सः। **खं** आकाशं विष्णुं **प्रविष्टः** व्याप्तः। विष्णुना अभिवृद्धश्चेत्यर्थः। अयं वृक्षः पुष्पफले प्रसूते जनयति। पुष्पं ऐहिकं फलमित्यर्थः। फलं किम्? इत्यत आह- **द्विफल इति।** प्रवृत्तिफलं स्वर्गादि, निवृत्तिफलं नित्यसौख्यं, द्वे फले यस्य सः ॥ २२ ॥

**अदन्ति चैकं फलमस्य गृध्रा ग्रामेचरा एकमरण्यवासाः।**
**हंसा य एवं बहुरूपमिष्टं मायामयं वेद स वेद वेदम् ॥ २३ ॥**

एतादृशो यः संसारतरुः **अस्य एकं फलं** प्रवृत्तिकर्मजन्यं स्वर्गादिफलं ग्रामे= असुरजनसमुदाये चराः= असुरवशे देहे वर्तमानाः **गृध्राः** सदा विषयाकाङ्क्षायुक्ताः सन्तः **अदन्ति।** तदनुषक्तं दुःखमनुभवन्तीति भावः। **हंसाः** तिरस्कृतविषयाः परमात्मासक्ता इति भावः। **अरण्यवासाः** अरण्यं असुरजनव्यापाररहितो देहः, तत्र स्थिताः। अराख्यण्याख्यसुधासमुद्रयोः तीरवासा इति वा। **एकं** निवृत्तिकर्मसहितज्ञान-फलम् **अदन्ति** नित्यसौख्यं भुञ्जते। **यः** विषयविरागसम्पन्नः एवम् उक्तरीत्या **बहुरूपं** विचित्र विविधदेहलोकादिकार्यस्वरूपं, **इष्टं** विवेकिनामपवर्गापादनायानुकूलं देहादिजगत् **मायामयं** प्रकृतिजन्यं, मायामयं= ईश्वरेच्छाप्रधानकं तदधीनमिति **वेद**

जानाति **स** सकलतत्त्वज्ञानवान् **वेदं** ज्ञानरूपं परमात्मानं **वेद** अपरोक्षीकरोति, ध्यानादिक्रमेणेति भावः । **वेदं** वेदार्थं **वेद** इति वा । अथवा **यः वेदं वेद** वेदार्थज्ञान-सम्पन्नः **स एवम** उक्तरीत्या **मायामयम्** ईश्वरेच्छाधीनं वेद नान्य इति भावः ॥ २३ ॥

वेदार्थज्ञानसम्पादनं च लौकिकव्युत्पत्त्याद्युक्तगुणसम्पत्त्या न भवति । किन्तु गुरूपदेशेनेति ज्ञापयन् ज्ञानफलसम्पादनक्रममाह- **एवं गुरूपासनयेति** ।

**एवं गुरूपासनयैकभक्त्त्या विद्याकुठारेण शितेन धीरः ।**
**विवृश्च्य जीवाशयमप्रमत्तः सम्पद्य चात्मानमथ त्यजास्त्रम् ॥ २४ ॥**

**॥ इति श्रीमद्भागवते एकादशस्कन्धे द्वादशोऽध्यायः ॥**

**धीरः** विषयभोगपरित्यागे धैर्यसम्पन्नः समर्थः, **अप्रमत्तः** ज्ञानसम्पादने जागरूकः सन् **एवम्** 'अमान्यमत्सर' इत्याद्युक्तगुणसम्पत्त्या सह **गुरूपासनया** गुरुभिः प्राप्त-शास्त्राभ्यासेन प्राप्तेन **शितेन** तीक्ष्णेन अपरोक्षरूपेण इति भावः । विद्या परमात्मज्ञानम् कुठार इव तेन प्राप्तया **एकभक्त्त्या** तया प्राप्तेन प्रसादेनेति भावः । **जीवाशयं** जीवस्य= चेतनस्य आशयम्= अन्तःकरणम् अहङ्कारं तामसं सर्वदुःखकारणमिति भावः । **विवृश्च्य** छित्वा **आत्मानं** अन्तर्यामिणं **सम्पाद्य** अपरोक्षीकृत्य **अस्त्रं** सात्विकान्तःकरणजं ज्ञानाख्यकुठारं **अथ** विरजास्नानानन्तरमित्यर्थः । **त्यज** स्वरूपज्ञानस्यातिशयेन व्यक्त-त्वादिति भावः ॥

॥ इति श्रीयादवेन्द्रयतिविरचिते एकादशस्कन्धव्याख्याने द्वादशोऽध्यायः ॥

# 13 | त्रयोदशोऽध्यायः

ननु सात्विकस्वभावानां जीवानां सात्विकज्ञाननाशः कथम्? इत्याशङ्क्य, इदं सत्वं पृथगित्याह- **सत्वं रज** इति । अथवा भवेदेवं बन्धपरिहारः, प्रथमं कथं मुक्त्युपायानां सम्पत्तिः? इति जिज्ञासायामाह- **सत्वं रज** इति ।

**श्रीभगवानुवाच-**

**सत्वं रजस्तम इति गुणा बुद्धेर्न चात्मनः ।**
**सत्वेनान्यतमौ हन्यात् सत्वं सत्वेन चैव हि ॥ १ ॥**

**बुद्धेः** प्राकृतान्तःकरणस्य **गुणाः** उपचितभागाः **आत्मनः** चेतनस्य सत्वादिः स्वभावगुणः **न** । अतः **अन्यतमौ** रजस्तमोभागौ **हन्यात्** त्यजेत् । **सत्वेन** शुद्धेन ज्ञानेन **सत्वं** रजस्तमोभ्यां मिश्रं स्वभागं च हन्यात् ॥ १ ॥

मुक्त्युपायानाम् अतिशयप्राप्तिक्रममाह- **सत्वादिति** ।

**सत्वाद् धर्मो भवेच्छुद्धात् पुंसो मद्भक्तिलक्षणः ।**
**सात्विकोपात्तया ज्ञानं ततो धर्मः प्रवर्तते ॥ २ ॥**

**शुद्धात्** विषयरागवासनारहितात् **सत्वात्** ज्ञानादित्यर्थः । **भक्तिलक्षणः धर्मः भवेत्** । सात्विकज्ञानेन **उपात्तया** प्राप्तया भक्त्या **ज्ञानं** पुनः अधिकं **प्रवर्तते** । ततः ज्ञानाद् **धर्मः** निवृत्तधर्मः **प्रवर्तते** । भक्तस्य फलापेक्षाऽभावादिति भावः । धर्मात् पुनः सत्वोद्रेकः, सत्वोद्रिक्तया बुद्ध्या पुनः सत्वोद्रेकात्पुनः धर्मोद्रेक इति परस्परम् अतिशयार्थं साध्यसाधनभावः । अतो नान्योन्याश्रायः ॥ २ ॥

**धर्मो रजस्तमो हन्यात् सत्ववृत्तिरनुत्तमा ।**
**आशु नश्यति तन्मूलो ह्यधर्म उभये हते ॥ ३ ॥**

**धर्मः** निवृत्तधर्मः **रजः तमश्च हन्यात्** तेन सत्वोद्रेक इति भावः । ततः सत्वोद्रेकेण **अनुत्तमा** उद्रिक्ता **सत्ववृत्तिः** ज्ञानं भवति । तया **उभये** रजस्तमोलक्षणे द्वये **हते** सति स्थूलः रजस्तमप्राप्तः **अधर्मः नश्यति** । अधर्मनाशे सति पुनः सत्वोद्रेकात् पुनः भक्तिलक्षणधर्मोद्रेक इति भावः ॥ ३ ॥

सत्वादिगुणोद्रेके कारणान्याह- **आगम** इति ।

**आगमो यजनं देशः कालः कर्म च जन्म च ।**
**ध्यानं मन्त्रोऽथ संस्कारो नवैते गुणहेतवः ॥ ४ ॥**

एते आगमादयः सात्विकादिभेदेन त्रिविधाः **गुणहेतवः** सत्वगुणप्रापकाः । सात्विकागमाः सत्वगुणप्रापकाः इत्यादि । **यजनं** फलकामरहितयागः । **देशः** विविक्तं पुण्यनदीतीरम् । **कालः** द्वादश्यादिः । **कर्म** नित्यकर्म, **जन्म** द्विजन्म, **ध्यानं** श्रीहरि-कल्याणमूर्तिध्यानं, **मन्त्रः** अष्टाक्षरादिः, **संस्कारः** उपनयनादिः, एतदादिषु सात्विकाः सत्वगुणहेतवः, राजसाश्चेत् रजोगुणहेतवः, तामसाश्चेत् तमोगुणसम्पादका इत्यर्थः ॥ ४ ॥

एवमादिषु सात्विकादिभेदः कथं ज्ञेयः ? इति जिज्ञासायां वृद्धानामुपदेशादिना ज्ञातव्य इत्याह- **तत्र सात्विकमिति** ।

**तत्र सात्विकमेवैषां यद्यद् वृद्धाः प्रचक्षते ।**
**निन्दन्ति तामसं तत्तद् राजसं तदुपेक्षितम् ॥ ५ ॥**

**सात्विकान्येव सेवेत पुमान् सत्वविवृद्धये ।**
**ततो धर्मस्ततो ज्ञानं वाचः स्मृतिरपोहनम् ॥ ६ ॥**

**वृद्धाः** ज्ञानवृद्धाः **एषाम्** आगमयजनादीनां मध्ये **यत्** आगमादिकं **सात्विकमिति प्रचक्षते** तदागमादिकं सात्विकमिति ज्ञेयम् । वृद्धा यदागमादिकं **निन्दन्ति तत्तामसं** ज्ञेयम् । यदागमादिकम् **उपेक्षितं** परित्यजन्तीत्यर्थः तदागमादिकं **राजसं** ज्ञेयम् ॥ अतः **सात्विकान्येव सेवेत** । सात्विकागमादिसेवया **धर्मः** निवृत्तिधर्मः प्रवर्तते । **ततः** सत्वात् **वाचः** श्रीहरिवाचः प्रवर्तन्ते । **स्मृतिः** श्रीहरौ स्वातन्त्र्यस्मृतिः ततः **अपोहनं** स्वस्मिन् अहङ्कारभ्रमनिवृत्तिर्भवति ॥ ६ ॥

'अस्त्रं त्यज' इत्युक्तम् । अविद्याया अन्तःकरणोपादानकत्वात् अन्तःकरणस्य नित्यत्वेन अविद्यास्त्रस्य पुनःपुनरुन्मेषात् कथं अस्त्रपरित्यागः ? इत्यत आह- **वेणु-सङ्घर्षज** इति ।

**वेणुसङ्घर्षजो वह्निर्दग्ध्वा शाम्यति तद्वनम् ।**
**एवं गुणव्यत्ययजो वेदः शाम्यति तद् यथा ॥ ७ ॥**

**वह्निः यथा** शाम्यति इन्धनरूपकारणाभावात् **एवं वेदः** वृत्तिज्ञानं तेन सत्वं **दग्ध्वा शाम्यति** । स्वरूपज्ञानेन मुक्तौ पुनः नोत्पद्यत इति भावः । कुतः ? इति जिज्ञासायामाह- **गुणव्यत्ययज** इति । गुणस्य= सत्त्वस्य व्यत्ययेन= नित्यान्तःकरणे उपचयेन, सूक्ष्ममनसः सत्वेऽपि उपचितस्य ज्ञानजनकत्वात् । वेदेन सत्वनाशे सति उपचितमनसोऽपि नाशात् न पुनः वृत्तिज्ञानोत्पत्तिः ॥ ७ ॥

**उद्धव उवाच-**

**विदन्ति मर्त्याः प्रायेण विषयान् पदमापदाम् ।**

**अथापि भुञ्जते कृष्ण तत् कथं श्वखराजवत् ॥ ८ ॥**

**विषयान् आपदां** दुःखानां **पदं विदन्ति** जानन्ति । **अथापि** विषये अनिष्टत्वज्ञाने सत्यपि श्ववत् अपवित्रमपि, खरवत् नानाविषयान् भुञ्जते । **तत् कथं** घटेत इति प्रश्नार्थः ॥ ८ ॥

विषयरागेण प्रतिबद्धविषयेषु दोषज्ञानात् विषयेभ्यो न निवर्तते, तदा[1] अहमेव विषयादिकर्तेति भ्रमादि भवति । तदा विषये प्रवृत्तिरित्याह- **अहमिति ।**

**श्रीभगवानुवाच-**

**अहमित्यन्यथाबुद्धिः प्रमत्तस्य यदा हृदि ।**

**उत्सर्पति रजो घोरं ततो वैकारिकं मनः ॥ ९ ॥**

**प्रमत्तस्य** धनधान्यसम्पत्त्या तत्त्वज्ञानराहित्येन च इति भावः । 'अहम्' इति बुद्धेः मोक्षानन्तरमपि सद्भावात् कथं तस्य हेयत्वम्? इत्यत आह- **अन्यथेति ।** अहङ्कारजन्यभ्रमरूपा बुद्धिरित्यर्थः । अतः भ्रमात् **रजः उत्सर्पति ।** रजोभागस्य उद्रेको भवति । **ततः** रजस्सकाशात् **वैकारिकं** वैकारिकाहङ्कारजन्यं वैकारिकदेवता-नियम्यं वा विविधविकारोपेतम् इति वा **मनः** भवति ॥ ९ ॥

**रजोयुक्तस्य मनसः सङ्कल्पः सविकल्पकः ।**

**ततः कामो गुणध्यानाद् दुःसहः स्याद् हि दुर्मतेः ॥ १० ॥**

---

[1] अयमत्र सुधीन्द्रतीर्थीयं व्याख्यानम् - 'विषयरागे विषयरागेण प्रतिबद्धं विषयेषु दोषज्ञानं विषयेभ्यो न निवर्तयति, यदा ....' इत्यादि ।

**मनसः** सकाशात् **सङ्कल्पः** विकल्पेन सहितः, 'न करोमि' इति बुद्धिः विकल्पः, करोमीति बुद्धिः सङ्कल्पः । **ततः** सङ्कल्पविकल्पाख्येन = विहितमपि न करोमीति, निषिद्धमपि करोमीति, निश्चयेन **गुणद्ध्यानात्** निरन्तरं विषयानुसन्धानाच्च, विषयाणां गुणः सुखं तत्कारणत्वानुसन्धानाच्च **कामो** भवति । **दुर्मतेः** अल्पबुद्धेः पुरुषस्य सः कामः **दुस्सहः** परिहर्तुमशक्यः स्यात् ॥ १० ॥

**करोति कामवशगः कर्माण्यविजितेन्द्रियः ।**
**दुःखोदर्काणि संपश्यन् रजोवेगेन मोहितः ॥ ११ ॥**

**कर्माणि** पापप्रधानानि **करोति** अविजितेन्द्रियत्वात् इति भावः । आयासरहिते कर्मणि प्रवृत्तावपि बह्वायाससहिते कर्मणि कथं प्रवृत्तिः ? इत्याशङ्क्याह- **रजोवेगेनेति** । **दुःखोदर्काणि** महादुःखसम्पादकानि इति पश्यन्नपि रजोवेगेन= ज्ञानशक्तिप्रतिबन्धकेन । मोहितः= बह्वायासबुद्धिसहितः[1] विषयान् भुङ्क्ते इति भावः ॥ ११ ॥

प्रमत्तस्य तत्वज्ञानरहितस्य व्यापारमुक्त्वा विदुषः व्यापारमाह- **विद्वानिति** ।

**रजस्तमोभ्यां यदपि विद्वान् विक्षिप्तधीः पुनः ।**
**अतन्द्रितो मनो युञ्जन् दोषदृष्टिर्न सज्जते ॥ १२ ॥**

**विद्वान्** विधिनिषेधशास्त्रार्थज्ञानवान् **दोषदृष्टिः** विषयेषु महादुःखानुबन्धित्वज्ञानवान् पुरुषः **यदपि** यद्यपि मत्तः **रजस्तमोभ्याम्** आक्षिप्तः तथापि परमात्मनि **मनो युञ्जन्** श्रवणाद्यभ्यासादिति भावः । यदा **विक्षिप्तधीः** ध्यानविक्षेपवान् तदा **अतन्द्रितः** अलसता- रहितः पुनः **मनो युञ्जन्** परमात्माधीनत्वज्ञानवान् **न सज्जते** विषयासक्तिरहितो भवति ॥ १२ ॥

---

[1] 'बह्वासक्तः' इति पाठः सम्भाव्यते ।

विषयविरागातिशयपुरस्सरं ध्यानोत्कर्षसम्पादनक्रममाह- **अप्रमत्त** इति ।

**अप्रमत्तो हि युञ्जीत मनो मय्यर्पयन् शनैः ।**
**अनिर्विण्णो यथाकालं जितश्वासो जितासनः ॥ १३ ॥**

जितश्वासादिः **शनैः यथाकालं मयि मनः अर्पयन् अप्रमत्तः** विषयभोगमदरहितश्च स्यात् । ततः **युञ्जीत** दृढध्यानवान् भवति[1] । प्रारब्धकर्मणा ध्यानकार्यापरोक्षविळम्बे सति ध्यानपरित्यागो न कार्य इत्याशयेनाह- **अनिर्विण्ण** इति । **अनिर्विण्णः** दुःखात् परित्यागेच्छावान् न भवेत्, अपवर्गसाधने आसक्तिसम्पन्नः स्यात् ॥ १३ ॥

ध्यानविशेषः मम सम्मतो योग इत्याह- **एतावान्** इति ।

**एतावान् योग आदिष्टो मच्छिष्यैः सनकादिभिः ।**
**सर्वतो मन आकृष्य मय्यद्धाऽऽविशते यथा ॥ १४ ॥**

**मच्छिष्यैः सनकादिभिः** पृष्टे समये[2] **एतावान्** अयं **योगः** इति **आदिष्टः** । तेभ्यः उपदिष्टः सः कः ? इति जिज्ञासायामाह- **सर्वत इति** । **सर्वतः** देहतदनुबन्धिद्रविण-बहुमानादितः **मनः आकृष्य** स्थितस्य पुरुषस्य मनः **अद्धा** मां प्रत्यक्षीकर्तुं यथायोग्यं सत् रजस्तमोभागरहितमित्यर्थः । **मयि** विशते मय्यासक्तं भवतीत्यर्थः । मनसः मय्येवासक्तिः योग इत्यर्थः । योग एतावान् इति सनकादिभिरादिष्ट इति वा ॥ १४ ॥

श्रीकृष्ण ! तव कस्मिन् अवतारे सनकादयः शिष्या इति पृच्छति- **यदा त्वमिति** ।

---

[1] 'भवेत्' इति स्यादिति भाति । [2] 'सति' इति स्यादिति भाति ।

**उद्धव उवाच-**

**यदा त्वं सनकादिभ्यो येन रूपेण केशव ।**

**योगमादिष्टवानेतद् रूपमिच्छामि वेदितुम् ॥ १५ ॥**

कृष्णावतारे सनकादिभ्य उपदेशम् अहं न जानामि इति भावः । **येन रूपेण** केन अवतारेण **योगमादिष्टवान्** । तं **योगं** ज्ञानलक्षणोपायविशेषं **एतद्** उपदेशकर्तृरूपं वा **वेदितुमिच्छामि** ॥ १५ ॥

सनकादिभ्यः उपदेशे सङ्गतिमाह- **पुत्रा** इति ।

**श्रीभगवानुवाच-**

**पुत्रा हिरण्यगर्भस्य मानसाः सनकादयः ।**

**पप्रच्छुः पितरं सूक्ष्मां योगस्यैकान्तिकीं गतिम् ॥ १६ ॥**

**मानसाः** मनोमात्रेण सृष्टाः **पुत्राः सूक्ष्मां** स्थूलमतिभिः ज्ञातुमशक्याम् **एकान्तिकीं** एकान्तभक्तिप्राप्तां फलेषु मुख्यामिति वा । **योगस्य** समाधेः स्वतःप्रवृत्तध्यानस्य । गम्यते प्राप्यते अनेन इति गतिम् । गतिः पुष्कळसाधनं तां पप्रच्छुः ॥ १६ ॥

प्रश्नं दर्शयति- **गुणेष्विति** ।

**सनकादय ऊचुः**

**गुणेष्वाविशते चेतो गुणाश्चेतसि च प्रभो ।**

**कथमन्योन्यसन्त्यागो मुमुक्षोः संतितीर्षोः ॥ १७ ॥**

**चेतः गुणेषु** रसादिविषयेषु **आविशते** स्वतः शीघ्रं प्रवर्तते । **गुणाः** भोज्यादि-विषयाः **चेतसि** आविशन्ते अविळम्बेन विषया भवन्ति । **मुमुक्षोः** मनसः विषयसम्बन्ध-

मोचनमिच्छोः **सन्तितीर्षोः** सम्यक् भगवद्द्वेषादिकं तर्तुम् इच्छोः, बन्धसमुदायं तर्तुमिच्छोरिति वा । पुरुषस्य **अन्योन्यसन्त्यागः** मनोविषययोः परस्परसम्बन्धराहित्यं कथं स्यात्? अन्यथा रागद्वेषादिदुःखसङ्गपरिहारो न स्यादिति भावः ॥ १७ ॥

**श्रीभगवानुवाच-**

**एवं पृष्टो महादेवः स्वयम्भूर्भूतभावनः ।**

**ध्यायमानः प्रश्नबीजं नाभ्यपद्यत कर्मधीः ॥ १८ ॥**

**महादेवः** देवोत्तमः **स्वयम्भूः** ब्रह्मा **भूतभावनः** सर्वसृष्टिकर्ता सर्वज्ञोऽपीति भावः । **प्रश्नबीजं** (प्रश्नः) प्रतिवचनं (बीजं) कारणं यस्य तं परिहारं **नाभ्यपद्यत** नानुसमधत्त । आलोचनं न कृतवान् इत्यर्थः । किन्तु **कर्मधीः** गुणानां चेतसश्च सन्बन्धे कर्म कारणमिति मन्वानः । कर्तृत्वात् मातृत्वाच्च कर्म परमात्मा तस्मिन् धीर्यस्य सः । परमात्मानं **ध्यायमानः** आसीत् । ईश्वरोऽस्य प्रश्नस्य परिहारकर्ता । अस्माभिः परिहारे न प्रयतितव्यम् इति बुद्ध्या स्थितवानिति भावः ॥ १८ ॥

**स मामचिन्तयद् देवः प्रश्नपारविनिश्चयम् ।**

**तस्याहं हंसरूपेण समीपमगमं तदा ॥ १९ ॥**

**सः** ब्रह्मा प्रश्नस्य पारः कोटिः तस्य विनिश्चयो यस्मात् तं परिहारमुद्दिश्य **माम् अचिन्तयत्** । **हंसरूपेण** हंसावतारेण ॥ १९ ॥

**दृष्ट्वा मां त उपाव्रज्य कृत्वा पादाभिवन्दनम् ।**

**ब्रह्माणमग्रतः कृत्वा पप्रच्छुः को भवानिति ॥ २० ॥**

**इत्यहं मुनिभिः पृष्टस्तत्वजिज्ञासुभिस्तदा ।**
**यदवोचमहं तेभ्यस्तदुद्धव निबोध मे ॥ २१ ॥**

सनकादयः यत् **'को भवान्?'** इति प्रश्नविघटकं अवोचन्, **तद्** वचः मत्सकाशात् **निबोध ॥** २१ ॥

प्रश्नबन्धनप्रकारं दर्शयति- **वस्तुन** इति ।

**वस्तुनो यद्यनानात्वम् आत्मनः प्रश्न ईदृशः ।**
**कथं घटेत वो विप्रा वक्तुं वाऽनेक आश्रयः ॥ २२ ॥**

लोके प्रश्नः निर्णयकारणेऽसति अनेककोट्यवलम्बनेन प्रवर्तते । अयं प्रश्नः न तथा इत्याह- **यद्यनानात्वमिति । आत्मनः वस्तुनः अनानात्वम्** एकत्वम् **यदि** अङ्गीकृतं भवद्भिः तदा **ईदृशः** ब्रह्माभिवन्दनलक्षणनिर्णयकारणे सत्यपि **प्रश्नः कथं घटेत?** प्रश्नः ईदृशो वा एककोटि को वा कथं घटेत परिहारो **वा वक्तुं** कथं घटेत । ननु अनेकाश्रयोऽयं प्रश्नः, ब्रह्मवन्द्यानाम् अनेकेषां सम्भवादिति अपक्वबुद्धेः शङ्कामाशङ्क्याह- **अनेक आश्रयश्चेदिति ॥** २२ ॥

**पञ्चात्मकेषु भूतेषु समानेषु च वस्तुतः ।**
**को भवानिति वः प्रश्नो वाचारम्भो निरर्थकः ॥ २३ ॥**

**पञ्चात्मकेषु** देवमनुष्यपितृगन्धर्वासुररूपपञ्चविधेषु सर्वेषु प्राणिषु वस्तुस्वभावात् हिरण्यगर्भावरत्वात् निमित्तात् **समानेषु** हिरण्यगर्भवन्द्यत्वाभावेन **समानेषु** सत्सु । हिरण्यगर्भवन्द्यमानानाम् अनेकेषामभावात् । **'को भवान्'** इति **वः** सनकादीनां **प्रश्नः** वाचयैव आरम्भः उत्पत्तिर्यस्य सः । कुतः ? इत्यत आह- **निरर्थकः** कोटिद्वयादि-

लक्षणविषयरहितः, प्रयोजनरहितश्च । सर्वज्ञत्वेन सम्मतानां भवादृशानां एतत् प्रश्न-वचनमयुक्तमिति भावः ॥ २३ ॥

लोकविलक्षणे मयि लोकसाधारण्यं परिकल्प्य संशयो न कार्य इत्याह- **मनसेति** ।

**मनसा वचसा दृष्ट्या गृह्यतेऽन्यैरपीन्द्रियैः ।**
**अहमेव न मत्तोऽन्यदिति बुद्ध्यध्वमञ्जसा ॥ २४ ॥**

यत् **वचसा** आगमेन, मनःप्रभृतिभिः **इन्द्रियैः दृष्ट्या** व्याप्तिदर्शनेन साक्षिणा वा मत्तोऽन्यत्वेन व्यक्तत्वादिनैव सह **गृह्यते** तत् प्राकृतं प्रकृतिर्वा **अहं न** भवाम्येव । स्वतन्त्रे मयि केनापि धर्मेण लोकसादृश्यं नास्तीत्यर्थः । इति जानन्तोऽपि भवन्तः पुनः लोकरीत्या संशयं कुरुथ । अत इति अमुमर्थं सर्वगुणैर्लोकविलक्षणत्वं मयि **अञ्जसा बुद्ध्यध्वं** ब्रह्मादिवन्दिते मयि एतादृशज्ञानदार्ढ्ये सति संशयकारणलोकसाधा-रणत्वज्ञानं न प्रवर्तत इति भावः ॥ २४ ॥

ब्रह्माणं प्रति कृतं सनकादिप्रश्नं परिहरति- **गुणेष्वाविशत** इति ।

**गुणेष्वाविशते चेतो गुणाश्चेतसि वः प्रजाः ।**
**जीवस्य देह उभयं गुणाश्चेतो मदात्मनः ॥ २५ ॥**

हे **प्रजाः** ब्रह्मपुत्राः यद्यपि गुणचेतसोः सम्बन्धः दुष्परिहरः । अथापि **जीवस्य मदात्मनः** सतः **चेतः गुणाश्च** परमात्माधीना इति मयि ध्यानवतः[1] **उभयं** गुणाः चेतश्चेत्युभयं **देहे** दग्धमभवत् । ध्यानप्राप्तेश्वरानुग्रहेणेति भावः । एवम् ईश्वरध्यानात् मनसः रजोभागादिनाशे सति विषयवासना नश्यन्तीति भावः ॥ २५ ॥

---

[1] अत्र 'विराग इव इति भावः' इत्यधिकं पठ्यते मूलपुस्तके, सम्पातायातं स्यात् ।

विरक्तिश्च विषयवासनानाशे रजोभागनाशे च सहकारिणीत्याह- **गुणेष्वाविशत** इति ।

**गुणेषु वा विशेच्चित्तम् अभीक्ष्णं गुणसेवया ।**
**गुणाश्च चित्तप्रभवा मद्रूप उभयं त्यजेत् ॥ २६ ॥**

**अभीक्ष्णं** पुनःपुनः **गुणसेवया** विषयभोगेन । **गुणाः** चित्ते वासनानां प्रभवः येषान्ते **चित्तप्रभवा** भवन्ति । अतो गुणसेवा न कर्तव्येत्यर्थः । सर्वविषयाणां च सर्वतत्त्वनियामकेश्वरत्वज्ञानं[1] च मुमुक्षोः अवश्यकमित्याह- **मद्रूप** इति । **मद्रूपे** इन्द्रियविषयप्रेरकेषु मम रूपेषु **उभयं** गुणाः चेतश्चेत्युभयं **त्यजेत्,** मदधीनतया ध्यायेत् । स एवं ध्यानकर्ता **उभयं** मनोविषयसम्बन्धप्रयोजकं पुण्यं पापं च त्यजेत् । उभयं गुणमनसोः सम्बन्धलक्षणं बन्धं त्यजेत् । मुक्तो भवतीत्यर्थः ॥ २६ ॥

ननु जाग्रदादिषु अनुभूतविषयसुखादीनाम् अन्तःकरणधर्मत्वात्, अन्तःकरणस्य च आत्मनः अभेदात् कथं उभयत्यागः ? इत्यत आह- **जाग्रत् स्वप्नेति ।**

**जाग्रत् स्वप्नः सुषुप्तिश्च गुणतो बुद्धिवृत्तयः ।**
**तासां विलक्षणो जीवः साक्षित्वेन विनिश्चितः ॥ २७ ॥**

जाग्रत्स्वप्नसुषुप्तिषु जायमानाः बुद्धिगताः = प्राकृतान्तःकरणगताः वृत्तयः= सुखादिवृत्तयः **गुणतः** निद्रादिविषयेभ्यः प्राप्ताः साक्षित्वेन निश्चिताः । **जीवस्तु तासां** बुद्धीनां प्राकृतान्तःकरणप्रभेदानां सकाशात् **विलक्षणः ।** अतः प्राकृतान्तःकरणनाशो युक्त इति भावः । अथवा अवस्थात्रयप्रेरकत्वं परमात्मनो वक्तुं अवस्थात्रयमाह-

[1] 'सर्वचित्तस्य च नियामकेश्वरतत्त्वं ज्ञानं च' इति पाठः सम्भाव्यते ।

**जाग्रदिति** । बुद्धया= प्रकृत्या वृत्तिर्वर्तनं यासान्ताः **बुद्धिवृत्तयः** । रजोगुणादिप्राप्ताः जाग्रदाद्यवस्था इति वा ॥ २७ ॥

ननु भूतबन्धस्य मूलकारणस्य सत्वात् कथं मनोनाशः ? इत्यत आह- **यर्हीति** ।

**यर्हि संसृतिबन्धोऽयम् आत्मनो गुणवृत्तितः ।**
**मयि तुर्ये स्थितो जह्यात् त्यागस्तु गुणचेतसाम् ॥ २८ ॥**

**यर्हि** यदा **अयं संसृतिबन्धः** भूतबन्धः तद्युक्तः कर्मबन्धः **आत्मनः** मनसः जीवस्य वा गुणानां वृत्तिः= विषयानुसन्धानं तस्माद् **गुणवृत्तितः** भवति । **गुणवृत्तितः** रजोगुणव्यापाराद् भवति इति वा । तदा **तुर्ये** गुणत्रयव्यापाररहिते **मयि स्थितः** समाधिमान् **जह्यात्** कर्मबन्धभूतबन्धादिकं तिरस्कुर्यात् । तदानीम् अपरोक्षेणेति भावः । ततः गुणानां चेतसां= चित्तवृत्तिप्रभेदानां **त्यागस्तु** विशेषतः स्यात् ॥ २८ ॥

ननु कर्मबन्धनाशेऽपि पुनः कर्मप्रापकः अहङ्कारः, अहङ्कारनाशेऽपि पुनः कर्मणा अहङ्कारः स्यात् । एवं बन्धपरम्परायाः कथं निवृत्तिः ? इति जिज्ञासायामाह- **अहङ्कारकृतमिति** ।

**अहङ्कारकृतं बन्धमात्मनोऽर्थविपर्ययम् ।**
**विद्वान् निर्विद्य संसारचिन्तां तुर्ये स्थितस्त्यजेत् ॥ २९ ॥**

**आत्मनः** जीवस्य **अर्थविपर्ययम्** अर्थस्य= स्वरूपसुखस्य विपर्ययः= तिरोधानं येन तम् **अहङ्कारकृतं** अहङ्कारममकारभ्रमेण प्राप्तं **बन्धं** कर्मबन्धं **विद्वान्** एवं जानन् संसारेण देहबन्धेन प्राप्तां चिन्तां= विषयचिन्तां **विद्वान्** 'दुःखकारणं विषयचिन्ता'

इति जानन् **निर्विद्य** विषयेषु दृढविरक्तः सन् **तुर्ये** परमात्मनि **स्थितः** ध्यानादौ सक्तः विद्वान् सर्वस्वामिनं स्वतन्त्रं ह्यपरोक्षतो जानन् **त्यजेत्** अहङ्कारसहितं कर्मबन्धं त्यजेत् । प्रामादिकस्य उत्तरकालीनस्य विकर्मणः संश्लेषमपि सम्पादयेत् इति भावः ॥ २९ ॥

एवं परमात्मविदुषः फलमुक्त्वा अज्ञस्य निन्दार्थमाह- **यावदिति** ।

**यावन्नानार्थधीः पुंसो न निवर्तेत युक्तिभिः ।**
**जाग्रत्यपि स्वपन्नज्ञः स्वप्ने जागरणं यथा ॥ ३० ॥**

**स्वप्ने जागरणं यथा** आरोप्यते तथा यः **जाग्रत्यपि** जाग्रदवस्थायामपि । ज्ञानप्रकाशे प्रसक्ते सतीत्यर्थः । **स्वपन्** इव ज्ञानमसम्पाद्य वर्तते तस्य पुंसः **नानार्थधीः** परतन्त्रे परतन्त्रभेदबुद्धिः स्वातन्त्र्यारोपः **युक्तिभिः** 'यदि स्वतन्त्रः स्यात् तदा अहितकरणं न स्यात्' इत्याद्युक्तिभिः **न निवर्तेत** । स पुमान् **यावत्** साकल्येन **अज्ञः** मूढतमः इत्यर्थः ॥ ३० ॥

ननु स्वातन्त्र्यज्ञानं कथं आरोपः ? कुलालादेः घटादिकरणस्वातन्त्र्यदर्शनादित्यत आह- **असत्त्वादिति** ।

**असत्त्वादात्मनोऽन्येषां भावानां किंकृताऽभिदा ।**
**गतयो हेतवश्चास्य मृषा स्वप्नदृशो यथा ॥ ३१ ॥**

**आत्मनः** अनन्तकल्याणगुणशक्त्यादिपरिपूर्णात् **अन्येषां भावानां** चेतनादीनां पदार्थानां **असत्वात्** स्वतः शक्तिरहितत्वात् **अभिदा** स्वतःशक्तिसम्भवप्रतीतिः **किङ्कृता ?** केन प्रमाणेन प्राप्ता ? न केनापि । तस्मात् स्वातन्त्र्यादिज्ञानं भ्रम इत्यर्थः । ननु

'न जीवात्कारणं परम्' इति वचनात् 'इदं मत्कृतिसाध्यं मदन्येन असाध्यत्वे सति साध्यत्वात्' इत्यादिहेतुभिर्जीवस्य स्वातन्त्र्यं ज्ञायते इत्यत आह- **गतय** इति । **गतयः** 'अहमेव कर्ता' इत्यादि ज्ञानानि । गम्यते= ज्ञायते अर्थः अनेनेति गतिः= वचनम् । **गतयः** वचनानि **मृषा** बाधितार्थानि । **अस्य** जीवस्य **स्वप्नदृशः** स्वप्नज्ञानानि स्वप्ने जाग्रदभेदज्ञानानि **यथा मृषा** । एवं स्वतः सामर्थ्यरहिते स्वतःकर्तृत्वादिज्ञानं भ्रम इत्यर्थः ॥ ३१ ॥

सर्वावस्थासु सर्वव्यापारेषु परमात्मनः स्वातन्त्र्यं, जीवस्य तदधीनत्वं च दर्शयति- **यो जागर** इति ।

**यो जागरे बहुविधान् क्षणधर्मिणोऽर्थान् भुङ्क्ते समस्तकरणो हृदि तत्सदृक्षान् ।**
**स्वप्नेऽथसुप्त उपसंहरते स एकः स्मृत्यन्वयात् त्रिगुणवृत्तिदृगिन्द्रियेशः ॥ ३२ ॥**

त्रिगुणवृत्तिः जीवस्य सत्वादिगुणप्राप्तव्यापारः सुखदुःखकर्माणि पश्यतीति **त्रिगुण-वृत्तिदृक्** । **इन्द्रियेशः** सर्वेन्द्रियनियामकः **यः** परमात्मा **जागरे क्षणधर्मिणः** क्षणे क्षणे विकारविशिष्टान् **बहुविधान्** भोग्यान् **भुङ्क्ते** । विश्वमूर्तिः सन् दक्षिणाक्षिस्थः विषयान् सर्वाननुभवतीति भावः । अथ जागरावस्थानन्तरं **स्वप्ने हृदि** मनसि स्थितः तैजसमूर्तिः । **तत्सदृक्षान्** जाग्रदर्थसदृशविविधपरिमाणाद्युपेतान् **अर्थान् भुङ्क्ते** अनुभवति । **सुप्तः** सुषुप्त्यवस्थां गतः, सम्यग् अस्तानि= निर्व्यापाराणि करणानि= इन्द्रियाणि येन सः **हृदि** स्थितः प्राज्ञः **उपसंहरते** जीवसुखं समुपाहरति अनुभवतीत्यर्थः । ननु वायोरपि स्वप्नादिद्रष्टृत्वमस्ति, जीवस्यापि प्रत्यभिज्ञायते, कथम् ईश्वरस्यैव स्वप्नादिद्रष्टृत्वमुच्यते ? इत्यत आह- **स एक** इति । **स** स्वतन्त्र **एकः** स्वप्नादि-द्रव्यप्रधानः, तेषां जीवानां सुखादिप्रदर्शकश्चेति भावः । ईश्वरस्य स्वप्नादिसृष्टिकरणेच्छा

कुतः ? स्वप्नस्य भ्रमत्वादित्यत आह- **स्मृत्यन्वयादिति** । स्मृतिसहितश्रुतेः अन्वयात् अस्मिन्नर्थे तात्पर्यलक्षणसम्बन्धादित्यर्थः । उक्तं च 'निर्मातारं चैके पुत्रादयश्च' (ब्र.सू.३-२-२) इति । स्वप्नपदार्थान् परमात्मा स्वेच्छया सृजत्येवेति भावः ॥ ३२ ॥

ततः चिन्ता न कार्येत्याह- **एवं विमृश्येति** ।

**एवं विमृश्य गुणतो मनसस्त्र्यवस्था मन्मायया मयि कृता इति निश्चितार्थाः ।**
**सञ्छिद्य हार्दमनुमानसदुक्तितीक्ष्णज्ञानासिना भजत माऽखिलसंशयाधिम् ॥ ३३**

**एवं** मदुक्तप्रकारं **विमृश्य** परीक्षापूर्वकं पुनः अनुसन्धाय **मन्मायया** परमात्मेच्छया मदधीनप्रकृत्या **गुणतः मनसः** सकाशात् **मयि** परमात्मनि देहे सति **त्र्यवस्थाः कृताः** प्राप्ताः । एताः मनसः जीवस्य न स्वाभाविक्यः **इति** एवं प्रकारेण **निश्चितार्थाः** यूयम् अनुमानसहितैः सदुक्तिभिः= वेदवचनविमर्शैः तीक्ष्णः यः ज्ञानाख्यः असिरिव 'अस्मात् बन्धात् मोक्षकर्ता अस्ति' इत्यवधारणं तेन **हार्दं** मनोगतम् अखिलसंशयं आधिं= मनोव्यथां च **सञ्छिद्य** मां **भजत** । ततः सर्वबन्धपरिहारो भविष्यतीति भावः ॥ ३३ ॥

'यो जागर' इति प्रागुक्तजागराद्यवस्थाव्यापारेषु व्यवस्थया कर्तृवर्णनेन परमात्-ममूर्तीनां प्रसक्तं भेदं निषेधति- **वीक्षेतेति** ।

**वीक्षेत विभ्रममिमं मनसो विलासं दृष्टं विनष्टमतिलोलमलातचक्रम् ।**
**विज्ञानमेकमुरुधेव विभाति माया स्वप्ने यथा त्रिगुणसर्गकृतो विकल्पः ॥ ३४ ॥**

[1]**इमं** जागराद्यवस्थाप्रेरकेषु भेदविषयं **मनसो विलासं** विलासकार्यं मानसिकज्ञानं **विभ्रमं वीक्षेत** । कथमस्य भ्रमत्वम् ? इति जिज्ञासायामाह- **दृष्टमिति** । भ्रमत्वेन यदा दृष्टः तदा विनष्टो भवति । **अतिलोलं** च क्षिप्रं नश्यति । मननेन अभेदश्रुत्यर्थावधारणे सतीति भावः । अयं भ्रमः पुरुषयत्नेनापि निवर्तते इत्याशयेनाह- **अलातचक्रमिति** । यथा अलातचक्रभ्रमः तथा देहकरणप्रेरकमूर्तिषु भेदज्ञानं भ्रम इत्याह- **विज्ञानमिति** । ज्ञातृदोषादपि भ्रमो भवतीत्याह- **त्रिगुणसर्गेति** । यस्य चेतनस्य त्रिगुणैः सर्गो येषान्तैः त्रिगुणैः तत्सर्गैश्च पापादिभिः विकल्पः देहबन्धो भवति तस्य एवं स्वावतारादि-भेदरहितं विज्ञानं ब्रह्म उरुधा भिन्नत्वेन भाति । तदज्ञानं माया अज्ञानकार्यं भ्रम इत्यर्थः । स्वप्ने यथा जाग्रदर्थाभेदप्रतीतिभ्रमः तथेत्यर्थः । तस्मात् परमात्ममूर्तीनां परस्परं परमात्मना च भेदो नास्तीति भावः ॥ ३४ ॥

जाग्रदाद्यवस्थाप्रवर्तकपरमात्ममूर्तिषु भ्रान्त्या प्रसक्तं भेदं निषेधतिवीक्षेतेति । यः **विकल्पः** विविधः कल्पः कल्पना परमात्मनि भेदप्रत्ययः तम् **इमं विभ्रमं वीक्षेत** भ्रमत्वेन जानीयादित्यर्थः । कथं तस्य भ्रमत्वमिति जिज्ञासायामाह- **दृष्टमिति** । आरोपाधिष्ठानं यदा सम्यक् **दृष्टं** भ्रमत्वेन उपदेशैः ज्ञातं तदा विनष्टम् अलातचक्र-भ्रमवत् । अलातचक्रं यथा स्वबुद्ध्या नश्यति तथेति भावः । अतिलोलं गुरूपसत्त्या स्वबुद्ध्या श्रुत्यादिभिः यथार्थज्ञाने सति शीघ्रं नश्यति । नित्यानुवृत्तस्य भ्रमस्य कथं विनाशः ? इत्यत आह- **मनसो विलासमिति** । अमुं **मनसः विलासं** कार्यं वीक्षेत, अतः भ्रमस्य नाश इति भावः । यथा अवस्थात्रयप्रेरकेषु भेदभ्रमः एवम् इन्द्रियादिशक्तिप्रेरकमूर्तिष्वपि भेदप्रतीतिर्भ्रम इत्याह- **विज्ञानमिति** । **एकं** स्वमूर्तिषु भेदवर्जितम् । **विज्ञानं** ब्रह्म **उरुधा** भिन्नतया विभाति । तद्धानं **माया** अज्ञानकार्यं

[1] व्याख्या चात्र द्वेधा कृतमिव भाति । किञ्चिदिव विलक्षणम् । नैवाबद्धम् । पाठनसन्दर्भे विवृतमपि लिपिकारेण योजितमिति मन्ये ।

भ्रमः । यथा स्वप्ने भ्रमः भवति तथेहापीति भावः । अयं भ्रमः कस्माद्भवति ? इति जिज्ञासायामाह- **त्रिगुणेति ।** गुणत्रयेण तत्कार्यपापेन अज्ञानादिना यस्य विकल्पः बन्धः तस्य पुरुषस्य विविधभ्रमो भवतीत्यर्थः । स च भ्रमः उक्तज्ञानादिकारणैः शीघ्रं नश्यतीति भावः ॥ ३४ ॥

ननु भ्रमकारणानां अज्ञानपापादीनां सत्वात् निवृत्तोऽपि भ्रमः कस्मान्न भवेत् ? इत्याशङ्क्याह- **दृष्टिमिति ।**

**दृष्टिं ततः प्रतिनिवर्त्य निवृत्ततर्षस्तूष्णीं भवेन्निजसुखानुभवो निरीहः ।**
**सन्दृश्यते क्व च यदीदमवस्तुबुद्ध्या त्यक्तं भ्रमाय न भवेत्स्मृतिरानिपातात् ॥ ३५**

**यदि** यद्यपि **इदं** परमात्ममूर्तिषु मिथः वैलक्षण्यज्ञानं मूढेषु **सन्दृश्यते ।** ज्ञानिभिः तु **अवस्तुबुद्ध्या** परमात्ममूर्तिषु मिथः वैलक्षण्यं असदिति बुद्ध्या त्यक्तं तिरस्कृतम् । वैलक्षण्यं **भ्रमाय** भ्रमविषयत्वाय **न भवेत् ।** तत्र कारणमाह- **स्मृतिरिति । आनिपातात्** निपातमन्धन्तमः मोक्षमारभ्य निपातपर्यन्तं लोकेषु स्थितज्ञानिनां **स्मृतिः** भ्रमविरोधिनी स्मृतिरस्ति । अतः ज्ञानिनां परमात्मनि वैलक्षण्यभ्रमः कदाऽपि न भवतीति भावः । एवं ज्ञानसिद्ध्यनन्तरं का वा ज्ञानिनस्थितिः ? इति जिज्ञासायामाह- **दृष्टिमिति । निवृत्ततर्षः** विषयतृष्णारहितः **निरीहः** देहानुबन्धिषु आदानेच्छारहितः **ततः** असम्यग् ज्ञानात् **दृष्टिं** मनः **प्रतिनिवर्त्य** प्रपञ्चविषये, परमात्मविषये च अन्यथाज्ञानम् अत्यन्तं तिरस्कृत्येत्यर्थः । निजसुखानुभवसम्पन्नः सन् तूष्णीं भवेत् । मनोवागादीनि परमात्म-गतानि बहिरर्थे न निवेशयेदित्यर्थः ॥ ३५ ॥

ज्ञानिनोऽपि देहवत्त्वेन तमोगुणाद्युपेतत्वात् पुनरज्ञानोत्पत्त्या देहादौ ममतादि-लक्षणविकल्पो भवेत् इत्यत आह- **देहं चेति ।**

**देहं च नश्वरमनुज्झितमुज्झितं वा सिद्धो न पश्यति यतोऽध्यगमत् स्वरूपम् ।**
**दैवादुपेतमथ दैववशादपेतं वासो यथा परिवृतं मदिरामदान्धः ॥ ३६ ॥**

**सिद्धः** अपरोक्षी **उज्झितं** त्यक्तं वा **देहं न पश्यति** । मम देहो गतः, न मम देहोऽस्तीति । तत्र कारणमाह- **यतोऽध्यगमदिति । स्वरूपं** अन्तर्यामिरूपम् **अध्यगमत्** स्वामित्वेन प्रत्यक्षीकृतवान् । **स्वरूपं** चेतनदेहं देहानुबन्धि स्वीयं रूपं वस्तु तत्सर्वं **अध्यगमत्** परमात्मपरतन्त्रतया निश्चितवान् । अतः परमात्मसाक्षात्कारा-वसेयः[1] अहङ्कारभ्रमादिः न भवति । तमोगुणोऽपि निवृत्तशक्तिरिति भावः । **परिवृतं** परिकृतं वा । देहाच्छादकतया स्थितं **वासः ॥** ३६ ॥

एवं देहाभिमानरहितेन चेतनेन अरक्षितो देहः कियत्कालमवतिष्ठेत्? इति जिज्ञासायामाह- **देहोऽपीति** ।

**देहोऽपि दैववशगः खलु कर्म यावत् स्वारम्भकं प्रतिसमीक्षत एव सासुः ।**
**तं सप्रपञ्चमधिरूढसमाधियोगः स्वप्नं पुनर्न भजते प्रतिबुद्धवत् सः ॥ ३७ ॥**

**सासुः** प्राणवाय्वादिसहितः **देहः कर्म याव** त्पर्यन्तं **स्वारम्भकं** स्थितिकारणं भवति तावत्पर्यन्तं **दैववशगः** अदृष्टप्रेरकपरमात्मपोषितः **प्रतिसमीक्षते** अवतिष्ठते । देहावस्थाने पुनर्ममता कदाऽपि स्यात् इत्यत आह- **तमिति । सप्रपञ्चं** विषयसन्निकृष्टे-न्द्रियसहितं **तं** देहम् **अधिरूढः** अत्यन्तं दृढः समाधिः= निजमनसा स्वत एव परमात्मध्यानं, स एव योगः= उपायः सर्वभ्रमनिवृत्तिकारणं यस्य सः **पुनः न भजते** आदरविषयं न करोति । ममताभ्रमस्तु दूरोत्सारित इति भावः । यथा स्वप्नात् प्रतिबुद्धः चेतनः स्वाप्नं देहं **न भजते** तत्र अभिमानवान् न भवति तथेहापि ॥ ३७ ॥

---

[1] अयं सम्भावितः पाठः । परमात्मसाक्षात्कारेणावसादयितुं नाशयितुं योग्य इत्यर्थः । मूलपुस्तके तु 'परमात्मसाक्षात्कारावरोधः' इति पठ्यते ।

**मयैतदुक्तं वो विप्रा गुह्यं यत् साङ्ख्ययोगयोः ।**
**जानीत माऽऽगतं यज्ञं युष्मद्धर्मविवक्षया ॥ ३८ ॥**

साङ्ख्यं यथार्थज्ञानजनकं शास्त्रं योगः= ज्ञानभक्त्युपायप्रतिपादकं शास्त्रं तयोः **साङ्ख्ययोगयोः** प्रतिपादितमपि **गुह्यं** रहस्यम् एतत् भवद्भिः पृष्टं मया **उक्तम्** । स्वस्य हंसावतारत्वज्ञापनाय 'को भवान्' इति प्रश्नस्य उत्तरमाह- **जानीतेति** । **मां** हंसं **यज्ञं** विष्णुं **जानीत** । स्वस्य आगमनप्रयोजनमाह- **युष्मदिति** । युष्माकं धर्माणां= ज्ञानभक्तितत्साधनानां विवक्षया= ज्ञापयितुमिच्छया **आगतं जानीत** ॥ ३८ ॥

भक्त्या तान् स्वस्मिन् ज्ञातव्यान् गुणानाह- **साङ्ख्यस्येति** ।

**अहं योगस्य साङ्ख्यस्य सत्यस्यर्तस्य तेजसः ।**
**परायणं द्विजश्रेष्ठाः श्रियः कीर्तेर्दमस्य च ॥ ३९ ॥**

साङ्ख्यशास्त्रस्य योगशास्त्रस्य सत्यस्य यथार्थवचनस्य, तद्भाषणस्य वा **ऋतस्य** यथार्थज्ञानस्य, यथार्थवचनस्य, वा ऋतं प्राणिषु हितोपदेशो वा तस्य, **तेजसः** सामर्थ्यस्य **श्रियः** अणिमादिसम्पादितश्रियः, लक्ष्म्याः **कीर्तेः** पालनादिकीर्तेः **दमस्य** विषयेभ्यो मनोनिग्रहस्य **परायणं** मुख्यतो विषयः साधूनां तत्सङ्गः मत्प्रीतये भवतीति भावः । **हे द्विजश्रेष्ठाः !** हे सनकादयः ! ॥ ३९ ॥

**मां भजन्ति गुणाः सर्वे निर्गुणं निरपेक्षकम् ।**
**सुहृदं प्रियमात्मानं साम्यासङ्गादयो गुणाः ॥ ४० ॥**

**इति ते च्छिन्नसन्देहा मुनयः सनकादयः ।**
**सभाजयित्वा परया भक्त्याऽगृणत संस्तवैः ॥ ४१ ॥**

**तैरहं पूजितः सम्यक् संस्तुतः परमर्षिभिः ।**
**प्रत्येयाय स्वकं धाम पश्यतः परमेष्ठिनः ॥ ४२ ॥**

**॥ इति श्रीमद्भागवते एकादशस्कन्धे त्रयोदशोऽध्यायः ॥**

**निर्गुणं प्रकृतिगुणेभ्यः निष्क्रान्तं, गुणप्राप्यविकाररहितमित्यर्थः । निरपेक्षकम्** उपादेयापेक्षारहितं सर्वदाऽऽनन्दपूर्णत्वादिति भावः । **आत्मानं** अन्तर्नियामकं **सुहृदं** अनिमित्तोपकारिणं **प्रियं** सर्वस्मात् प्रीतिविषयं साम्यं= मे सर्वमूर्तिषु पूर्णत्वम्, असङ्गः= निर्दोषता, एतदादयः, प्रधानगुणाः, एते मां भजन्ति । अलौकिक**गुणाः मां** भजन्त इति जानीत । **इति** एवंविधोपदेशैः छिन्नः= परिहृतः सन्देह इव सन्देहः= प्रश्नः येषान्ते **सनकादयः सभाजयित्वा** पूजयित्वा तं विष्णुं **संस्तवैः अगृणत** अस्तुवन् । **स्वकं धाम** वैकुण्ठं प्रति **प्रति ऐयाय** आगतवान् ॥ ४२ ॥

॥ इति श्रीयादवेन्द्रयतिविरचिते एकादशस्कन्धव्याख्याने त्रयोदशोऽध्यायः ॥

# 14 | चतुर्दशोऽध्यायः

**उद्धव उवाच-**

**वदन्ति कृष्ण श्रेयांसि बहूनि ब्रह्मवादिनः ।**

**तेषां विकल्पः प्राधान्यमुताहो एकमुख्यता ॥ १ ॥**

**भवतोदाहृतः स्वामिन् भक्तियोगोऽनपेक्षितः ।**

**निरस्य सर्वतः सङ्गं येन त्वय्याविशेन्मनः ॥ २ ॥**

**श्रेयांसि** श्रेयस्साधनानि यज्ञादीनि **तेषां** यज्ञादीनां **विकल्पः** कदाचित् यज्ञः श्रेयस्साधनम् । कदाचित् ज्ञानं श्रेयस्साधनम् इति विकल्पः **प्राधान्यं** ज्ञानकर्मादीनां सर्वेषां संभूय श्रेयस्साधनत्वं वा उत एकस्य ज्ञानस्य । श्रेयस्साधनत्वे **मुख्यता** प्राधान्यम् । **सर्वतः** सर्वविषयेभ्यः **सङ्गम्** अपेक्षां **निरस्य** स्थितस्य पुरुषस्य **येन** भक्तियोगेन **त्वयि मनः आविशेत्** स भक्तियोगः **भवता** श्रेयस्साधत्वेन **उदाहृतः ।** किं भक्तियोगस्यैव मुख्यत्वम् ? अथवा अतिरिक्तस्य यागादेः फलं अनुपादेयम्[1] ?

एवं प्रश्ने सति ईश्वरसेवां विना विषयाकाङ्क्षोपेता न सात्विकाः । तेषां ज्ञानकारणं च वेदादिकं सदोषम्[2] अनुपादेयमिति उत्तरं वदन् ज्ञानागतिक्रममाह- **कालेन नष्टेति ॥**

---

[1] 'अथवा अतिरिक्तस्य यागादेः' इत्येतावतैवालम्, शिष्टं सम्पातायातं स्यादिति भाति । [2] फलापेक्षत्वात् सदोषमित्यर्थ इति भाति ।

**श्रीभगवानुवाच-**

**कालेन नष्टा प्रळये वाणीयं वेदसञ्ज्ञिता ।**

**मयाऽऽदौ ब्रह्मणे प्रोक्ता धर्मो यस्यां मदात्मकः ॥ ३ ॥**

इयं **वेदवाणी प्रळये कालेन नष्टा** परमात्मना संहृता अध्यापनादिरहिता आसीत् । **कालेन** बहुकालेन **मया** वेदवाणी आदौ प्रथमं **मदात्मकः** मद्भक्तिलक्षणः मत्पूजालक्ष-णादिः धर्मश्च ॥ ३ ॥

**तेन प्रोक्ता च पुत्राय मनवे पूर्वजाय सा ।**

**ततो भृग्वादयोऽगृह्णन् शब्दब्रह्म महर्षयः ॥ ४ ॥**

**तेभ्यः पितृभ्यस्तत्पुत्रा देवदानवगुह्यकाः ।**

**मनुष्याः सिद्धगन्धर्वाः सविद्याधरचारणाः ॥ ५ ॥**

**तेन** ब्रह्मणा । पूर्वजः आदिसृष्टौ रुद्राद्यपेक्षया अन्येभ्यः पूर्वजः भवति इति भावः । तस्मै मनवे ॥ ५ ॥

**किन्देवाः किन्नरा नागा रक्षः किम्पुरुषादयः ।**

**बह्व्यस्तेषां प्रकृतयो रजःसत्वतमोभुवः ॥ ६ ॥**

**याभिर्भूतानि भिद्यन्ते भूतानां मतयस्तथा । यथाप्रकृति सर्वेषां चित्रा वाचः स्रवन्ति हि ॥ ७ ॥**

**किंपुरुषादयः** वेदं अगृह्णन् धर्मांश्च अगृह्णन्, नन्वेवमुपदेशपरम्पराप्राप्तेन वेदेन ज्ञानभेदः कथं प्राप्तः ? इति जिज्ञासायामाह- **प्रकृतय** इति । तेषां वेदवक्तृणां **प्रकृतयः** स्वभावाः राजसतामसादिभेदेन बह्व्यः, **याभिः** राजसादिप्रकृतिभिः **भूतानि** चेतनानि

**वाचः** वेदवाचः चित्राः विविधाः । **यथाप्रकृति** राजसादिस्वभावमनुसृत्य **स्रवन्ति** अन्यथाज्ञानजनका भवन्ति ॥ ७ ॥

एवं वेदानाम् अपि प्रकृतिवैचित्र्यात् मतयो भिद्यन्ते । नन्वेवम् उपदेशपरम्परया प्राप्तं ज्ञानं किं नष्टम् ? नेत्याह- **पारम्पर्येणेति** ।

**एवं प्रकृतिवैचित्र्याद् भिद्यन्ते मतयो नृणाम् ।**
**पारम्पर्येण केषाञ्चित् पाषण्डमतयोऽपरे ॥ ८ ॥**

अनेन उपदेशपारम्पर्येण केषाञ्चित् देवादीनां सम्यक् ज्ञानं नान्येषाम् । **अपरे** पाषण्डे मते मतिर्येषां ते, वेदपरित्यागेन, तत्स्वीकारेण वा स्वयम् उत्प्रेक्षितार्थ-साधकाः ॥ ८ ॥

स्वयं पाषण्डमतकल्पने किं निमित्तमिति जिज्ञासायामाह- **मन्मायेति** ।

**मन्मायामोहितधियः पुरुषाः पुरुषर्षभ ।**
**श्रेयो वदन्त्यनेकान्तं यथाकर्म यथारुचि ॥ ९ ॥**

माया= असुरबन्धकशक्तिः तया मोहितधियः । **श्रेयः अनेकान्तं** बहुधा **वदन्ति** ॥ ९ ॥

यथोचितप्रत्ययानुसारेण बहुधा वर्णनं दर्शयति- **धर्ममेक** इति ।

**धर्ममेके यशश्चान्ये कामं सत्यं दमं शमम् ।**
**अन्ये वदन्ति चार्थं वा ऐश्वर्यं त्यागभोजने ।**
**केचिद् यज्ञं तपो दानं व्रतानि नियमान् यमान् ॥ १० ॥**

**आद्यन्तवन्त एवैषां लोकाः कर्मविनिर्मिताः ।**

**दुःखोदर्कास्तमोनिष्ठाः क्षुद्रानन्दाः शुचाऽर्पिताः ॥ ११ ॥**

वेदार्थान् साधनानि फलानि च विविधानि वदन्तीति भावः । एते पक्षाः हेयाः एतत्फलानां हेयत्वादित्याह- ये **तमोनिष्ठा** अज्ञानप्रचुराः । तेषां नृणां **लोकाः** फलत्वेन प्राप्ता **दुःखोदर्का** अधिकदुःखानुषङ्गोपेताः । **शुचा** चिन्ताप्राप्तमनःखेदेन **अर्पिताः** सम्पादिताः[1] ॥ ११ ॥

ईश्वरानुग्रहप्राप्तसुखं तामसादीनां नास्तीत्याह- **मय्यर्पितेति** ।

**मय्यर्पितात्मनः सत्ये निरपेक्षस्य सर्वतः ।**

**मदात्मकं सुखं यत् तत् कुतः स्याद् विषयात्मनाम् ॥ १२ ॥**

**सत्ये** सर्वदोषविरोधिसर्वकल्याणपूर्णे मयि अर्पिता । स्वतः सर्वतः **निरपेक्षस्य** बाह्यपदार्थे आदररहितस्येति भावः । ज्ञानिनः **मदात्मकं** मया प्रापितं यत् नित्यं सुखं तत् **विषयात्मनां** मां विना विषयेभ्यः सुखमिच्छतां **कुतः स्यात्?** प्रत्युत मदुल्लङ्घनेन दुःखमेव स्यात् इति भावः ॥ १२ ॥

यथा परत्र सुखं तथा इहापि मद्भक्तस्य सुखमस्तीत्याह- **अकिञ्चनस्येति** ।

**अकिञ्चनस्य दान्तस्य शान्तस्य समचेतसः ।**

**मया सन्तुष्टमनसः सर्वाः सुखमया दिशः ॥ १३ ॥**

अकिञ्चनस्य देहधारणमात्रावशिष्टस्य **दान्तस्य** स्वतः विषयव्यावृत्तेन्द्रियस्य, **शान्तस्य** परमात्मनि स्वतः प्राप्तमनसः । **समचेतसः** परमात्मसर्वमूर्तिषु पूर्णत्वबुद्धेः, शत्रुमित्रयोः वा समचेतसः । हिताहितकर्तॄणां स्वकर्मप्राप्यत्वबुद्ध्या तेषु कामक्रोधा-

---

[1] अत्र 'विभवाः' इत्यधिकं पठ्यते मूलपुस्तके, सम्पातायातं स्यात् ।

द्यकर्तुरिति भावः । सर्वे देशाः अवस्थानभूमयः **सुखमयाः ।** तस्य सर्वदेशेषु प्रचुरं सुखम् । **सर्वा** दिशः **सुखमया दिशः ।** तस्य अन्तरा दिक्षु प्रचुरं सुखं भवेत् ॥ १३ ॥

एकान्तभक्तान् स्तौति- **न पारमेष्ठ्यमिति ।** अथवा स्वस्य अष्टमरसरूपत्वात्[1] एकान्ताः मामेवापेक्षन्ते इत्याह- **न पारमेष्ठ्यमिति ।**

**न पारमेष्ठ्यं न महेन्द्रधिष्ण्यं न सार्वभौमं न रसाधिपत्यम् ।**
**न योगसिद्धीरपुनर्भवं वा मय्यर्पितात्मेच्छति मद् विनाऽन्यत् ॥ १४ ॥**

चतुर्मुखः **पारमेष्ठ्यं** सत्यलोकाधिपत्यसुखं नेच्छति । किन्तु मत्सेवारूपया इच्छतीति भावः । **योगसिद्धयः** अणिमादयः, ताः नेच्छति भोगार्थम् । कर्दमस्तु कपिलमातुः सन्तोषार्थं योगसिद्धिमपेक्षितवानिति भावः । **अपुनर्भवं** वैकुण्ठादि, एकान्तभक्तः विषयभोगार्थं नेच्छति । एवं **मां विना अन्यत् नेच्छति,** मामेवेच्छति । मदर्थं वा अन्यदिच्छतीति भावः ॥ १४ ॥

श्रीकृष्णः तत्कालीनकृपया उद्धवं स्तौति- **न तथा मे प्रियतम** इति ।

**न तथा मे प्रियतम आत्मयोनिर्न शङ्करः ।**
**न च सङ्कर्षणो न श्रीर्नैवात्मा च यथा भवान् ॥ १५ ॥**

**भवान्** उद्धवः **यथा प्रियतमः** तथा **आत्मयोनिः** ब्रह्मा न नन्दनः । **आत्मा** मम देहः प्रियतमो न । परमात्मनः श्रीब्रह्मादिषु नित्यं यथोचितं परमप्रीतिसद्भावेपि तत्कालीना उद्धवे कृपाप्रीतिः महतीति भावः ॥ १५ ॥

भक्तेषु प्रीत्या अहं भक्तैः सह सञ्चरामीत्याह- **निरपेक्षमिति ।**

---
[1] छान्दोग्योक्तदिशेत्यर्थः ।

**निरपेक्षं मुनिं शान्तं निर्वैरं समदर्शनम् ।**

**अनुव्रजाम्यहं नित्यं पूयेय स्वाङ्घ्रिरेणुभिः ॥ १६ ॥**

स्वसञ्चारेण भक्तस्य क्रियमाणम् उपकारं चाह- **पूयेयेति । स्वाङ्घ्रिरेणुभिः** भक्तं पवित्रं करोमीति बुद्ध्या **अनु** पश्चात् व्रजामि । भक्तस्य पादस्पर्शः स्वाङ्घ्रिरेणौ न भवेदिति बुद्ध्या पश्चाद् गमनमिति भावः ॥ १६ ॥

सुखसाधनानां विषयाणां कथं परित्याग इत्यत आह- **निष्किञ्चना इति ।**

**निष्किञ्चना मय्यनुरक्तचेतसः शान्ता महान्तोखिलजीववत्सलाः ।**

**कामैरनालब्धधियोऽजुषश्च ते नैरपेक्ष्यं हि विदुः सुखं मम ॥ १७ ॥**

**निष्किञ्चनाः** उपादेयवस्तुरहिताः, अत एव **मयि अनुरक्तचेतसः** अत्यन्तं आसक्तचित्ताः । **शान्ताः** कामक्रोधादिशान्तियुक्ताः । **महान्तः** स्वविहितधर्माचरणैः पूज्याः । अखिलजीवेषु= परमात्मसेवोपयुक्तेषु वात्सल्योपेताः । **कामैः** विषयैः अनालब्धा= अप्राप्ता धीः येषान्ते विषयस्मरणरहिताः । **अजुषः** विषयान् असेवमानाः । प्राप्तेष्वपि विषयेषु अनादरोपेताः इति वा ये एवंविधाः ते **नैरपेक्ष्यं** विषयापेक्षया निष्क्रान्तं निरपेक्षं मम ध्यानं, तेन प्राप्तं नैरपेक्ष्यं **सुखं विदुः** अनुभवन्ति । विषयविरागोऽपि महासुखसाधनमिति विषयपरित्यागः विवेकिसम्मत इति भावः ॥

ननु प्रबलकर्मप्राप्तविषयाननुभवतः भक्तस्य का गतिरिति जिज्ञासायामाह **बाध्यमानोऽपीति ।**

**बाध्यमानोपि मद्भक्तो विषयैरजितेन्द्रियः ।**

**प्रशस्तयाऽपि मद्भक्त्या विषयैर्नाभिभूयते ॥ १८ ॥**

बाध्यमानः विषयानुभवेन ध्यानादिरहितः इत्यर्थः । मद्भक्त्या **विषयैः नाभिभूयते ।** असुर इव अधःपातवान् न भवतीत्यर्थः ॥ १८ ॥

जन्मान्तरीयाल्पकर्मप्राप्तविषयास्तु न बन्धका इत्याह- **यथाग्निरिति ।**

**यथाग्निः सुसमिद्धार्चिः करोत्येधांसि भस्मसात् ।**
**तथा मद्विषया भक्तिरुद्धवैनांसि कृत्स्नशः ॥ १९ ॥**

**एनांसि** पापानि **कृत्स्नशः** अनिष्टपुण्यानि च मद्विषया भक्तिः सर्वाणि कर्माणि नाशयतीत्यर्थः । ननु जन्मान्तरीयबहुपापाक्रान्तस्य चेतनस्य कथं नैरपेक्ष्यं सुखं स्यादित्यत आह- **यथाग्निरिति ॥** १९ ॥

मुक्त्युपायेषु भक्तेः प्राधान्यमित्याह- **न साधयतीति ।**

**न साधयति मां योगो न साङ्ख्यं धर्म उद्धव ।**
**न स्वाध्यायस्तपस्त्यागो यथा भक्तिर्ममोर्जिता ॥ २० ॥**

**मां यथा साधयति** अत्यन्तं प्रसन्नं करोति अथान्यानि साधनानि मां न साधयन्ति ॥ २० ॥

**भक्त्याहमेकया ग्राह्यः शुद्धयाऽऽत्मा प्रियः सताम् ।**
**भक्तिः पुनाति मन्निष्ठा सकामानपि सम्भवात् ॥ २१ ॥**

**एकया** विषयकामनारहितया **शुद्धया** नवविधद्वेषरहितया अहं **सतां** आत्मनः स्वस्मादपि **प्रियः । मन्निष्ठा** मयि स्थिरा उत्कृष्टा **भक्तिः सम्भवात्** जननात् बन्धान् **सकामान्** प्रारब्धादिना विषयकामनावतोऽपि सौभर्यादीन् **पुनाति** बन्धं नाशयतीत्यर्थः ॥ २१ ॥

**धर्मः सत्यदयोपेतो विद्या वा तपसाऽन्विता ।**

**मद्भक्त्यपेतमात्मानं न सम्यक् प्रपुनाति हि ॥ २२ ॥**

सम्यक् सत्याद्युपेतः **सम्यक्** तपसा अन्विता । **अपेतं** मद्भक्तिरहितं **न पुनाति** । एभिः धर्मदयादिभिः ईश्वरः भक्त्या विना न तुष्येत् । भक्त्या तुष्येदित्यर्थः ॥ २२ ॥

डम्भभक्तिं चलभक्तिं च व्यावर्तयति- **कथं विनेति** ।

**कथं विना रोमहर्षं द्रवता चेतसा विना ।**

**विनाऽऽनन्दाश्रुकलया तुष्येद् भक्त्या विनाशयः ॥ २३ ॥**

चित्तद्रावादिकं विना प्राप्ता कथं भक्तिः ? भक्त्याभासः इति भावः ॥ २३ ॥

चित्तद्रवादिसंपन्ना परमात्मभक्तिरित्याह- **वाग्गद्गदेति** ।

**वाग्गद्गदा द्रवते यस्य चित्तं रुदत्यभीक्ष्णं हसति क्वचिच्च ।**

**विलज्ज उद्गायति नृत्यते च मद्भक्तियुक्तो भुवनं पुनाति ॥ २४ ॥**

**यस्य** विषये दृढविरागेण दृढभक्तिसंपन्नस्येत्यर्थः । **चित्तं द्रवत** भक्तेः उदारावस्थायाम् इति भावः । तस्य चेतनस्य **वाक् अभीक्ष्णं** पुनः **गद्गदा,** प्रतिपदं स्खलनोपेता, भक्तैः सह सम्भाषणसमये इति भावः । अभीक्ष्णं हासादिमान् भवति, **क्वचित् रुदति**[1] तस्य अपरोक्षालाभादिति भावः । **मद्भक्तियुक्त** एतादृशो **भुवनं** सज्जनसमुदायं **पुनाति,** न तु अभक्तानां अनिष्टनिवृत्तिं करोतीत्यर्थः ॥ २४ ॥

तत्ववासनादार्ढ्यायोक्तार्थं पुनः सदृष्टान्तमाह- **यथाग्निनेति** ।

[1] 'रोदनं प्रत्यक्षीभूतरूपतिरोधाने' इति सुधीन्द्रतीर्थीयम् ।

**यथाग्निना हेम मलं जहाति ध्मातं पुनः स्वं भजते च रूपम् ।**
**आत्मा च कर्मानुशयं विधूय मद्भक्तियोगेन भजत्यथो माम् ॥ २५ ॥**

**यथा हेम** लोहान्तरमिश्रं सुवर्णं पुनः पुनः **ध्मातं** पुटपाकं प्राप्तं वायुसमृद्धाग्नित्व-मित्यर्थः । तेन **अग्निना मलं** स्वस्मिन् दृढं संवलितं लोहान्तरादिमलं **जहाति, स्वं** रूपं निजं सुवर्णत्वं **भजते** प्राप्नोति । तथा **आत्मा** चेतनः **कर्मानुशयं** नानाकर्मयुक्तमन्तः-करणं[1] **मद्भक्तियोगेन** मयि उद्रिक्तभक्तिलक्षणोपायेन **विधूय** परिहृत्य **मां भजति ।** मत्समीपे विष्णुलोके आनन्दी वर्तते इति भावः ॥ २५ ॥

ननु अन्तःकरणयुक्तस्य चेतनस्य कर्मबन्धसमये कथं ज्ञानभक्तिसंभव इति जिज्ञासायामाह- **यथायथेति ।**

**यथायथाऽऽत्मा परिमृज्यतेऽसौ मत्पुण्यगाथाश्रवणाभिधानैः ।**
**तथातथा पश्यति सूक्ष्मतत्वं चक्षुर्यथैवाञ्जनसम्प्रयुक्तम् ॥ २६ ॥**

सात्विकस्वभावस्य **मत्पुण्यगाथाश्रवणेन अभिधानेन** उपदेशेन च **आत्मा** अन्तः-करणं यथा **परिमृज्यते** शुद्ध्यति, कर्मरागादिदोषरहितं भवति । श्रवणावृत्तिभिः स्वयं उपदेशावृत्तिभिश्च क्रमेण दोषरहितो भवति इति भावः । **तथा तथा** अन्तःकरणं शुद्ध्यति । उपदेशक्रमेण **तत्वं** स्वतन्त्रतत्वं तदेव **सूक्ष्मम्** अव्यक्तं **पश्यति,** क्रमेण ज्ञानभक्तिवृद्धिसम्पन्नो भवति । अव्यक्तस्य कथं दर्शनम्? इत्यत आह- **चक्षुरिति । यथा चक्षुः अञ्जनसंप्रयुक्तं** सत् यथा अयोग्यमपि पश्यति तथेहापि परमात्मानुग्रहेण अव्यक्तं परमात्मानं जानाति विशेषतश्च जानातीत्यर्थः ॥ २६ ॥

---

[1] अयं सुधीन्द्रतीर्थीयानुसारी सम्भावितः पाठः । मूलपुस्तके तु 'अन्तःकरणेन विशिष्टरूपं' इति पठ्यते ।

ननु अथासक्तिस्वभावं मनः विषयान् परित्यज्य ईश्वरं कथं विषयीकुर्यात् इति जिज्ञासायामाह- **विषयानिति ।**

**विषयान् ध्यायतश्चित्तं विषयेषु विषज्जते ।**
**मामनुस्मरतश्चित्तं मय्येव प्रविलीयते ॥ २७ ॥**

यथा **चित्तं विषयेषु विषज्जते** सक्तं भवति तथा **मां अनुस्मरतः** ध्यायतः **चित्तं मय्येव प्रविलीयते** विषयान् परित्यज्य मयि सक्तं भवति ॥

चञ्चलत्वेऽपि मनसः सर्वदोषनिवर्तकं मम ध्यानमित्याह- **तस्मादिति ।**

**तस्मादसदभिध्यानं यथा स्वप्नमनोरथम् ।**
**हित्वा मयि समाधत्स्व मनो मद्भावभावितम् ॥ २८ ॥**

**यथा** सदृशौ स्वप्नमनोरथौ यस्य तत् । स्वप्नादिवत् अविद्यमानविषयकं असति= स्वाधीनतया अविद्यमाने अस्थिरे वा परतन्त्रे त इति भावः, विषये **अभिध्यानं** ममैवेदं स्थायि च इति ध्यानं **हित्वा**, मद्भावेन भक्त्या भावितं= संपन्नं **मनः मयि समाधत्स्व** अचलं कुरु । मद्ध्यानं कुर्विति भावः ॥ २८ ॥

तामससङ्गिनां सङ्गो न कार्य इति अत्यन्तं हितमुपदिशति- **स्त्रीसङ्गेति ।**

**स्त्रीसङ्गसङ्गिनां सङ्गं त्यक्त्वा दूरत आत्मवान् ।**
**क्षेमे विविक्त आसीनश्चिन्तयेन्मामतन्द्रितः ॥ २९ ॥**

स्त्री= केशवे अन्यथा बुद्धिः तस्याः सङ्गः= सादरं सम्बन्धः यस्य सः **स्त्रीसङ्गः** तामसजनः । तत्सङ्गिनः राजसाः । उभयविधानां **सङ्गम्** आदरेण अवलोकनादिकं **दूरतः त्यक्त्वा आत्मवान्** सन् प्रसन्नमनाः विषयविरागात् तामसज्ञानादिराहित्याच्चेति

भावः । **विविक्ते** विषयासक्तजनरहिते । **क्षेमे** ध्यानस्य अनुकूले स्थले, **आसीनः अतन्द्रितः** आलस्यादिमनोदोषरहितः **मां चिन्तयेत्** ध्यायेत् ॥ २९ ॥

केशवे अन्यथा ज्ञानयुक्तानां सङ्गस्य अपरित्यागे महादुःखमाह- **न तथाऽस्येति** ।

**न तथाऽस्य भवेत् क्लेशो बन्धश्चान्यप्रसङ्गतः ।**
**योषित्सङ्गाद् यथा पुंसो यथा तत्सङ्गिसङ्गतः ॥ ३० ॥**

योषित्= केशवे अन्यथाज्ञानं, तद्योगात् यथा क्लेशादिः भवति । **अन्यप्रसङ्गतः** रत्यादिविषयासक्त्या तथा क्लेशादिः न भवति । अतः परमात्मनि अन्यथा ज्ञानं सुमहत् महत्तरपातकरूपं दूरतः त्याज्यमिति भावः ॥ ३० ॥

**उद्धव उवाच-**
**यथा त्वामरविन्दाक्ष कीदृशं वा यदात्मकम् ।**
**ध्यायेन्मुमुक्षुरेतन्मे ध्यानं त्वं वक्तुमर्हसि ॥ ३१ ॥**

**हे अरविन्दाक्ष ! यदात्मकं वा** कया मूर्त्या सम्पन्नं **कीदृशं** किं लक्षणं **मुमुक्षुः** ध्यायेत्, तत् **ध्यानं** ध्यानविषयमूर्तिं मूर्तिलक्षणानि च **यथा** यैरुपायैः मुमुक्षुः यायात् तानि ध्यानसाधनानि च वक्तुमर्हसि ॥ ३१ ॥

प्रथमं ध्यानोपायानाह- **सम आसन** इत्यादि ।

**श्रीभगवानुवाच-**
**सम आसन आसीनः समकायो यथासुखम् ।**
**हस्तावुत्सङ्ग आधाय स्वनासाग्रकृतेक्षणः ॥ ३२ ॥**

**प्राणस्य शोधयेन्मार्गं पूरकुम्भकरेचकैः ।**
**विपर्ययेणापि शनैरभ्यसेन्निर्जितेनिन्द्रियः ॥ ३३ ॥**

**समे=** नात्युच्छ्रिते नातिनीचे किन्तु समे **आसने** कुशाजिनचैलास्तरणे **यथासुखं** स्वस्तिकाद्यासनेन स्थितः । **समकायः** अवक्रदेहः, वक्रतया देहावस्थाने देहचलने मनसः चलनं स्यादिति भावः । **उत्सङ्गे** ऊरौ जानुसमीपे इति भावः । **स्वनासाग्रे कृतेक्षणः** दिशः अनवलोकयन्नित्यर्थः । पूरः= प्रथमं पूरणं, कुम्भकः= वायुधारणं, रेचकं= शनैर्वायुपरित्यागः एभिः व्यापारैः **प्राणस्य** वायोर्मार्गसञ्चारं शोधयेत्

वशं कुर्यात् । **विपर्ययेण** प्रथमं रेचकमनन्तरं कुम्भकं विपरीतक्रमेण वा **अभ्यसेत् ।** वायोः यथेष्टसञ्चारपरिहारं संपादयेदित्यर्थः ॥ ३३ ॥

एवं कुम्भके कर्तव्ये सति तदा मन्त्रार्थानुसन्धानमाह- **हृद्यवच्छिन्नमिति ।**

**हृद्याच्छिन्नमोङ्कारं[1] घण्टानादं बिसोर्णवत् ।**
**प्राणेनोदीर्य तत्राथ पुनः संवेशयेत् स्वरम् ॥ ३४ ॥**

हृदि स्थितेन प्राणेनाच्छिन्नं सदा उच्चार्यमाणमित्यर्थः । बिसस्य= कमलनाळस्य ऊर्णा= मृणाळसूत्रं तद्वत्स्थितं शुद्धमित्यर्थः । अविच्छिन्नं वा । मध्ये विरतिरहितं वा घण्टानादसदृशं वा शान्तातिशान्ते इति भावः । घण्टानादवत् श्रवणीयं वा एतादृशं **ओङ्कारं प्राणेन** प्राणशक्त्या **उदीर्य** उच्चार्य अथ हृदिस्थे परमात्मनि **स्वरं** ओङ्कारं उदात्तलक्षणं वा **संवेशयेत्** पुनः समर्चयेत् । ओङ्कारार्थं कल्याणगुणं पुनः ध्यायेदित्यर्थः । प्राणः स्वरोच्चारणकर्ता इति वा अनुसन्धानं कुर्यादित्यर्थः ॥ ३४ ॥

---

[1] 'हृद्यविच्छिन्नमोङ्कारं' इति पाठान्तरम् ।

**एवम्प्रणवसंयुक्तं प्राणसंयममभ्यसेत् ।**
**दशकृत्वस्त्रिषवणं मासादर्वाग् जितोऽनिलः ॥ ३५ ॥**

**एवम्** अर्थानुसन्धानसहितप्रणवेन **संयुक्तं प्राणसंयमं अभ्यसेत्** पुनः अभ्यसेत् । अभ्यासकालमाह- **त्रिषवणं** प्रातः मध्याह्ने सायाह्ने च अभ्यसेत् । **दशकृत्वः** दशप्रणव-सङ्ख्यापर्यन्तं प्रथमं एकः प्राणायामः । एवं क्रमेण सङ्ख्याम् अधिकं कुर्यात् त्रिंशत्-सङ्ख्याकैः प्रणवैः एकः प्राणायामः । अथवा दशवारं प्राणायामाभ्यासः प्रातः, मध्याह्ने, तथा (सायाह्ने) एवं क्रमेण गायत्र्या अभिवृद्धिं कुर्यादिति भावः । एवमभ्यासं कुर्वतः **अनिलः** वायुदेवता मासात्पूर्वं **जितः** प्रसन्नो भवतीत्यर्थः ॥ ३५ ॥

ध्येयमूर्तेः अधिष्ठानमाह- **हृत्पुण्डरीकेति ।**

**हृत्पुण्डरीकमन्तःस्थमूर्ध्वनाळमधोमुखम् ।**
**ध्यात्वोर्ध्वमुखमुन्निद्रमष्टपत्रं सकर्णिकम् ॥ ३६ ॥**

**कर्णिकायां न्यसेत् सूर्यसोमाग्नीनुत्तरोत्तरम् ।**
**वह्निमध्ये स्मरेद् रूपं ममैतद् ध्यानमङ्गलम् ॥ ३७ ॥**

तत्र इतिकर्तव्यमाह- **ऊर्ध्वमुखमिति । अन्तःस्थं** हृदयाकाशस्थं **ऊर्ध्वमुखं उन्निद्रम्** विकसितम् एवमादिगुणं ध्यात्वा **सकर्णिकं** पद्ममध्यस्थानं कर्णिका तया सहितम् **उत्तरोत्तरं कर्णिकायां** सूर्यः तस्योपरि सोमः तदुपरि वह्निः एवम् उत्तरोत्तरं एतान् **न्यसेत्** ध्यायेत् **मम एतत्** पौरुषं रूपं ध्यानेन मङ्गलप्रदम् ॥ ३७ ॥

**समं प्रशान्तं सुमुखं दीर्घचारुचतुर्भुजम् ।**
**सुचारुसुन्दरग्रीवं सुकपोलं शुचिस्मितम् ॥ ३८ ॥**

**समानकर्णविन्यस्तस्फुरन्मकरकुण्डलम् ।**
**हेमाम्बरं घनश्यामं श्रीवत्सं श्रीनिकेतनम् ॥ ३९ ॥**

**शङ्खचक्रगदापद्मवनमालाविभूषितम् ।**
**नूपुरैर्विलसत्पादं कौस्तुभप्रभया युतम् ॥ ४० ॥**

**द्युमत्किरीटकटककटिसूत्राङ्गदैर्युतम् ।**
**सर्वाङ्गसुन्दरं हृद्यं प्रसादसुमुखेक्षणम् ।**
**सुकुमारमभिध्यायेत् सर्वाङ्गेषु मनो दधत् ॥ ४१ ॥**

**इन्द्रियाणीन्द्रियार्थेभ्यो मनसाऽऽकृष्य तन्मनाः ।**
**बुद्ध्या सारथिना धीरः प्रणयेन्मयि सर्वतः ॥ ४२ ॥**

**तत् सर्वव्यापकं चित्तमाकृष्यैकत्र धारयेत् ।**
**नान्यानि चिन्तयेद् भूयः सुस्मितं भावयेन्मुखम् ॥ ४३ ॥**

**प्रशान्तं** प्रकृष्टानन्दस्वभावं **समं** सर्वकल्याणगुणैः मूलरूपेण समं, सर्वावयवेषु यथोचितसौन्दर्येण समं न तु विषममिति भावः । श्रीवत्सयुक्तं **श्रीनिकेतनं** कान्त्याश्रयं वा **कौस्तुभप्रभया युतं** गदादिभूषणैः सर्वावयवेषु युतं भूषितं **हृद्यं** मनःप्रीतिकरं सुकुमारवयसम् । मनसा सह **इन्द्रियार्थेभ्यः** विषयेभ्यः आकृष्य **बुद्ध्या** 'ममात्रास्ति प्रयोजनमि'ति बुद्ध्या अवधारणेन **मयि सर्वतः** सर्वावय- वेषु तन्मनः **प्रणयेत्** आसक्तं कुर्यात् । सर्वावयवविषयीकरणे अशक्तस्य एकावयवध्यानमाह- **सर्वव्यापकं** सर्वावयवेषु विषयितया प्रसक्तम् **आकृष्य एकत्र** मुखारविन्दादौ **अन्यानि** स्वदेहानुबन्धि-वस्तूनि **न चिन्तयेत् । अन्यानि** अङ्गानि वा न चिन्तयेत् । तेन सर्वध्यानाशक्तस्य

अन्यो विक्षेपपरिहार इति भावः । **भूयः** पुनः पुनः **सुस्मितं** यस्य तत् **भावयेत्** ॥ ४३ ॥

**तत्र लब्धपदं चित्तमाकृष्य व्योम्नि धारयेत् ।**
**तच्च त्यक्त्वा मदारोहो न किञ्चिदपि चिन्तयेत् ॥ ४४ ॥**

**एवं समाहितमतिर्मामेवात्मानमात्मनि ।**
**विचष्टे मयि सर्वात्मन् ज्योतिर्ज्योतिषि संयुतम् ॥ ४५ ॥**

**तत्र** एकैकावयवे **लब्धपदं** सक्तं दृढवासनोपेतं इति भावः । **व्योम्नि** व्याप्तसर्वावयवैः संपन्ने रूपे **धारयेत्** सर्वाङ्गेषु चित्तं धारयेदित्यर्थः । एवं प्रयत्नेन प्राप्तध्यानस्य फलमाह- **तच्च त्यक्त्वेति । मदारोहः** ममारोहः मनसः प्रयत्नं विना स्वतः आसक्तिः यस्य सः योगी यद्ध्यानार्थं प्रयत्नादिसाधनं तत्रत्यं **मां विचष्टे** पश्यति । **सर्वात्मन्** सर्वस्वामिनि **ज्योतिषि मयि संयुतं ज्योतिः** जीवं पश्यति जीवबिम्बं च तत्वदेवान् उपदेशध्यानादिना पश्यतीति भावः ॥ ४५ ॥

**ध्यानेनेत्थं सुतीव्रेण युञ्जतो योगिनो मनः ।**
**संयास्यत्याशु निर्वाणं द्रव्यज्ञानक्रियाभ्रमः ॥ ४६ ॥**

**॥ इति श्रीमद्भागवते एकादशस्कन्धे चतुर्दशोऽध्यायः ॥**

**इत्थं ध्यानेन** स्वतःप्राप्तेन ध्यानेन साधनेन **युञ्जतः** अपरोक्षयोगवतः **योगिनः** द्रव्येषु ज्ञानेषु क्रियासु भ्रमः= अहमेव कर्तेति भ्रमः यस्मात् तत् । अहङ्काररूपं मनः **निर्वाणं** नाशं यास्यति ॥ ४६ ॥

॥ इति श्रीयादवेन्द्रयतिविरचिते एकादशस्कन्धव्याख्याने चतुर्दशोऽध्यायः ॥

# 15 | पञ्चदशोऽध्यायः

अपरोक्षस्य अवान्तरफलमाह- **जितेन्द्रियस्येति ।**

**श्रीभगवानुवाच-**

**जितेन्द्रियस्य युक्तस्य जितश्वासस्य योगिनः ।**

**मयि धारयतश्चेत उपतिष्ठन्ति सिद्धयः ॥ १ ॥**

**युक्तस्य** मदपरोक्षसम्पन्नस्य स्वत एव मयि मनोयोगः यस्य इति वा । अणिमादिसिद्धिषु अपेक्षितां सिद्धिमुद्दिश्य **मयि चेतः धारयतः सिद्धयः** अपेक्षिताः **उपतिष्ठन्ति** प्राप्नुवन्तीत्यर्थः ॥ १ ॥

मयि धारयत इति सामान्येनोक्तम् । विशेषजिज्ञासया पृच्छति- **कयेति ।**

**उद्धव उवाच-**

**कया धारणया कास्वित् कथं वा सिद्धिरच्युत ।**

**कति वा सिद्धयो ब्रूहि योगिनां सिद्धिदो भवान् ॥ २ ॥**

धारणाविशेषः कः ? तत्प्राप्त्या **का सिद्धिः ?** सिद्धिविशेषश्च कः ? कथं ? किं धारणामात्रेण भवन्ति वा ? किं लौकिकसाधनसम्पत्तिमपेक्ष्य भवन्ति सिद्धयः ? किं वा तामनपेक्ष्य विद्युदादिप्रकाशवत् भवन्ति ? इत्यर्थः । **भवान्** यतः **योगिनां सर्वसिद्धिदः,** अतः सर्वसिद्धिं जानासि इति भावः । अतो ब्रूहीत्यर्थः ॥ २ ॥

**श्रीभगवानुवाच-**

**सिद्धयोष्टादश प्रोक्ता धारणायोगपारगैः ।**

**तासामष्टौ मत्प्रधानास्ता एव गुणहेतवः ॥ ३ ॥**

धारणा= सात्त्विकमनसः परमात्मनि स्वतः प्रवृत्तिस्थैर्यम् । स एव योगः= उद्रिक्तभक्तेः उपायः । तस्य पारं= पूर्तिं अविलम्बेनापरोक्षं फलं च सिद्धिं प्राप्तैः **तासां** अष्टादशसिद्धीनां मूलभूताः **अष्टौ** सिद्धयः **मत्प्रधानाः** मय्येव प्रधानाः सन्ति । मयि स्वभावतः पूर्णाः, देवादिषु सिद्धयो मया दत्ताः स्वल्पा इति भावः । एता **गुणहेतवश्च** गुणानां= उपसर्जनानां अनूर्मिमत्वादीनां सिद्धीनां हेतवः ॥ ३ ॥

व्यावृत्ततया ज्ञानार्थं सिद्धीनां नामान्याह- **अणिमेति ।**

**अणिमा महिमा मूर्तेर्लघिमा प्राप्तिरिन्द्रियैः ।**

**प्राकाश्यं श्रुतदृष्टेषु शक्तिप्रेरणमीशिता ॥ ४ ॥**

**(मूर्तेः)** स्वरूपस्य अणिमादिसिद्धयः ज्ञेयाः । **इन्द्रियैः** अन्येन्द्रियैः विषय-प्राप्तिः । श्रुतेषु दृष्टेषु वस्तुषु **प्राकाश्यं** शक्तिप्रेरणमेव ईशितृत्वम् ॥ ४ ॥

**गुणेष्वसङ्गो वशिता यत्कामस्तदवाप्स्यति ।**

**एता मे सिद्धयः सौम्य अष्टावौत्पत्तिका मताः ॥ ५ ॥**

गुणेष्वसङ्ग एव वशित्वम् । यत्= यादृशे आनन्दे कामः= अपेक्षा **तदवाप्स्यति** तत्प्राप्नोति चेत् सा प्राप्तिः प्राकाम्यसिद्धिः । **एता** अणिमा महिमा[1] लघिमा प्राप्तिः प्राकाश्यं[2] ईशिता वशिता (प्राकाम्यं) इत्येताः सिद्धयः **मे औत्पत्तिकाः** स्वभावधर्माः कारणप्राप्ता न भवन्ति ॥ ५ ॥

---

[1] अत्र 'गरिमा' इत्यधिकं पठ्यते । तत्तु तात्पर्यविरुद्धत्वात् सम्पातायातं स्यात् । [2] अत्र 'प्राकाम्यम्' इति पठ्यते, प्राकाश्यं च न पठ्यते ।

प्रधानसिद्ध्यतिरिक्तसिद्धीनां प्रभेदानाह- **अनूर्मिमत्वमिति** ।

**अनूर्मिमत्त्वं देहेऽस्मिन् दूरश्रवणदर्शनम् ।**
**मनोजवः कामरूपं परकायप्रवेशनम् ॥ ६ ॥**

**स्वच्छन्दमृत्युर्देवानां सहक्रीडानुदर्शनम् ।**
**यथासङ्कल्पसंसिद्धिराज्ञाऽप्रतिहतागतिः ॥ ७ ॥**

**त्रिकालज्ञत्वमद्वन्द्वं परचित्ताद्यभिज्ञता ।**
**अग्न्यर्काम्बुविषादीनां प्रतिस्तम्भोऽपराजयः ॥ ८ ॥**

**एताश्चोद्देशतः प्रोक्ता योगधारणसिद्धयः ।**
**यया धारणया या स्याद् यथा वा स्यान्निबोध मे ॥ ९ ॥**

आ समन्तात् गतिः यस्या आज्ञायाः सा **अप्रतिहतागतिः** । 'विषादीनां' इत्यादिशब्देन शार्दूलनखशस्त्रादिकं गृह्यते । ऋष्यादीनां योगधारणाप्राप्ताः सिद्धयः प्रधाना अप्रधानाः सर्वा अपि गरिम्णा सह सप्तविंशतिरिति भावः । सिद्धयः सर्वा अन्तर्भावविवक्षया श्रीमद्भागवततात्पर्यनिर्णये स्पष्टं निरूपिता अनुसन्धेयाः । कया धारणया इति प्रश्ने उत्तरमाह- **यया धारणयेति । यया धारणया सिद्धिःस्यात्** भवति **यथा वा स्यात्** येन प्रकारेण लौकिकसाधनानि विना स्यात् तान् कथयामीति बोधः ॥ ९ ॥

**भूतसूक्ष्मात्मनि मयि तन्मात्रे[1] धारयन् मनः ।**
**अणिमानमवाप्नोति तन्मात्रोपासको मम ॥ १० ॥**

---
[1] 'तन्मात्रं' इति पाठान्तरम् ।

भूतसूक्ष्मः पृथिव्यादेरणु । तस्मिन् स्थिते **आत्मनि** तन्नियामके[1] **तन्मात्रे** पृथिव्यणुसदृशपरिमाणे मयि मनः **धारयन्** योजयन् मम तन्मात्रोपासकः अणुसदृशपरिमाणोपासकः तथा मदपरोक्षवान् **अणिमानं** स्वदेहस्याणुत्वमवाप्नोति । अणिमामहिमादिकं च तात्पर्योक्तं ग्राह्यम्[2] । अणुत्वप्राप्तौ कारणान्तरमाह- **तन्मात्रोपासक** इति तन्मात्रगताणुरूपोपासकः[3] अणिमानं प्राप्नोति ॥ १० ॥

**महत्यात्मन् मयि परे यथासंस्थं मनो दधत् ।**
**महिमानमवाप्नोति भूतानां च पृथक्पृथक् ॥ ११ ॥**

**परमाणुमये चित्तं भूतानां मयि रञ्जयन् ।**
**कालसूक्ष्मात्मके योगी लघिमानमवाप्नुयात् ॥ १२ ॥**

महति स्थिते आत्मनि= आकाशादिनियामके **परे मयि** मनो धारयन् **यथासंस्थं** सूक्ष्मत्वेन महत्सदृशपरिमाणत्वेन स्थितं प्रति **मनो दधत्** ध्यानं कुर्वन् इत्यर्थः । **महिमानं** अप्रतिघातं देहमहत्त्वमवाप्नोति । अणुत्वमहत्त्वपरिमाणे प्राप्नोति इत्युक्तं, तत्र विशेषमाह- **भूतानामिति । भूतानां** प्राणिनां सकाशात् **पृथक्** विलक्षणं अणुत्वं **पृथक्** विलक्षणं महत्त्वं वा अपेक्षितम् **अवाप्नोति** इत्यर्थः । न तु ईश्वरवत् अणुत्वमहत्वप्राप्तिरिति भावः । पृथिवीलक्षणगुरुपदार्थगतस्य गुरुत्वेन ध्यानात् गरिमाणम् अवाप्नोति इति भावः । तात्पर्ये महिमाहेतुधारणासदृशधारणा (गरिम्णः हेतुत्वेन) विवक्षिता । **कालसूक्ष्मात्मके** अणुकालस्य लघुत्वनियामके **परमाणुमये** कालवत् अणुत्वोपेते **मयि चित्तं रञ्जयन्** लघुतया ध्यायन् इत्यर्थः । कालस्य पृथिवीविकारत्वाभावेन

---

[1] 'भूतसूक्ष्माणामात्मनि पार्थिवादिपरमाणूनां नियामके' इति वा स्यात् । [2] अत्र 'तन्मात्रमिति परे' इत्यधिकं पठ्यते मूलपुस्तके । सम्पातायातं स्यात् । [3] अत्र तन्मात्रशब्देन भूतानामुपादानभूतशब्दादिसूक्ष्मावयवा उच्यन्त इति भाति ।

लघुत्वादिति भावः । **भूतानां** लघूनां सकाशात् अपेक्षितं **लघिमानं अवाप्नोति ॥** १२ ॥

**धारयन् मय्यहन्तत्वे मनो वैकारिकेऽखिलम् ।**
**सर्वेन्द्रियाणामात्मत्वं प्राप्तिं प्राप्नोति मन्मनाः ॥ १३ ॥**

वैकारिकरूपे **अहन्तत्वे** स्थिते **मयि अखिलं मनः धारयन्** इन्द्रियोपजीव्यतया मां ध्यायन् इत्यर्थः । **सर्वेन्द्रियाणां** अन्येन्द्रियाणां च **आत्मत्वं** स्वेच्छया प्रवृत्तिनियामकत्वम् आप्नोति । अनन्तरं **मन्मनाः** योगी **प्राप्तिम्** अन्येषाम् इन्द्रियैः विषयप्राप्तिं विषयानुभावं **प्राप्नोति ॥** १३ ॥

**महत्यात्मनि यः सूत्रे धारयन् मयि मानसम् ।**
**प्राकाश्यं पारमेष्ठ्यं मे विन्दतेऽव्यक्तजन्मनः ॥ १४ ॥**

**महति** स्थिते **सूत्रे** ब्रह्मणि **आत्मनि** अन्तर्यामिणि **मयि यः** योगी **मानसं धारयन्** ब्रह्मणः यत्सर्वज्ञानं तत्प्रदातृत्वं मयि ध्यायेदित्यर्थः । अव्यक्तस्य= जडप्रकृतेः जन्म= परिमाणलक्षणविकारः येन तस्य **मे** मत्सकाशात् **पारमेष्ठ्यं** ब्रह्मप्रसादात् प्राप्यं **प्राकाश्यं** वेदतदर्थज्ञानप्रकाशरूपं सिद्धिं विन्दते ॥ १४ ॥

**विष्णौ चाधीशवरे चित्तं धारयन् कालविग्रहे ।**
**स ईशित्वमवाप्नोति क्षेत्रक्षेत्रज्ञचोदनम् ॥ १५ ॥**

कालः विग्रहः= अधिष्ठानं यस्य सः तस्मिन् स्थितिकालनियामके इत्यर्थः, **विष्णौ** अधीश्वरत्वसंपन्ने मनः धारयन्, अधीश्वरत्वगुणं ध्यायन् इत्यर्थः । क्षेत्रे= शरीरे स्थितः यः क्षेत्रज्ञः= जीवः चेतनं तस्य व्यापारेषु प्रेरणलक्षणं नियमनं येन

ईशित्वेन भवति तत् क्षेत्रक्षेत्रज्ञचोदनरूपम् ईशित्वसिद्धिम् अवाप्नोति । ईशितादयः तात्पर्योक्ता ग्राह्याः ॥ १५ ॥

**नारायणे तुरीयाख्ये भगवच्छब्दशब्दिते ।**

**मनोमय्यादधद्योगी मद्धर्मो वशितामियात् ॥ १६ ॥**

**मद्धर्मः** असङ्गलक्षणमद्धर्मयुक्तः **योगी मयि मनः** दधन् वशित्वगुणं धारयन् इत्यर्थः । **वशितां** सिद्धिं **इयात्** प्राप्नुयात् ॥ १६ ॥

**निर्गुणे ब्रह्मणि मयि धारयन् विशदं मनः ।**

**परमानन्दमाप्नोति यत्र कामोऽवसीयते ॥ १७ ॥**

**निर्गुणे** गुणेभ्यो निष्क्रान्ते सत्वादिगुणप्राप्तधर्मविपरिवृत्तिरहिते इत्यर्थः । **विशदं** रजस्तमोभागरहितं **मनः धारयन् यत्र** आनन्दे **कामः** अपेक्षा **अवसीयते** समाप्ता भवति तस्मिन् आनन्दे सिद्धे आनन्दाकाङ्क्षा नोदेति तं परमानन्दप्राप्तिलक्षणं प्राकाम्यसिद्धिं प्राप्नोति ॥ १७ ॥

अमुख्यसिद्ध्यप्राप्त्यै[1] कारणमाह- **श्वेतद्वीपपताविति ।**

**श्वेतद्वीपपतौ चित्तं शुद्धे धर्ममये मयि ।**

**धारयन् श्वेततां याति षडूर्मिरहितोऽमरः ॥ १८ ॥**

**धर्ममये** धर्मः श्रवणादिलक्षणः प्रधानः यस्मिन् विषये तस्मिन् । स्वप्राप्तिसाधनेषु प्रधानश्रवणादिविषय इति भावः । **शुद्धे** दुःखादिप्राप्तविकाररहिते मयि **षडूर्मिरहितः** पितृदेहे रेतसि अस्ति, जायते, वर्धते, क्षीयते, अपक्षीयते, म्रियते इति षडूर्मयः,

[1] 'मुख्यसिद्धिप्राप्त्यै' इति पाठः सम्भाव्यते ।

तद्रहितः तन्निरसनसमर्थः । **अमरः** अमरसदृशः योगी **चित्तं धारयन्** दुःखादिदोष-रहिततया मां ध्यायन् **श्वेततां** निर्दुःखत्वलक्षणं अनूर्मिमत्त्वं याति ॥ १८ ॥

**मय्याकाशात्मनि प्राणे मनसा घोषमुद्वहन् ।**
**तत्रोपलब्धाभूतानां हंसो वाचः श‍ृणोत्यसौ ॥ १९ ॥**

**हंसः** अहङ्कारभ्रमपरित्यागवान् । **असौ** उपासकः **आकाशात्मनि** आकाशनियामके प्राणे स्थिते **मयि घोषं** आकाशशब्दकर्तृत्वं **उद्वहन्** ध्यायन्नित्यर्थः । तत्राकाशे उपलब्धानि= प्राप्तानि यानि **आ** समन्तात् स्थितानि भूतानि तेषां **वाचः** श‍ृणोति । दूरश्रवणलक्षणसिद्धिसंपन्नो भवति ॥ १९ ॥

**चक्षुस्त्वष्टरि संयोज्य त्वष्टारमपि चक्षुषि ।**
**मां तत्र मनसा ध्यायन् विश्वं पश्यति सूक्ष्मदृक् ॥ २० ॥**

**चक्षुः त्वष्टरि** सूर्ये **संयोज्य** सूर्याधीनं ज्ञात्वा । **चक्षुषि त्वष्टारं** नियामकत्वेन स्थितं ज्ञात्वा तत्र चक्षुस्सूर्ययोः स्थितं **मां** उभयनियामकत्वेन **ध्यायन् सूक्ष्मदृक्** अतीन्द्रियदर्शनशक्तिसम्पन्नः सन् विश्वं सर्वं पश्यति ॥ २० ॥

**मनो मनसि संयोज्य देहं तदनु वायुना ।**
**मद्धारणानुभावेन तत्रात्मा यत्र वै मनः ॥ २१ ॥**

मनोलक्षणं **देहं,** देहस्य इन्द्रियसङ्घातरूपत्वादिति भावः । **मनसि** मनस्तत्वे इन्द्रे **वायुना** सह प्राणवायुना सह **संयोज्य** तदधीनं ध्यात्वा, वायुधारणया सहेति वा तत्र मनोनियामके स्थितमद्धारणा मनोनियामकत्वध्यानं [1] तत्सामर्थ्येन 'यत्र देशे

[1] अयं गोविन्दाचार्यैरुदाहृतः पाठः । अस्मत्पुस्तके तु 'स्थितमद्धारणानुभावेन मनोनियामकत्वं ध्यायन्' इति पठ्यते ।

स्थातव्यमि'ति बुद्धिं मनः करोति **तत्र आत्मा** देहोऽपि गच्छति । इयं मनोजवसिद्धिः ॥ २१ ॥

**यदा मन उपादाय यद्यद् रूपं बुभूषति ।**
**तत्तद् भजेन्मनोरूपं मद्योगबलमाश्रितः ॥ २२ ॥**

योगी **मन उपादाय** ध्याने नियम्य **मद्योगबलं** सिंहगजादिगतसिंहगजाद्याकार-ध्यानलक्षणं बलम् **आश्रितः** यदा **यद्यद्रूपं** सिंहगजादिरूपं **बुभूषति** सिंहादिरूपी स्याम् इति इच्छति **तत्तत्मनोरूपम्** अपेक्षितं देहं तदा **भजेत्** प्राप्नुयात् ॥ २२ ॥

**परकायं विशन् सिद्ध आत्मानं तत्र भावयेत् ।**
**पिण्डं हित्वा विशेत् प्राणो वायुभूतः षडङ्घ्रिवत् ॥ २३ ॥**

षण्णां इन्द्रियविषयाणां अङ्घ्रिः लङ्घनं यस्य सः जितेन्द्रिय इत्यर्थः । **सिद्धः** योगी यं परस्य कायं **विशन्**[1] स्यात् **तत्र** परस्य देहे **आत्मानं** स्वान्तर्यामिणं[2] भावयेत्, प्राणस्थितं ध्यायेदित्यर्थः । **प्राणः** सर्वव्यापारकर्ता परमात्मा **वायुभूतः** प्राणवायुस्थितः योगिनं आदायेति भावः । **पिण्डं** देहं **हित्वेव** आविशेत् । षडङ्घ्रिः षट्पदः यथा अवकाशं प्रविशति तथा स्वेच्छया अनायासेनेति भावः[3] ॥ २३ ॥

**पार्ष्ण्यापीड्य गुदं प्राणं हृदुरःकण्ठमूर्धसु ।**
**आरोप्य ब्रह्मरन्ध्रेण ब्रह्म नीत्वोत्सृजेत् तनुम् ॥ २४ ॥**

---

[1] 'विशन् प्रवेक्ष्यन् प्रवेष्टुकामः' इति सुधीन्द्रतीर्थीये । [2] 'परकायान्तर्यामिणं वा' इत्यधिकं मूलपुस्तके, सम्पातायातं स्यात् । [3] 'तथा आविशेदिति वाऽर्थः' इत्यधिकं मूलपुस्तके, सम्पातायातं स्यात् ।

**गुदं पार्ष्ण्या** पादस्य अपुरोभागेन **आपीड्य** सम्यक् निरुद्ध्य **हृदुरःकण्ठमूर्धसु** स्थानेषु **प्राणं** वायुम् **आरोप्य ब्रह्म नीत्वा** बहिःष्ठे ब्रह्मणि प्राणं स्मृत्वेत्यर्थः । ब्रह्मरन्ध्रेण प्राणं नीत्वा **तनुम् उत्सृजेत्** । इदं स्वच्छन्दमृत्युत्वम् ॥ २४ ॥

**विहरिष्यन् सुराक्रीडे मत्स्थं सत्वं विभावयेत् ।**
**विमानेनोपतिष्ठन्ति सत्ववृत्तिं सुरस्त्रियः ॥ २५ ॥**

**सुराक्रीडे** देवताक्रीडास्थले देवोद्यानादिषु **विहरिष्यन्** विहर्तुमिच्छन्, **सत्वं** गुणं **मत्स्थं** मया नियम्यं यदा **विभावयेत्**, तदा **सत्ववृत्तिं** सत्वे स्थितमदपरोक्षोपेतं योगिनं, **सुरस्त्रियः विमानेन** सह **उपतिष्ठन्ति** समीपं प्राप्नुवन्ति । इदं सहक्रीडानुदर्शनं च इन्द्रादिदेवातिरिक्तदेवैः सह तत्सञ्चारार्हप्रदेशे सञ्चार इति भावः ॥ २५ ॥

**यथा सङ्कल्पयेद् बुद्धया यथा वा मत्परः पुमान् ।**
**मयि सत्ये मनो युञ्जन् तथा तत् समवाप्नुते**[1] **॥ २६ ॥**

**मत्परः** मय्यासक्तः अहं परः सर्वस्मात् स्वदेहादेः सकाशात् प्रीतिविषयः यस्य सः पुमान् ध्यानादौ समर्थः सन्, यथा यमर्थं **सङ्कल्पयेत्** इदं मह्यं भूयादिति तथा तं संकल्पविषयं अश्नुते इति[2] सङ्कल्पविषयस्य गुणस्य मयि ध्यानं, तद्गुणप्राप्तौ कारणमित्याशयेनाह- **मयि सत्य** इति । सत्यसंकल्पे मयि यथा संकल्पत्वमनतिक्रम्य मनः युञ्जन् सत्यसङ्कल्पत्वं मयि ध्यायन् इत्यर्थः । **तत्** सत्यसंकल्पत्वं समवाप्नुते ॥ २६ ॥

**यो वै मद्भावमापन्न ईशितुर्वशितुः पुमान् ।**
**न कुतश्चन हन्येत तस्य चाज्ञा यथा मम ॥ २७ ॥**

---

[1] 'समुपाश्नुते' इति पाठान्तरम् । [2] अत्र 'नियमः' इत्यधिकं मूलपुस्तके ।

**यः पुमान्** योगी **ईशितुः** सर्वेश्वरस्य **वशितुः** सर्ववशीकरणसमर्थस्य, मत्= मम भावं= ईशित्ववशित्वगुणध्यानमापन्नः तस्य= योगिनः आज्ञा कुतश्चन उत्तमदेवव्यतिरिक्तेभ्यः इति भावः, **न हन्येत** । ममाज्ञा यथा च न वरैर्हन्यते तथा ॥ २७ ॥

**मद्भक्त्या शुद्धसत्वस्य योगिनो धारणाविदः ।**
**तस्य त्रैकालिकी बुद्धिर्जन्ममृत्यूपबृंहिता ॥ २८ ॥**

**शुद्धसत्वस्य** रजस्तमोविकाररहितचित्तस्य **धारणाविदः** कालत्रयगतवस्तुनियामकत्वध्यानवतः **त्रैकालिकी** कालत्रयविषयिणी बुद्धिर्भवति । **जन्ममृत्यूपबृंहिता** एतद्विषयिणी च भवति । भुविस्थस्यापि स्वजातिस्मरणं भवतीति वा । इदं त्रिकालज्ञत्वम् ॥ २८ ॥

**अग्न्यादिभिर्न हन्येत मुनेर्योगमयं वपुः ।**
**मद्योगश्रान्तचित्तस्य यादसामुदकैर्यथा ॥ २९ ॥**

मद्योगेन= अग्निस्थस्य मम दाहकत्वादिशक्त्यभिभावकशक्तिध्यानेन श्रान्तं= पूर्णं चित्तं यस्य तस्य **मुनेः**, **योगमयं** प्रचुरध्यानसम्पन्नं **वपुः** अग्न्यादिदाहकशक्तिभिः **न हन्येत** । **यादसां** मत्स्यादीनां वपुः यथा **उदकैर्न** हन्यते तथा ॥ २९ ॥

**मद्विभूतीरभिध्यायन् श्रीवत्सास्त्रविभूषिताः ।**
**ध्वजातपत्रव्यजनाः स भवेदपराजितः ॥ ३० ॥**

श्रीवत्सकेन अस्त्रैः= चक्रगदादिभिः विभूषिता= युक्ताः गरुडध्वजः आतपत्रं= धवळच्छत्रं व्यजनानि । मद्विभूतीः यः ध्यायन्नास्ते योगी सः अपराजितत्वसिद्धिं प्राप्नुयात् ॥ ३० ॥

**उपासकस्य मामेवं योगधारणया पुनः ।**
**सिद्धयः पूर्वकथिता उपतिष्ठन्त्यशेषतः ॥ ३१ ॥**

**एवं योगधारणया** वायुपरमात्मोपासनया वायुपरमात्मापरोक्षं प्राप्नोति इति भावः । **पुनः** तत्तदभीष्टप्राप्तीच्छाकाले एवं मा**मुपासकस्य सिद्धयः** अपेक्षानुसारेण उपतिष्ठन्ते ॥ ३१ ॥

**जितेन्द्रियस्य दान्तस्य जितश्वासात्मनो मुनेः ।**
**मद्धारणां धारयतः का नु सिद्धिः सुदुर्लभा ॥ ३२ ॥**

**मद्धारणां** मय्यप्रयत्नध्यानं **धारयतः** दीर्घकालं निरन्तरं कुर्वतः अपवर्गमपि साधयति[1] (लौकिकी) सिद्धिः का दुर्लभा ? सर्वाः सिद्धयः सुलभाः[2] इत्यर्थः ॥ ३२ ॥

एवं सत्यपि योगिनाम् उक्तसिद्धिषु आदराभावः कुतः ? इति जिज्ञासायामाह- **अन्तरायानिति ।**

**अन्तरायान् वदन्त्येतान् युञ्जतो योगमुत्तमम् ।**
**मया सम्पद्यमानस्य कालक्षेपणहेतवः ॥ ३३ ॥**

**उत्तमं योगं** स्वयोग्यज्ञानपूर्तिमुद्दिश्य **युञ्जतः** सद्गुणध्यानं कुर्वतः चेतनस्य योगिनः ज्ञाननिपुणा **अन्तरायान्** ज्ञानपूर्तेः व्यवधायकान् **वदन्ति ।** अतो मुनीनाम् ऐश्वर्यानुभवे उपेक्षेति भावः । मुनीनां अणिमाद्युपेक्षायां कारणान्तरं चाह- **मया सम्पाद्यमानस्येति ।** मत्समीपं प्राप्तुकामस्य **कालक्षेपणे** कालविळम्बे **हेतवश्च ।** अतः केचन योगिनः अणिमादिषु आदरं न कुर्वन्तीति भावः ॥ ३३ ॥

---

[1] अत्र 'इति भावः' इत्यधिकं मूलपुस्तके, सम्पातायातं स्यात् । [2] अत्र 'लौकिका इति भावः' इत्यधिकं मूलपुस्तके, सम्पातायातं स्यात् ।

प्राप्तिप्राकाम्यादिसर्वसिद्धिप्राप्तौ ध्यानमेव सुलभोपाय इत्याह- **जन्मौषधीति** ।

**जन्मौषधितपोमन्त्रैर्यावतीरिह सिद्धयः ।**
**योगेनाप्नोति ताः सर्वा यैर्यैर्योगगतिं व्रजेत् ॥ ३४ ॥**

**इह** लोके यैः कैश्चिदेव **जन्मौषधितपोमन्त्रैः** जन्मानि= देहेषु गन्धर्वादिषु उत्पत्तयः, ओषधिः = लता विशल्यकरणादिः, तपः= ऐश्वर्यप्राप्तये क्रियमाणं अग्निस्तम्भनादिमन्त्राश्च[1] तैः **योगगतिं** योगप्राप्यफलं व्रजेत् । ताः सर्वाः सिद्धयः योगी ध्यानेन आप्नोति । विविधलौकिकमण्योषध्यादिसाधनानुसरणम् आयासकरमिति भावः । अथवा सिद्धयः काश्चन देवैरेव प्राप्या इत्याह- **यैरिति । यैर्यैः** देवविशेषैः या याः सिद्धयः प्राप्याः स देव एव तास्ताः योगगतीः सिद्धीः धारणां विनाऽपि व्रजेत् इत्यर्थः । देवयोग्यसिद्धीरन्ये नाप्नुवन्तीति भावः ॥ ३४ ॥

जन्मौषधादिप्राप्यसिद्धीनामपि मत्प्रसाद एव प्राप्तिकारणमित्याह- **सर्वासामिति** ।

**सर्वासामपि सिद्धीनां हेतुः पतिरहं प्रभुः ।**
**अहं योगस्य साङ्ख्यस्य धर्मस्य ब्रह्मवादिनाम् ॥ ३५ ॥**

**अहमात्माऽन्तरो बाह्योऽनावृतः सर्वदेहिनाम् ।**
**यथा भूतानि भूतेषु बहिरन्तस्त्वहं तथा ॥ ३६ ॥**

**॥ इति श्रीमद्भागवते एकादशस्कन्धे पञ्चदशोऽध्यायः ॥**

**सर्वासां** धारणाप्राप्यानां तदन्यमन्त्रौषधादिप्राप्याणां च सिद्धीनाम् **अहं हेतुः** प्राप्तिकारणम्, **पतिः** संरक्षणकर्ता च तत्र निमित्तमाह- **प्रभुरिति** । निग्रहानुग्रहादिसर्व-

---

[1] अयं बन्नञ्जे-गोविन्दाचार्यैरुदाहृतः पाठः । मूलपुस्तके तु 'अग्निस्तम्भनादिमणिमन्त्राश्च' इति पठ्यते ।

सामर्थ्ययुक्तो यतः अतः पतिः । उद्धवे आदरातिशयात् विविधान् स्वगुणानाह- अहं **ब्रह्मवादिनां** परब्रह्मोपदेष्टॄणां योगस्य धर्मप्रतिपादकयोगस्य ध्यानस्य वा **साङ्ख्यस्य** ज्ञानप्रतिपादकशास्त्रस्य **धर्मस्य पतिः** पालकः । अहं **सर्वदेहिनाम् अन्तरः** हृदयस्थः **आत्मा** अन्तर्यामी । अथापि **अनावृतः** देहप्राप्यैः विपर्ययादिभिः आवृतो न । **बाह्यः** सर्वदोषविदूरः, **बाह्यः** सर्वत्र व्याप्तः इति वा, इन्द्रियविषयादिसर्ववस्तुशक्तिप्रेरणार्थ-मिति भावः । स्वव्याप्तौ असंभावनाम् आशङ्क्य दृष्टान्तप्रदर्शनेन परिहरति **यथा भूतानीति ।** आकाशवाय्वादीनि भूतानि देहिनां बहिरन्तः यथा व्याप्नुवन्ति एवमिति भावः ॥ ३६ ॥

॥ इति श्रीयादवेन्द्रयतिविरचिते एकादशस्कन्धव्याख्याने पञ्चदशोऽध्यायः ॥

# 16 | षोडशोऽध्यायः

उद्धवः 'मद्विभूतीरभिध्यायन्' इत्यनेन विभूतीः प्रत्यभिज्ञाय विभूतिमूर्तिविशेष-ज्ञानार्थं प्रसङ्गं करिष्यन् हर्षात् कृष्णं स्तौति- **त्वं ब्रह्मेति ।**

**उद्धव उवाच-**

**त्वं ब्रह्म परमं साक्षादनाद्यन्तमपावृतम् ।**
**सर्वेषामपि भावानां प्राणः स्थित्यप्ययोद्भवः ॥ १ ॥**

हे कृष्ण ! ब्रह्मा चतुर्मुखः, ततः परमं ब्रह्म चित्प्रकृतिः, **त्वं** ततः **साक्षात्** प्राधान्येन **परमं ब्रह्म** असि महद्ब्रह्मेत्यर्थः । अथवा **त्वं ब्रह्म** समृद्धः, समृद्धिश्च निरतिशयं तवास्तीत्याह- **परममिति ।** त्वं निरतिशयेन पूर्ण इत्यर्थः । पूर्णकल्याण-गुणपूर्णत्वं न कस्यापीति भावः । अपावृताः मुक्ताः, त्वन्तु साक्षादपावृतः स्वसाम-र्थ्येन नित्यं मुक्तः । इन्दिरा च परमात्मेच्छया ज्ञानाभिवृद्धिसंपन्ना इति भावः । त्वं यत् **अनाद्यन्तम्,** आदिः स्वापेक्षया पूर्वं विद्यमानं कारणमिति यावत्, तद्रहितम् । अन्तरहितं च एतादृशः असि । स्वयं कारणाऽजन्यत्वे सर्वकारणं कथं न स्यात् इति भावः । सर्वेषां भावानां चेतनाचेतनवस्तूनां परतन्त्राणाम् इति भावः । यः **प्राणः** व्यापारप्रेरकः, स्थितिः= अन्नादिदानेन पालनम्, अप्ययः= बन्धनाशः[1] उद्भवः एते यतो भवन्ति त्वं सोऽसि ॥ १ ॥

**उच्चावचेषु भूतेषु दुर्ज्ञेयमकृतात्मभिः ।**
**उपासते त्वां भगवन् याथातथ्येन ब्राह्मणाः ॥ २ ॥**

---
[1] 'नाशः' इत्येव स्यादिति भाति ।

उच्चानि महान्ति अवचानि अस्थूलानि तेषु भूतेषु विद्यमानेषु चेतनाचेतनेषु सन्तमपि, अकृतः= अशुद्धः आत्मा= मनो येषान्ते तैर्दुर्ज्ञेयः । **उच्चावचेषु** सर्वचेतनेषु स्थितं त्वां **ब्राह्मणाः** पदार्थज्ञानवन्तः[1] **उपासते** । केचित् जगत्कर्तृत्वादिगुणरहितं ब्रह्मेति उपासते । न तथेत्याह- **याथातथ्येनेति** । परमार्थतया गुणानाम् उपास्तिं कुर्वन्तीत्यर्थः । निर्गुणोपासकास्तु तमोयोग्या इति भावः ॥ २ ॥

**येषु येषु च भावेषु यथा त्वां परमर्षयः ।**
**उपासीनाः प्रपद्यन्ते संसिद्धिं तद् वदस्व मे ॥ ३ ॥**

परमर्षयः उपासनाविशेषाधिकारिणः इति भावः । **येषु येषु भावेषु** देवादिषु **येषु येषु** स्थावरेषु **यथा** येन प्रकारेण **त्वाम् उपासीनाः** उपासनं कुर्वन्त इत्यर्थः । **त्वां प्रपद्यन्ते तत्** तां **संसिद्धिं वदस्व** वद ॥ ३ ॥

जगत्पालनादिकर्ता चेत् कृष्णः तस्य समुद्रोदकदुर्गे वासः कुतः ? इत्याशङ्क्याह- **गूढ** इति । अथवा यो गोपालकत्वेन स्थितस्तस्य क्षत्रियस्य मम वेदार्थवर्णने अधिकारः कुत इत्याशंक्याह- **गूढ** इति ।

**गूढश्चरसि भूतेषु भूतात्मा भूतभावनः ।**
**न त्वां पश्यन्ति भूतानि पश्यन्तं मोहितानि ते ॥ ४ ॥**

भवान् **भूतात्मा** अपि सर्वचेतनाचेतनान्तर्यामितया तन्नियामकोऽपि इत्यर्थः । सर्वनिग्रहानुग्रहकर्ताऽपीति भावः । **भूतभावनोऽपि** सर्वोत्पत्तिस्थित्यादिकर्ताऽपि **भूतेषु** देहधारिषु **गूढः**, तेषां ब्रह्मत्वज्ञानतिरोधानं कुर्वन् इत्यर्थः । मनुष्यव्यापारैरित्यर्थः । चरसि । अतः **पश्यन्तं** भूतादिसर्वज्ञानवन्तं **त्वां**, **भूतानि** ब्रह्मतया **न पश्यन्ति** ।

---

[1] वेदार्थज्ञानवन्त इति स्यात् ।

गोवर्धनोद्धरणादिना माहात्म्यं ज्ञातुं शक्यते? इत्याशङ्क्याह- **ते** त्वत्तः **मोहितानि** अन्यथा ज्ञानवन्ति, सैवाल्पाज्ञानादिति भावः[1] ॥ ४ ॥

स्वाभिलषितप्रश्नं दर्शयति- **याः काश्चेति ।**

**याः काश्च भूमौ दिवि वै रसायां विभूतयो दिक्षु महाविभूतेः ।**
**ता मह्यमाख्याह्यनुभावितास्ते नमामि ते तीर्थपदाङ्घ्रिपद्मम् ॥ ५ ॥**

**भूमौ दिवि** स्वर्गे **रसायां** रसातले **दिक्षु ।** महत्यः पूर्णाः विभूतयः यस्य तस्य । मूलरूपापेक्षया अंशेषु गुणवैलक्षण्यरहितस्येति भावः । याः **अनुभाविताः** ब्रह्मादिभिः पुनःपुनः ध्याताः विभूतिमूर्तयः स्वाधिष्ठानस्य सजातीयेषु उत्कर्षप्राप्तिहेतव सन्ति ता मह्यम् आख्याहि । **ते** तीर्थं= शास्त्रं तेन पद्यते= ज्ञायत इति पदं शास्त्रप्रतिपाद्यं इत्यर्थः । **अङ्घ्रिपद्मं नमामि ।** तीर्थं गङ्गादि यस्य पदाज्जातं सः तीर्थपदः, हे तीर्थपाद ! इति वा ॥ ५ ॥

**श्रीभगवानुवाच-**
**एवमेतदहं पृष्टः प्रश्नं प्रश्नविदां वर ।**
**युयुत्सुना विशसने सपत्नैरर्जुनेन वै ॥ ६ ॥**

**एतत्** विभूतिज्ञानमुद्दिश्य **एवं प्रश्नं** प्रति विभूतिविशेषप्रश्नं प्रति । **अहं पृष्टः** ज्ञानोपदेशार्थं प्रेरित इत्यर्थः । कदेति जिज्ञासायाम् आह- **विशसनेऽति ।** सपत्नैः दुर्योधनदुःशासनादिभिः सह **विशसने** युद्धे प्राप्ते सति **युयुत्सुना** योद्धुकामेन अर्जुनेन पृष्टः ॥ ६ ॥

---

[1] 'तस्यैवाल्पत्वज्ञानादिति भावः' इति पाठः सम्भाव्यते ।

युद्धकाले ज्ञानार्थं श्रवणस्य कथं सङ्गतिः ? इति जिज्ञासायामाह- **ज्ञात्वा ज्ञातिवधमिति** ।

**ज्ञात्वा ज्ञातिवधं गर्ह्यमधर्म्यं राज्यहैतुकम् ।**
**ततो निवृत्तो हन्ताऽहं हतोऽयमिति लौकिकः ॥ ७ ॥**

**गर्ह्यं** निन्दितं, हिंसारूपत्वात् । **अधर्म्यं** अधर्मादनपेतं अधर्मकारणमित्यर्थः । ननु क्षत्रियधर्मत्वात् कथमत्र अधर्मत्वज्ञानमिति अत आह- **राज्यहैतुकमिति ।** राज्यभोगापेक्षया प्राप्तमित्यर्थः । **ज्ञातिवधं ज्ञात्वा ततः** विशसनात् **निवृत्तः** युद्धं न करोमीति सङ्कल्पवानभूत् । ननु ईश्वराधीनतया व्यापारकर्तुः स्वसङ्कल्पः कथं अभूत् ? इत्यत आह- **लौकिक** इति । 'अहं हन्ता', 'अयं शत्रुः हतः आसीत्' इति **लौकिकः** अज्ञबुद्धियुक्तः । तदा ईश्वराधीनत्वादिदुष्टनिग्रहादिज्ञानरहित इति भावः ॥ ७ ॥

**स तदा पुरुषव्याघ्रो युक्त्या मे प्रतिबोधितः ।**
**अभ्यभाषत मामेवं यथा त्वं रणमूर्धनि ॥ ८ ॥**

**तदा** युद्धसमये ज्ञानोपदेशप्रसक्तौ सत्यामित्यर्थः **सः** अन्यथाज्ञानयुक्तः **पुरुषव्याघ्रः** पुरुषश्रेष्ठः अर्जुनः । **मे युक्त्या प्रतिबोधितः** ज्ञानसम्पन्नः कृतः । **तदा** ज्ञानोपदेशकाल-मध्ये **त्वं यथा** विभूतिज्ञानार्थं पृष्टवान् **एवं मां** स्वयमपि **रणमूर्धन्यपि अभ्यभाषत** पृष्टवान् ज्ञानासक्त्येति भावः ॥ ८ ॥

**अहमात्मोद्धवामीषां भूतानां सुहृदीश्वरः ।**
**अहं सर्वाणि भूतानि तेषां स्थित्युद्भवाप्ययः ॥ ९ ॥**

**हे उद्धव ! ईश्वरः** सर्वशक्तिपूर्णः, **सुहृत्** अनिमित्तोपकारी सन्, **अमीषां** भूतानां **आत्मा** अन्तर्यामी अन्नादिविषयादनादिकर्ता शिशोर्मातेवेति भावः । 'सर्वं खल्विदं ब्रह्म' इति श्रुत्या जडचेतनैक्यश्रवणात् कथं तव सर्वोपकारकत्वम् इत्यत आह- **अहं सर्वाणीति । तेषां** मया व्यापारेषु प्रवर्तमानानां भूतानां स्थितिः उद्भवः अप्ययः येन सः । स्थित्यादिकर्तृत्वात् **अहं सर्वाणि भूतानि** इति व्यपदेशविषयः, न तु जडचेतनैक्यं श्रुत्यर्थ इति भावः ॥ ९ ॥

विभूतिमूर्तीः दर्शयति- **गतिमतामिति ।**

**अहं गतिर्गतिमतां कालः कलयतामहम् ।**
**गुणानामप्यहं सौम्यं गुणिन्यौत्पत्तिको गुणः ॥ १० ॥**

**गतिमतां** विविधज्ञानसम्पन्नानां या **गतिः** जगदीश्वरत्वादिनिश्चयः तदभिमानी ब्रह्मा तत्र स्थितविभूतिरहमिति भावः । **कलयतां** नृणां यः **कालः** संहारशक्तिः तत्र स्थितविभूतिः अहम् । **गुणानां** मध्ये **सौम्यम्,** उमा उत्कृष्टानुभवः स च आनन्दानुभवः उमया सहितः सोमः तस्य भावः सौम्यं ब्रह्मा अत्र विभूतिरहम् ॥ १० ॥

**गुणिनामप्यहं सूत्रं महतां च महानहम् ।**
**सूक्ष्माणामप्यहं जीवो दुर्जयानामहं मनः ॥ ११ ॥**

**गुणिनां** मध्ये यो गुणी अत्यन्तं गुणी तस्मिन् स्थितः सर्वशुभानां प्राप्तिनियामकः औत्पत्तिकगुणः योग्यतालक्षणः तन्नियामकः **सूत्रं** वायुस्तत्र विभूतिरहम् । ब्रह्मणः एकस्य विविधस्थाने स्थितत्वोक्तिः विविधबहुमूर्तिभिः युज्यते । **महतां** स्थूलानां

मध्ये **महान्** महत्तत्त्वम् अहं तत्र विभूतिः । **सूक्ष्माणां** अप्रतिघातानां मध्ये **जीवः** अप्रतिघातः अणुर्वा तत्र अहं विभूतिः ॥ ११ ॥

**हिरण्यगर्भो देवानां मन्त्राणां प्रणवस्त्रिवृत् ।**

**अक्षराणामकारोऽस्मि पदानि च्छन्दसामहम् ॥ १२ ॥**

**त्रिवृत्** अकार-उकार-मकारसमुदायः प्रणवः तत्र विभूतिः । **छन्दसां** नियामक-देवीनां[1] सकाशात् उत्तमः । पदानि पद्यन्ते इति कर्मव्युत्पत्या इह **पदानि** अर्थाः देवाः, तत्राहं विभूतिरिति । स्वयूथानामाधिक्यकारणमपि विभूतिरिति भावः ॥ १२ ॥

**इन्द्रोऽहं सर्वदेवानां वसूनामस्मि हव्यवाट् ।**

**आदित्यानामहं विष्णू रुद्राणां नीललोहितः ॥ १३ ॥**

**हव्यवाट्** प्रधानाग्निः । **विष्णुः** सूर्यः[2] स्वयमेव । नीलः कण्ठे लोहितः ललाटे अङ्गे वा ॥ १३ ॥

**ब्रह्मर्षीणां भृगुरहं राजर्षीणामहं मनुः ।**

**देवर्षीणां नारदोऽहं हविर्धान्यस्मि धेनुषु ॥ १४ ॥**

**धेनुषु** गोषु **हविर्धानी** कामधेनुः ॥ १४ ॥

**सिद्धेश्वराणां कपिलः सुपर्णोऽहं पतत्रिणाम् ।**

**प्रजापतीनां दक्षोऽहं पितॄणामहमर्यमा ॥ १५ ॥**

---

[1] 'वेदनियामकदेवीनाम्' इत्यर्थः । [2] आदित्यानां सूर्यादीनां मध्ये विष्णुः वामनः स्वयमेव अधिकः । अयं च प्रत्यक्षं विभूतिरूपमिति द्रष्टव्यम् ।

**कपिलः** स्वयमेव लीलयेति भावः । अर्यमा अर्यमनामके स्थितः विभूतिविशेषः ॥ १५ ॥

**मां विद्ध्युद्धव दैत्यानां प्रह्लादमसुरेश्वरम् ।**
**सोमं नक्षत्रौषधीनां धनेशं यक्षरक्षसाम् ॥ १६ ॥**

धनेश्वरः कुबेरः ।

**ऐरावतं गजेन्द्राणां यादसां वरुणं प्रभुम् ।**
**तपतां द्युमतां सूर्यं मनुष्याणां च भूपतिम् ॥ १७ ॥**

**यादसां** तिमिङ्गिलनक्रादीनां मध्ये उत्तमत्वापादकविभूतिविशेषः वरुणनामकः । तपतां उष्णस्पर्शयुक्तानां **द्युमतां** प्रकाशयुक्तानां **सूर्यं** विभूतियुक्तं इति ॥ १७ ॥

**उच्चैश्रवास्तुरङ्गाणां धातूनामस्मि काञ्चनम् ।**
**यमः संयमतां चाहं सर्पाणामस्मि वासुकिः ॥ १८ ॥**

**उच्चैश्रवाः** अश्वः । अहं तत्र विभूतिमान् । **धातूनां** लोहानां गैरिकाणां इति वा । **संयमतां** धर्मेण नियमनकर्तॄणां मध्ये **यमः**, तत्र विभूतिरूपवान् । वासुकिनामकः सर्पः ॥ १८ ॥

**नागेन्द्राणामनन्तोऽहं मृगेन्द्रः शृङ्गिदंष्ट्रिणाम् ।**
**आश्रमाणामहं तुर्यो वर्णानां प्रथमोऽनघ ॥ १९ ॥**

**अहं नागेन्द्राणां** सर्पविशेषाणाम् अनन्तनामकः नागः । अहं शृङ्गिणो= महिषादयः, दंष्ट्रिणः= व्याघ्रादयः तेषां मध्ये श्रेष्ठः **मृगेन्द्रः** सिंहः अहम् । **तुर्यः** यत्याश्रमः ।

देवेषु विद्यमान**वर्णानां** ब्रह्मक्षत्रादीनां **प्रथमः** ब्राह्मणः वर्गः तत्रत्यविभूतिः अहम् ॥ १९ ॥

**तीर्थानां स्रोतसां गङ्गा समुद्रः सरसामहम् ।**
**आयुधानां धनुरहं त्रिपुरघ्नो धनुष्मताम् ॥ २० ॥**

**तीर्थानां** पापतारकाणाम् । **स्रोतसां** मानसादीनाम् । **त्रिपुरघ्नः** धन्विरूपान्तर-विवक्षया पुनरुक्तिः ॥ २० ॥

**गिरीणामस्म्यहं मेरुर्गहनानां हिमालयः ।**
**वनस्पतीनामश्वत्थ ओषधीनामहं यवः ॥ २१ ॥**

**गहनानां** गह्वरोपेतानां प्रवेष्टुमशक्यनां पर्वतानाम् । **वनस्पतीनां** वृक्षाणाम्, **ओषधीनां** कळमशाल्यादीनां **यवः** धान्यं तत्र विभूतिः अहम् ॥ २२ ॥

**पुरोधसां वसिष्ठोऽहं ब्रह्मिष्ठानां बृहस्पतिः ।**
**स्कन्दोऽहं सर्वसेनान्यामग्रण्यां भगवानजः ॥ २२ ॥**

**वसिष्ठः** राज्ञां पुरोहितः । **ब्रह्मिष्ठानां** ब्रह्मज्ञानाम् । **सर्वसेनानां** सर्वसेनापतीनां **स्कन्दः** षण्मुखः । **अग्रण्यां** श्रेष्ठानाम् । **अजः** ब्रह्मा ॥ २२ ॥

**यज्ञानां ब्रह्मयज्ञोऽहं व्रतानामविहिंसनम् ।**
**वाय्वग्न्यर्काम्बुवागात्मा शुचीनामप्यहं शुचिः ॥ २३ ॥**

**ब्रह्मयज्ञः** स्वाध्याययज्ञः । **अविहिंसनम्** अहिंसा । वाय्वादीनां भावानां वस्तूनाम् **आत्मा** नियामकः तत्र विभूतिमान् । **शुचीनां** शुद्धिकारणानां **शुचिः** शुद्धिकर्ता तत्र विभूतिमान् ॥ २३ ॥

**योगानामात्मसंरोधो मन्त्रोऽस्मि विजिगीषताम् ।**
**आन्वीक्षिकी कौशलानां विकल्पः ख्यातिवादिनाम् ॥ २४ ॥**

**योगानां** मोक्षोपायानाम् **आत्मसंरोधः** मनसो विषयेभ्यो नियमनम्, आत्मध्यानं वा । **विजिगीषतां** वशीकर्तुमिच्छूनां **मन्त्रः** अतिगोप्यसम्भाषणम् । **कौशलानां** कुशलविद्यानां **आन्वीक्षिकी** ब्रह्मतर्कः । **ख्यातिवादिनां** ज्ञानपरीक्षकाणां **विकल्पः** जीवेशभेदसमर्थनमित्यर्थः । महावैलक्षण्यसमर्थनं वा विकल्पः । तद्वान् **विकल्पः** अहम् ॥ २४ ॥

**स्त्रीणां तु शतरूपाहं पुंसां स्वायम्भुवो मनुः ।**
**नारायणो मुनीनां च कुमारो ब्रह्मचारिणाम् ॥ २५ ॥**

**शतरूपा** मनोः पत्नी, तत्र विभूतिः अहम् । **नारायणः** ऋष्यवतारः स्वयमेव लीलया तत्र विभूतिः । **कुमारः** स्वयमेव ॥ २५ ॥

**धर्माणामस्मि सन्त्यागः क्षेमाणामबहिर्मतिः ।**
**गुह्यानां सततं मौनं मिथुनानां पुमानहम् ॥ २६ ॥**

**क्षेमाणां** संरक्षणरूपाणां, बहिर्मतिः विषयबुद्धिः, तद्विरुद्धा बुद्धिः **अबहिर्मतिः** अन्तर्यामिध्यानम् । **गुह्यानां** अवचनानां **मौनं** सततं अवचनं तत्र विभूतिमान् । **मिथुनानां** स्त्रीपुंसाम् ॥ २६ ॥

**संवत्सरोऽस्म्यनिमिषामृतूनां मधुमाधवौ ।**
**मासानां मार्गशीर्षोऽहं नक्षत्राणां तथाऽभिजित् ॥ २७ ॥**

**अनिमिषां** मासादिकालानाम् । षड्तूनां मध्ये **मधुमाधवौ** वसन्तर्तुः । **अभिजित्** नक्षत्रम् ॥ २७ ॥

**अहं युगानां च कृतं धैर्याणां[1] देवलोऽसितः ।**
**द्वैपायनोऽस्मि व्यासानां कवीनां काव्य आत्मवान् ॥ २८ ॥**

**कृतं** युगम् । **धैर्याणां** धैर्यसम्पन्नानां, गम्भीराणामिति वा **असितो देवलः** तन्नामक ऋषिः । **व्यासानां** वेदविभागकर्तॄणां कृष्णद्वैपायनः । **कवीनां** निपुणवचसां मध्ये **काव्यः** शुक्रः अहम् । बृहस्पतिम् ऋते इति भावः । शुक्रं स्तौति **आत्मवानिति आत्मवान्** धैर्यसम्पन्नः । असुरैः नित्ययोगेऽपि विष्णौ स्थिरभक्तिरिति भावः ॥ २८ ॥

**वासुदेवो भगवतां त्वं तु भागवतेष्वहम् ।**
**किम्पुरुषाणां च हनूमान् विद्याध्राणां सुदर्शनः ॥ २९ ॥**

**भगवतां** सातिशयज्ञानविज्ञानाद्यैश्वर्योपेतानां देवादीनां मध्ये वासुदेवमूर्तिः अहम् । **भागवतेषु त्वं** त्वयि अहं विभूतिमूर्त्या स्थित इत्यर्थः । **किंपुरुषाणां** किंपुरुषखण्डे स्थितानां स्वयूथ्यानां मध्ये **हनुमानहम्** । सुदर्शनाख्यः विद्याधरः अहम् ॥ २९ ॥

**रत्नानां पद्मरागोऽस्मि पद्मकोशस्तु पेशसाम् ।**
**कुशोस्मि दर्भजातीनां गव्यमाज्यं हविष्वहम् ॥ ३० ॥**

पेशसां मृदुलक्षणानां मध्ये **पद्मकोशः** कुड्मलान्तर्भागः ॥ ३० ॥

**व्यवसायिनामहं लक्ष्मीः कितवानां छलग्रहः ।**
**तितिक्षाऽस्मि तितिक्षूणां सत्वं सत्ववतामहम् ॥ ३१ ॥**

---

[1] 'धीराणां' इति पाठान्तरम् ।

**व्यवसायिनाम्** एवं करोमि इति निश्चयवताम् उत्साहवतामिति भावः । **लक्ष्मीः** भाग्यम् । अहं **कितवानां** वञ्चकानाम् इति भावः । **छलग्रहः** प्रकारान्तरेण वञ्चनोपाय-निश्चयः अहम् । तितिक्षूणां सम्बन्धिनी या **तितिक्षा** शीतोष्णादिद्वन्द्वसहिष्णुता, **सत्ववतां सत्वं** सात्विकगुणः सत्वगुणो वा अहम् ॥ ३१ ॥

**ओजः सहोबलवतां कर्माहं विद्धि सात्वताम् ।**
**सात्वतां नवमूर्तीनामादिमूर्तिरहं पुरा ॥ ३२ ॥**

**सहः** अवष्टम्भनशक्तिः बलञ्च, आभ्यां युक्तानां **ओजः** अवष्टंबनशक्तिः अहम् । ओजः बलञ्च अहम् । ओजःशब्दस्य नानार्थस्य आवृत्तिर्वा ज्ञेया । **सात्वतां** सत्वप्रधा-नानां परमभागवातानां **कर्म** विष्णुपूजादितन्त्रः अहम् । विभूतिः इति मां विद्धि । नव मूर्तयः प्रत्येकं येषान्तेषां **सात्वतां** ब्रह्मवाय्वादीनां मध्ये, **पुरा** पूर्वं प्राप्ता, पूजाविषयत्वेनेति भावः । **आदिमूर्तिः अहम्** । **सात्वतां** पञ्चरात्रोक्तकर्मभिः पूजाविषयाणां देवानां मध्ये **पुरा** पूज्या **आदिमूर्तिः** प्राथमिकी स्वकीयनवमूर्तिः तत्र अहं विभूतिर्लीलया इति भावः । समाख्याऽनुसरणादेवमर्थः स्वीकृतः ॥ ३२ ॥

**विश्वावसुः पूर्वचित्तिर्गन्धर्वाप्सरसामहम् ।**
**भूधराणामहं स्थैर्यं गन्धमात्रमहं भुवः ॥ ३३ ॥**

गन्धर्वाणां **विश्वावसुः**, **अप्सरसां** मध्ये पूर्वचित्याख्या अहम् । **स्थैर्यं** अचलत्वं काठिन्यं वा अहम् । **गन्धमात्रं** सुगन्धः ॥ ३३ ॥

**अपां रसश्च परमस्तेजिष्ठानां विभावसुः ।**
**प्रभा सूर्येन्दुताराणां शब्दोऽहं नभसः परः ॥ ३४ ॥**

**परमः रसः** स्वादुरसः । **तेजिष्ठानां** प्रकाशवतां मध्ये **विभावसुः** सूर्यः । ताराः नक्षत्राणि तेषां संबन्धिनी प्रभा ॥ ३४ ॥

**ब्रह्मण्यानां बलिरहं वीराणामहमर्जुनः ।**
**भूतानां स्थितिरुत्पत्तिरहं वै प्रतिसङ्क्रमः ॥ ३५ ॥**

**भूतानां** वस्तूनां **प्रतिसंक्रमः** संहारः, एषां कर्ता अहम् ॥ ३५ ॥

**गत्युक्त्युत्सर्गोपादानमानन्दस्पर्शलक्षणः ।**
**आस्वादश्रुत्यवघ्राणमहं सर्वेन्द्रियेन्द्रियः ॥ ३६ ॥**

करणव्युत्पत्त्या **गतिः** पादौ, **उक्तिः** वागिन्द्रियं, **उत्सर्गः** पायुः, **उपादानं** हस्तौ **आनन्दः** गुह्यं, **स्पर्शः** त्वगिन्द्रियम्, **आस्वादनं** जिह्वा, **श्रुतिः** कर्णौ, **अवघ्राणं** घ्राणेन्द्रियम्, एवं युक्तव्यापारकरणानि सर्वेन्द्रियाणि तेषां इन्द्रियं अहम् । इन्द्रिय-शक्तिश्च विभूतिः । अत्र इन्द्रियव्यापारोक्त्या इन्द्रियाणां च ग्रहणम् ॥ ३६ ॥

मूर्तयः सन्तीत्याह- **पृथिवीति ।**

**पृथिवी वायुराकाश आपो ज्योतिरहं महान् ।**
**विकारः पुरुषोऽव्यक्तं रजः सत्वं तमः परः ।**
**अहमेतत्प्रसङ्ख्यानं ज्ञानं तत्वविनिश्चयः ॥ ३७ ॥**

**अहं** तत्वम् । **महान्** महत्तत्वम् । विवक्षाभेदेन पुनरुक्तम् । **विकारः** पृथिव्यादि-विकारः ब्रह्माण्डम् । पुरुषः अण्डस्थितो ब्रह्मा । **अव्यक्तं** प्रकृतिः, सत्वादिगुणाश्च एतेषु स्थिता विभूतयः अहम् । तत्तन्नामवांश्चाहम् । तरोः चलन्त्यां शाखायां स्थितस्य यथा चलनं एवं विकारिषु स्थितस्य तव किं विकारः ? नेत्याह- **पर** इति ।

पूर्णशक्तिसम्पन्नत्वात् विकारादि निरसने निपुण इति भावः । एतेषां प्रकृतितत्वदेवानां **प्रसङ्ख्यानं** सङ्ख्याविभागादिव्यवस्था यस्मात् तत् । **ज्ञानं** सर्वतत्वविषयज्ञानं अहं, तत्र विभूतिः । **तत्वनिश्चयः** तत्वस्य अविकारिणः मम निश्चयः सर्वतत्वेश्वरत्वेन निश्चयः । अहं तत्रस्थं विभूतिः । तत्वस्य स्वतन्त्रतत्वस्य विनिश्चयः सिद्धिः यस्मात् इति व्युत्पत्त्या ज्ञानविशेषणं वा । तत्वज्ञाने सति फलं तन्नियामकत्वेन परमात्मावधारणमिति भावः ॥ ३७ ॥

सजातीयोत्कर्षप्रापकविभूतीरुक्त्वा स्वभावविभूतीराह- **मयेश्वरेणेति** ।

**मयेश्वरेण जीवेन गुणेन गुणिना विना ।**
**सर्वात्मनाऽपि सर्वेण न भावो विद्यते क्वचित् ॥ ३८ ॥**

**भावः** वस्तु किमपि **क्वचित्** कदाचिदपि मया विना न नास्ति । सर्वं वस्तु सदा मदधिष्टितमित्यर्थः । तत्र असंभावनां परिहृत्य साधकानि ज्ञापयन् लोकविलक्षण-स्वभावानाह- **गुणेनेत्यादि** । ननु अन्यदीयवस्तुनि तव स्थितिः कथं स्थिरा ? इत्याशङ्क्याह- **सर्वेणेति** । सर्वस्वामिना इत्यर्थः । ननु तव वस्तषु स्थितिः किमर्थम् ? इति जिज्ञासायां आह- **आत्मनेति** । अन्तर्यामिणा, वस्तुशक्तिप्रेरणार्थम् अन्तर्याम्यह-मिति भावः । ननु प्रेरणार्थं कदाचित् केनचित् उत्साहादिना भाव्यम् स किं त्वय्यस्ति ? इति जिज्ञासायां आह- **गुणिना** गुणव्यक्तिसम्पन्नेन । एतादृशस्य तव किं किं स्वरूपमिति जिज्ञासायां आह- **गुणेनेति** ज्ञानानन्दादिगुणरूपेणेत्यर्थः । ननु प्रेरणार्थं ज्ञानादिना भाव्यम्, कथं ज्ञानस्वरूपस्य ज्ञानसंबन्धः ? इति जिज्ञासायां आह- **ईश्वरेणेति** । अघटितघटनासामर्थ्यसंपन्नेनेत्यर्थः । ननु अचेतनस्य स्वतः व्यापारादर्शनात् प्रेरकापेक्षाऽस्तु नाम, चेतनस्य प्रेरकापेक्षा कुतः ? इत्यत आह-

**जीवेनेति** । प्राणादिधारकेन **मया विना भावः** चेतनो वा ज्ञानादिव्यापारो वा नास्तीत्यर्थः ॥ ३८ ॥

**सङ्ख्यानं परमाणूनां कालेन क्रियते मया ।**
**न तथा मे विभूतीनां सृजतोऽण्डानि कोटिशः ॥ ३९ ॥**

परमाण्वानन्त्यं सातिशयमिति ज्ञानमिव विभूतीनां तथा लोक इव संख्यानं नास्ति । अतः न क्रियते निरतिशयानन्तत्वादिति भावः । तत्र निमित्तमाह- **सृजत** इति । **कोटिश** इति शब्दः बहुत्ववचनः । बहुधा **अण्डानि सृजतः** मे विभूतयः बह्व्यः असंख्याता इत्यर्थः ॥ ३९ ॥

स्वभावविभूतीरुक्त्वा गुणोत्कर्षप्रापकविभूतीराह- **तेजः श्रीरिति** ।

**तेजः श्रीः कीर्तिरैश्वर्यं ह्रीस्त्यागः सौभगं भगः ।**
**वीर्यं तितिक्षा विज्ञानं यत्रयत्र स मेंऽशकः ॥ ४० ॥**

**तेजः** पराभिभवशक्तिः **श्रीः** सम्पत् **ऐश्वर्यं** निग्रहानुग्रहसामर्थ्यं, श्रीः कान्तिर्वा, **त्याग** औदार्यं, **सौभगं** शुभैकभागित्वम् । **भगः** ज्ञानं, **वीर्यं** पराक्रमः, **तितिक्षा** सुखदुःखप्राप्तौ विकारतिरस्कारः, **विज्ञानं** ज्ञानोत्कर्षो वा, यत्र चेतने यत्र रत्नादौ वा कान्तेः संभवादिति भावः । यत्र वर्तते **स** पदार्थः **मे अंशकः** अंशविशेषोपेत इत्यर्थः ॥ ४० ॥

**एतास्ते कार्तिताः सर्वाः संक्षेपेण विभूतयः ।**
**मनोविकारा एते वै यथा वाचाऽभिधीयते ॥ ४१ ॥**

**वाचं यच्छ मनो यच्छ प्राणं यच्छेन्द्रियाणि च ।**
**आत्मानमात्मना यच्छ न भूयः कल्पसेऽध्वने**[1] **॥ ४२ ॥**

सर्वाः स्वस्वजात्युत्तमत्वे हेतवः, वस्तुस्वभावशक्तिप्रेरणहेतवः, वस्तुषु गुणविशेषहेतवश्चेति त्रिविधा **विभूतयः कीर्तिताः । मनोविकारा** इत्यस्य उत्तरत्रोक्तेनान्वयः । उद्धवं प्रति हितमुपदिशति- **वाचं यच्छेति । वाचं** इन्द्रादिसूक्तनामघोषात्मकशब्दान् मय्येव **यच्छ** मद्विषयं कुरु । इन्द्रादिषु मुख्यतया ज्ञातानाम् इन्द्रादिनाम्नां तत्सूक्तानां च कुतो मुख्यतया त्वयि नियमनमिति आशङ्क्याह- **यथा वाचेति । यथा** मां मुख्यार्थमनतिक्रम्य । वागिन्द्रियेण अभिधीयते नामादिकं ज्ञानिभिः व्यवह्नियत इत्यर्थः । तर्हि भवान् इन्द्रादिश्च उभावपि किं नामादिमुख्यार्थः ? इत्याशङ्क्य नेत्याह- **मनोविकारा एते** 'इन्द्रादिनाम्नाम् इन्द्रादिषु मुख्यत्वमि'ति व्यवहाराः, **मनोविकारः** मनःकारणकृत- भ्रमप्राप्त इत्यर्थः । अतः परमात्मा नामादिपरममुख्यार्थः । तस्मात् **वाचं मय्येव यच्छ** मद्विषयमेव कुरु इत्यर्थः । **मनश्च** मद्विषयं कुरु । **प्राणं** सर्वव्यापारं **आत्मानं** प्रति यच्छ मद्विषयं कुरु । **इन्द्रियाणि** श्रोत्रादीनि मद्विषयाणि कुरु । एवम् **आत्मना** मत्सहायेन **आत्मानं** परमात्मानं **यच्छ** सर्वव्यापारलक्ष्यं कुरु । वागादिकं बहिरर्थविषयं न कर्तव्यमिति भावः । एवं सति **आत्मना** सदा स्वविषयेण परमात्मना **अध्वने** दुःखमार्गाय **न कल्पसे** ॥ ४२ ॥

**यो वै वाङ्मनसी सम्यक् न संयच्छेद् धिया यतिः ।**
**तस्य व्रतं तपो ज्ञानं स्रवत्यामघटाम्बुवत् ॥ ४३ ॥**

**तस्माद् वचोमनःप्राणान् नियच्छेन्मत्परायणः ।**
**मद्भक्तियुक्तया बुद्ध्या ततः परिसमाप्यते ॥ ४४ ॥**

[1] 'कल्प्यसेऽध्वने' इति पाठान्तरम् ।

**॥ इति श्रीमद्भागवते एकादशस्कन्धे षोडशोऽध्यायः ॥**

यो वा क्रमेण स्ववाङ्मनसी **धिया** अस्तीति बुद्ध्या **न संयच्छेत्** मद्विषयामेव न कुर्यात्, तस्य व्रतादिकं **स्रवति** नश्यति विषयसेवयेति भावः **ततः** दुःखात् **परिसमाप्यते** निवृत्तो भवति ॥ ४४ ॥

॥ इति श्रीयादवेन्द्रयतिविरचिते एकादशस्कन्धव्याख्याने षोडशोऽध्यायः ॥

# 17 | सप्तदशोऽध्यायः

भक्तिप्रयोजनकवर्णाश्रमधर्मान् प्रष्टुं श्रुतम् अनुवदति- **यस्त्वयेति ।**

**उद्धव उवाच-**

**यस्त्वयाऽभिहितः पूर्वं धर्मस्त्वद्भक्तिलक्षणः ।**

**वर्णाश्रमाचारवतां सर्वेषां द्विपदामपि ॥ १ ॥**

**यः वर्णाश्रमवतां धर्मः द्विपदां** वेदबाह्यानामपि कर्तव्यतया स : त्वद्भक्तिलक्षणधर्मः **अभिहितः ॥ १ ॥**

प्रश्नविषयं दर्शयति- **यथाऽनुष्ठीयमानेनेति ।**

**यथाऽनुष्ठीयमानेन त्वयि भक्तिर्नृणां भवेत्[1] ।**

**स्वधर्मेणारविन्दाक्ष तन्ममाख्यातुमर्हसि ॥ २ ॥**

सा सर्वेषां कर्तव्यतया प्राप्ता भक्तिः । **यथा** येन प्रकारेण **अनुष्ठीयमानेन** कामनाराहित्येन भवेत् निष्पद्येत[2] तत् (प्रकारं) पृच्छामि ॥ २ ॥

प्रयाणसमये मां प्रति प्रश्न अयुक्तः इत्याशङ्क्याह- **पुरा किलेति ।**

**पुरा किल महाबाहो धर्मं परमकं भवान् ।**

**यमाह त्वयि भक्तेभ्यो ब्राह्मणेभ्यश्च माधव ॥ ३ ॥**

---

[1] 'सा भक्तिश्च नृणां भवेत्' इति पाठो व्याख्याकृता स्वीकृत इति भाति । [2] अयं सम्भावितः पाठः । मूलपुस्तके तु 'कामनाराहित्येन निष्क्रामति' इति पठ्यते ।

**स इदानीं सुमहता कालेनामित्रकर्शन ।**
**प्रायोऽन्तर्भविता मर्त्यलोके प्रागनुशासितः ॥ ४ ॥**

**सः अनुशासितः** त्वया उपदिष्टः धर्मः । किल अन्तर्भविता **किल** । मर्त्यलोके तिरोहितः किल ॥ ४ ॥

ऋष्याद्यपेक्षया धर्मवक्ता त्वमेवेत्याह- **वक्ता कर्तेति ।**

**वक्ता कर्ताऽविता नान्यो धर्मस्याच्युत ते प्रभो ।**
**सभायामपि वैरिञ्च्यां यत्र मूर्तिधराः कलाः ॥ ५ ॥**

कपिलादिरूपेण धर्मस्य **वक्ता,** नरनारायणादिरूपेण धर्मस्य **कर्ता,** कृष्णादि-रूपेण धर्मस्य **अविता** च त्वमेव । त्वदन्यः धर्मस्य प्रवचनादौ समर्थो न । **यत्र कलाः** प्राणादिषोडशकलाः । **वैरिञ्च्यां** चतुर्मुखसंबन्धिन्यां सभायामपि स्वसामर्थ्येन वक्ता नास्ति । ब्रह्माऽपि परमात्मप्रसादप्राप्तसामर्थ्येन देवानां धर्मवक्तेति भावः ॥ ५ ॥

तव प्रयाणसमये धर्मप्रश्नो युक्त इत्याह- **कर्ताऽवित्रा चेति ।**

**कर्त्राऽवित्रा प्रवक्त्रा च भवता मधुसूदन ।**
**त्यक्ते महीतळे देव विनष्टं कः प्रवक्ष्यति ॥ ६ ॥**

यो भवान् धर्मस्य कर्ता प्रवक्ता आविता च, तस्मिन् त्वयि महीतले त्यक्ते सति विनष्टधर्मम् इह महीतले न कोऽपि वक्ष्यति ॥ ६ ॥

**त्वमतः सर्वधर्मज्ञ धर्मस्त्वद्भक्तिलक्षणः ।**
**यथा यस्य विधीयेत तथा वर्णय मेऽच्युत ॥ ७ ॥**

त्वद्भक्तिलक्षणः धर्मः, **यस्य** कस्य, **यथा** वर्णाश्रमधर्मो **विधीयेत** प्राप्तो भवति **तथा** तादृशं वर्णाश्रमधर्मं वद ॥ ७ ॥

**बादरायणिरुवाच-**

**इत्थं तु भृत्यमुख्येन पृष्टः स भगवान् हरिः ।**
**प्रीतः क्षेमाय मर्त्यानां धर्मानाह सनातनान् ॥ ८ ॥**

**श्रीभगवानुवाच-**

**धर्म्य एष तव प्रश्नो नैःश्रेयसकरो नृणाम् ।**
**वर्णाश्रमाचारवतां तमुद्धव निबोध मे ॥ ९ ॥**

**तव प्रश्नः धर्म्यः** सर्वोद्धारकारणमित्यर्थः । तव धर्मज्ञानसम्पन्नत्वादिति भावः । तत् प्रश्नोत्तरं मे मतम् । **नृणां** नैःश्रेयसस्य= अपवर्गसम्पादकस्य भक्तिस्वरूपस्य करोति= उत्कर्षं करोति इति **नैःश्रेयसकरः** धर्मज्ञानतदाचरणपुरस्सरमिति भावः ॥ ९ ॥

निषेधधर्मविभागज्ञानाय युगधर्मान् वर्णाश्रमान् आह- **आदौ कृतयुगे** इत्यादिना ।

**आदौ कृतयुगे वर्णो नृणां हंस इति स्मृतः ।**
**कृतकृत्याः प्रजा जात्या तस्मात् कृतयुगं विदुः ॥ १० ॥**

युगानां **आदौ** प्राथमिके **कृतयुगे नृणां वर्णः हंस** इति संज्ञोपेतः । **जात्या** स्वभावतः **कृतकृत्याः** धर्मलोपरहिताः ॥ १० ॥

**वेदः प्रणव एवाग्रे धर्मोऽहं वृषरूपधृक् ।**
**उपासते तपोनिष्ठा हंसा मां मुक्तकिल्बिषाः ॥ ११ ॥**

**अग्रे** कृतयुगे **प्रणवः** प्रणवयुक्तो वेद एव आसीत् । न तु ऋगादिविभागः इति एवशब्दार्थः । तदा वृषभरूपोऽहं धर्मसंज्ञः । **तपोनिष्ठाः** तपस्येव स्थिताः **हंसाः** हंससंज्ञकवर्णयुक्ताः । विषयविरागसंपन्ना वा । रजस्तमोरहिता वा । अत एव मुक्तं किल्बिषं पापं यैः ते । **मां उपासते** ॥ ११ ॥

**त्रेतामुखे महाभाग प्राणान्मे हृदयात् त्रयी ।**
**विद्या प्रादुरभूत् तस्या अहमासं त्रिवृन्मुखः ॥ १२ ॥**

**त्रेतामुखे** त्रेतायुगादौ मे हृदयस्थात् **प्राणात्** विरिञ्चात् **त्रयी विद्या** त्रित्वसंख्या-युक्तवेदः प्रादुरभूत् । **हृदयात्** सरस्वती ततः प्राण इति वा । त्रीन् वेदान् वृणुत इति त्रिवृत्= ब्राह्मणः मुखः= प्रधानः यस्य सः । अध्ययनकर्तृत्वात् ब्राह्मणानां क्षत्रियाद्यपेक्षया प्राथम्यम् । **अहम् आसम्** वेदैः अभिव्यक्तः अभूवम् ॥ १२ ॥

वर्णतारतम्यम् आश्रमतारतम्यं च ज्ञापयितुं स्थानविभागमाह- **विप्रक्षत्रियेति** ।

**विप्रक्षत्रियविट्छूद्रा मुखबाहूरुपादजाः ।**
**वैराजात् पुरुषाज्जाता य आत्माचारलक्षणाः ॥ १३ ॥**

कस्मात् पुरुषा जाता इति जिज्ञासायामाह- **वैराजादिति** । विप्रादीनां आचारा विभक्ता इत्याह- **आत्मेति** । **ये** विप्रादयः आत्मनां= स्वेषां आचाराः= विभागेन प्राप्ता इति भावः । ते लक्षणानि= विभागज्ञापकानि येषान्ते तथाविधाश्च ज्ञाता इत्यर्थः ॥ १३ ॥

स्वाश्रमनियामकदेवानामुत्पत्तिस्थानान्याह- **गृहाश्रम** इति ।

**गृहाश्रमो जघनतो ब्रह्मचर्यं हृदो मम ।**
**वक्षःस्थलाद् वनेवासो न्यासः शीर्षण्यवस्थितः ॥ १४ ॥**

लोकदृष्टावयवतारतम्यमादाय तारतम्योक्तिः इति भावः ॥ १४ ॥

**वर्णानामाश्रमाणां च जन्मभूम्यनुसारतः ।**
**आसन् प्रकृतयो नृणां नीचैर्नीचोत्तमोत्तमाः ॥ १५ ॥**

नीचैः स्थिताः शूद्राः, उत्तमः उत्तमश्चेति उत्तमौ, नीचोत्तमश्च तदुत्तमौ च नीचोत्तमोत्तमौ । नीचोत्तमः वैश्यः, तदुत्तमः क्षत्रियः, उत्तमः ब्राह्मण इत्यर्थः ॥ १५ ॥

ब्राह्मणस्वभावधर्मान् आह- **शमो दम** इति ।

**शमो दमस्तपः शौचं सन्तोषः क्षान्तिरार्जवम् ।**
**मद्भक्तिश्च दया सत्यं ब्रह्मप्रकृतयस्त्विमाः ॥ १६ ॥**

**शमः** विषयरागशान्तिः परमासक्तिर्वा । **दमः** मनः विषयेभ्यः आकृष्य स्थैर्य-सम्पादनम् । **तपः** हितमितपवित्रान्नादिस्वीकारः । **शौचं** मृज्जलाभ्यां बहिश्शुद्धिः । प्राणायामादिना अन्तश्शुद्धिः । **क्षान्तिः** आग्रहकारणेऽपि आग्रहाकरणम् । **आर्जवं** मनोवाक्कायानामेकविषयत्वम् । विनयः, सत्यभाषणं[1], **ब्राह्मप्रकृतयः** ब्राह्मणानां स्वभाव-धर्माः ॥ १६ ॥

---

[1] 'मद्भक्तिर्विनयः सत्यं' इति यादवेन्द्रतीर्थादृतपाठ इति भाति ।

**तेजो बलं धृतिः शौर्यं तितिक्षौदार्यमुद्यमः ।**
**स्थैर्यं ब्रह्मण्यमैश्वर्यं क्षत्रप्रकृतयस्त्विमाः ॥ १७ ॥**

**तेजः** प्रभावः । **बलं** द्रविणसैन्यदेहादिबलसम्पत्तिः । **धृतिः** विपदि धैर्यम् । **तितिक्षा** जयापजयादौ मनोविकाराभावः । **औदार्यम्** उचितदानम् । **उद्यमः** दुष्टनृपनिग्रहे साधुपालने च उत्साहः, सहकारिसंपादनं वा । **स्थैर्यं** प्रयोजनचापलाभावः । **ब्रह्मण्यं** ब्राह्मणपूजा । **ऐश्वर्यं** सर्वनियमनशक्तिः । **प्रकृतयः** क्षत्रियस्वभावधर्माः ॥ १७ ॥

**आस्तिक्यं दाननिष्ठा च अदम्भो विप्रसेवनम् ।**
**अतुष्टिरर्थोपचये वैश्यप्रकृतयस्त्विमाः ॥ १८ ॥**

**आस्तिक्यं** सच्छास्त्रार्थे विश्वासः । **दाननिष्ठा** दातव्यतया क्लृप्तस्य दानम् । **अर्थोपचये** बह्वर्थे सत्यपि **अतुष्टिः** अर्थार्जने बुद्धिः ॥ १८ ॥

**शुश्रूषणं द्विजगवां देवानां चाप्यमायया ।**
**तत्र लब्धेन सन्तोषः शूद्रप्रकृतयस्त्विमाः ॥ १९ ॥**

**अमायया** राजनिग्रहादिभयं विना अर्थाद्युपाधिं विना, एवंरूपवञ्चनां विना, **तत्र** सेवादिप्रसन्नद्विजादिषु **लब्धेन** द्रव्येण[1] **सन्तोषः** ॥

**अशौचमनृतं स्तेयं नास्तिक्यं शुष्कविग्रहः ।**
**कामः क्रोधश्च तर्षश्च स्वभावोऽन्तेऽवसायिनाम् ॥ २० ॥**

---
[1] अत्र 'पूर्वं अक्षतत्वेन' इत्यधिकं पठ्यते मूलपुस्तके, सम्पातायातं स्यात् ।

**नास्तिक्यं** धर्मराहित्यबुद्धिः **शुष्कविग्रहः** प्रयोजनाभावेऽपि कलहे प्रीतिः । **कामः** स्त्रैणत्वम् । **तर्षः** विषयासक्तिः, द्रव्यतृष्णत्वं वा । **अवसायिनां** जातिबाह्यानां स्वभावः ॥ २० ॥

**अहिंसा सत्यमस्तेयमकामक्रोधलोभता ।**
**भूतप्रियहितेहा च धर्मोऽयं सार्ववर्णिकः ॥ २१ ॥**

भूतानां= प्राणिनां प्रियं= सौख्यं हितं= रक्षणं तयोः ईहा इच्छा ॥ २१ ॥

ब्रह्मचर्याश्रमधर्मानाह- **द्वितीयं प्राप्येति ।**

**द्वितीयं प्राप्यानुपूर्व्या जन्मोपनयनं द्विजः ।**
**वसन् गुरुकुले दान्तो ब्रह्माधीयीत वाग्यतः ॥ २२ ॥**

**आनुपूर्व्या** वेदमन्त्रैः उपनयनसंज्ञं **द्वितीयं जन्म प्राप्य द्विज** स्सन् वेदमन्त्रप्राप्तातिशयविशिष्टो द्विज इति भावः । एतादृशः सन् **गुरुकुले** गुरोः शिष्यवर्गमध्ये गुरुसमीपे वा । **दान्तः** विषयसम्पादनसंकल्पविकल्परहितः **ब्रह्म** वेदार्थान् **अधीयीत** । **वाग्यतः** वाचि यतः प्रयतः स्वरवर्णादिस्खलननिरसनयत्नवानित्यर्थः । वृथा संभाषणरहितो वा भवेत् ॥ २२ ॥

ब्रह्मचारिलक्षणं तेन परिग्राह्यं चाह- **मेखलेति ।**

**मेखलाजिनदण्डाक्षब्रह्मसूत्रकमण्डलून् ।**
**जटिलोऽधौतदन्तश्च वासः पीठकुशान् दधत् ॥ २३ ॥**

**स्नानभोजनहोमेषु जपोच्चारे च वाग्यतः ।**
**न छिन्द्यान्नखरोमाणि कक्षोपस्थगतान्यपि ॥ २४ ॥**

**रेतो नावकिरेज्जातु ब्रह्मव्रतधरः स्वयम् ।**
**अवकीर्णोऽवगाह्याप्सु यतासुस्त्रिपदीं जपेत् ॥ २५ ॥**

**अग्न्यर्काचार्यगोविप्रगुरुवृद्धसुरान् नमेत् ।**
**समाहित उपासीत सन्ध्ये च यतवाग् जपेत् ॥ २६ ॥**

**आचार्यं मां विजानीयान्नावमन्येत कर्हिचित् ।**
**न मर्त्यबुद्ध्याऽसूयेत सर्वदेवमयो गुरुः ॥ २७ ॥**

**सायं प्रातरुपानीय भैक्ष्यं तस्मै निवेदयेत् ।**
**यच्चान्यदप्यनुज्ञात उपभुञ्जीत संयतः ॥ २८ ॥**

**शुश्रूषमाण आचार्यं सदोपासीत नीचवत् ।**
**यानशय्यासनस्थाने नातिदूरः कृताञ्जलिः ॥ २९ ॥**

**मेखला** मौञ्जी । **अक्षं** जपमालाम् । **दधत्** एतद् परिग्रहः भवेत् ॥ २९ ॥

**एवंवृत्तो गुरुकुले वसेद् भोगविवर्जितः ।**
**विद्या समाप्यते यावद् चरेद् व्रतमखण्डितम् ॥ ३० ॥**

**गुरुकुल** स्थितः **एवं वृत्तं** यस्य सः **एवं वृत्तः** उक्तलक्षणसम्पन्नः **भोगविवर्जितः** अभ्यङ्गचन्दनादिविषयभोगेन अनुभवेन वर्जितः सन् **गुरुकुले वसेत्** । कियन्तं कालमिति जिज्ञासायामाह- **विद्या समाप्यत** इति । **व्रतं** ब्रह्मचर्याश्रमधर्मम् **अखण्डितं** यथा भवति तथा व्रतभङ्गरहितः सन् **यावत्** पर्यन्तं **विद्या समाप्यते** तावत् **चरेत्** आचरेत् ॥ ३० ॥

विद्यासमाप्त्यनन्तरं तेन किं कार्यमिति जिज्ञासायां आह- **यद्यसाविति** ।

**यद्यसौ च्छन्दसां लोकमारोक्ष्यन् ब्रह्मविष्टपम् ।**
**गुरावेव न्यसेद्[1] देहं स्वाध्यायार्थं बृहद्व्रतः ॥ ३१ ॥**

**छन्दसां** सम्बन्धि तं विद्याभ्यासात् प्राप्यमित्यर्थः । **ब्रह्मविष्टपं** ब्रह्म वेदान्, विष्टः प्रविष्टः । वेदार्थानुसन्धानशील इत्यर्थः । तं रातीति ब्रह्मविष्टरसंज्ञं[2] इति । लोकं आरोक्ष्यन् स्यात् । तदा बृहद्व्रतः दीर्घकाले ब्रह्मचर्यव्रतः सन् **स्वाध्यायार्थं** स्वाध्यायः अर्थः प्रयोजनं यस्य तं वेदतदर्थज्ञापनाभ्यासफलकं **देहं गुरावेव न्यसेत्** गृहस्थाश्रमं न प्राप्नुयात् ॥ ३१ ॥

गुरुसमीपे स्थितेन किं कार्यमिति जिज्ञासायामाह- **गुराविति ।**

**अग्नौ गुरावात्मनि च सर्वभूतेषु मां परम् ।**
**अपृथग्धीरुपासीत ब्रह्मवर्चस्व्यकल्मषः ॥ ३२ ॥**

**गुरौ** गुर्वादौ स्थितं **परं** सर्वगुणसम्पन्नम् **उपासीत ।** गुरुसेवादिपुरुस्सर इति भावः । **आत्मनि** चेतने स्वस्मिन् देहेऽवस्थितं माम् उपासीत । **ब्रह्मवर्चस्वी** ज्ञानातिशयसम्पन्नः अपृथक् धीश्च भवेत् । पृथग् धीः अहं स्वतन्त्र इति धीः, तद्भिन्नं जगदीश्वरः सर्वस्वतन्त्रोस्तीति ज्ञानम् **अपृथक् धीः ।** सा यस्य सः । परमात्मा सर्वस्वतन्त्रः अहं तदधीन इति सदा उपासकः स्यादिति भावः । **अकल्मषः** विद्यामदरहितश्च भवेत् ॥ ३२ ॥

उक्तोपासनास्थैर्याय आह- **स्त्रीणामिति ।**

**स्त्रीणां निरीक्षणस्पर्शसल्लापक्ष्वेळनादिकम् ।**
**प्राणिनो मिथुनीभूतानगृहस्थोऽग्रतस्त्यजेत् ॥ ३३ ॥**

---
[1] 'गुरवे विन्यसेद्' इति पाठान्तरम् । [2] ब्रह्मविष्टपमिति प्रसिद्धपाठानुसारेण 'तं पातीति ब्रह्मविष्टपसंज्ञं' इति स्यादिति भाति ।

**अगृहस्थः** ब्रह्मचारियती । क्ष्वेळः= स्त्रीभिः सह परिहासः, सख्यं च । **अग्रतः** प्रथमं **त्यजेत् । मिथुनीभूतान् प्राणिनः** तिर्यञ्चो नेक्षेत । विषयवासनामनःक्षोभयोः परिहारार्थमिति भावः ॥ ३३ ॥

**शौचमाचमनं स्नानं सन्ध्योपासनमार्जवम् ।**
**तीर्थसेवा जपोऽस्पृश्याभक्ष्यासंभाष्यवर्जनम् ॥ ३४ ॥**

शौचादिकं कुर्वन् सन्ध्योपास्त्या सह मदर्चनं कुर्यात् ॥ ३४ ॥

**सर्वाश्रमप्रयुक्तोऽयं नियमः कुलनन्दन ।**
**मद्भावः सर्वभूतेषु मनोवाक्कायसंयमः ॥ ३५ ॥**

हे **कुलनन्दन !** ज्ञानिसमूहस्य सन्तोषप्रापक हे उद्धव ! **सर्वभूतेषु** चेतनाचेतनेषु मम भावः अनुसन्धेयः । चेष्टा अवतारव्यापारः अनुसन्धेयः । अन्तर्यामिमूर्तिभिः समं वस्तुषु सत्त्वं वा अनुसन्धेयम् । तेन भूतेषु द्वेषादितिरस्कारश्चेति भावः । **कायसंयमः** कायेन मूर्तिपूजादिकरणं संयम इत्यर्थः ॥

**एवं ब्रह्मव्रतधरो ब्राह्मणोऽग्निरिव ज्वलन् ।**
**मद्भक्तस्तीव्रतपसा दग्धकर्माशयोऽमलः ॥ ३६ ॥**

**ब्रह्मव्रतं** दीर्घब्रह्मचर्यं, तद्वान् समर्थः रागद्वेषादिरहितः कळत्रादिपरिग्रहराहित्येन तत्पोषणासक्त्यादेः अभावः इति भावः । ब्राह्मज्ञानपाटवसंपन्नः **ज्वलन्** स्वभावज्ञान-प्रकाशयुक्तः क्रमेण अज्ञानादिप्रतिबन्धकापगमादिति भावः । **मद्भक्तः** मयि प्रवृद्धभक्ति-युक्तः । **तीव्रतपसा** समाधिप्राप्तापरोक्षेण दग्धौ= नाशं प्राप्तौ कर्माणि आशयः=

राजसतामसान्तःकरणं चेत्येतौ यस्य सः । तेन अभिव्यक्तनिजानन्दातिशयो भवति । अनन्तरं मुक्तो भवेदिति भावः ॥ ३६ ॥

**अथानन्तरमावेक्ष्यन् यथाजिज्ञासितागमः ।**
**गुरवे दक्षिणां दत्वा स्नायाद् गुर्वनुमोदितः ॥ ३७ ॥**

**अथ** द्वादशवर्षब्रह्मचर्यानन्तरं प्राप्यं गृहस्थाश्रमं **आवेक्ष्यन्** अनुप्रवेष्टुमिच्छन्, **यथा** अर्थातिक्रमं विना । **जिज्ञासितः** श्रवणमननाभ्याम् अवगतः **आगमः** वेदार्थः येन सः । **स्नायात्** स्नातकव्रतवान् भवेत् । अनन्तरं गृहस्थाश्रमं उपविशेत् ॥ ३७ ॥

**गृहं वनं चोपविशेत् प्रव्रजेद् वा द्विजोत्तमः ।**
**आश्रमादाश्रमं गच्छेन्नान्यथा मत्परश्चरेत्**[1] **॥ ३८ ॥**

अथवा द्विजो ब्रह्मचारी प्रव्रजेद्वा । गृहस्थः **वनम् उपविशेत्** वानप्रस्थो भवेत् **प्रव्रजेद्वा** । ननु प्रथमं सन्यासाद्याश्रमः स्वीकर्तव्यो वा किं वा ब्रह्मचर्यमेव इति जिज्ञासायामाह- **आश्रमादिति** । प्रथमप्राप्तब्रह्मचर्याश्रमादेव आश्रमान्तरं गच्छेत् । गृहस्थाश्रमादेव वानप्रस्थः गच्छेत् । **मत्परः** मयिसक्तः । **अन्यथा** आश्रमं विना प्रथमं ब्रह्मचर्याश्रमं विना **चरेत्** वेदज्ञानादिकं न सम्पादयेदित्यर्थः । त्यजेदिति वा । **अन्यथा** भ्रान्त्या ब्रह्मचर्यं न त्यजेदित्यर्थः ॥ ३८ ॥

गृहस्थाश्रमापेक्षावता च काचन नारी ग्राह्येत्याह- **गृहार्थीति** ।

**गृहार्थी सदृशीं भार्यामुद्वहेदजुगुप्सिताम् ।**
**यवीयसीं तु वयसा यां सवर्णामनुक्रमात् ॥ ३९ ॥**

---

[1] 'मत्परस्त्यजेत्' इत्यपि पाठान्तरं व्याख्याकर्तुर्विवक्षितम् ।

**अजुगुप्सितां** उभयकुलनिन्दारहितां, नेत्रनखादिमलोपेता जुगुप्सिता, स्वभावतः स्वच्छालङ्कृतसुमुखादिसंपन्ना अजुगुप्सिता । **सदृशीं** भूतदयादिधर्मैः आचारे स्वसमानां अत एव भार्यां पोषणार्हां वयसि यवीयसीं अष्टवर्षां उद्वहेत् । यस्याः पाणिग्रहणं कुर्वन् ताम् **अनुक्रमात्** ब्राह्मणादिजातिक्रमं अनुसृत्य **सवर्णां** ब्राह्मणादिजातिं **अनुक्रमात्,** गृह्योक्तविवाहधर्मक्रममनुसृत्य वा **उद्वहेत्** पाणिग्रहणं कुर्यात् ॥ ३९ ॥

**इज्याध्ययनदानानि सर्वेषां च द्विजन्मनाम् ।**
**प्रतिग्रहोऽध्यापनं च ब्राह्मणस्यैव याजनम् ॥ ४० ॥**

**सर्वेषां** ब्रह्मक्षत्रियवैश्यानाम् **इज्या** यागादित्रयम् । अध्यापनम् उपदेशः । **याजनं** यज्ञे होत्रादि कर्म । स्वयं दानप्रतिग्रहः त्रयं **ब्राह्मणस्यैव** न क्षत्रियादेः ॥ ४० ॥

**प्रतिग्रहं मन्यमानस्तपस्तेजोयशोनुदम् ।**
**अन्याभ्यामेव जीवेत सिलैर्वा दोषदृक् तयोः ॥ ४१ ॥**

ब्राह्मणस्य प्रतिग्रहः तपोनुदः । पापद्रव्यस्य कामक्रोधाधिकत्वादिति भावः । **तेजः** पापाभिभवशक्तिः तस्य नुदं दानप्रतिग्रहम् । एतादृशं मन्यमानः **अन्याभ्यां** याजनाध्यापनाभ्यां तयोरपि **दोषदृक्** मद्ध्यमधर्मत्वज्ञानवान् शिलैर्वा अन्येन वा शिलोञ्छाप्रभृतिवृत्तिभिः **जिवेत । शिलया** धान्यकुट्टणादौ विकीर्णधान्यग्रहणं शिला-वृत्तिः । ऊञ्छसंज्ञकधान्यग्रहणम् ऊञ्छवृत्तिः ब्राह्मणस्य उत्तमधर्मोयम् ॥ ४१ ॥

ननु एवं जीवनं क्लेशाकरं कथमुपादेयं इत्याशंक्याह- **ब्राह्मणस्येति ।**

**ब्राह्मणस्य हि देहोऽयं क्षुद्रकामाय नेष्यते ।**
**कृच्छ्राय महते चेह प्रेत्यानन्तसुखाय च ॥ ४२ ॥**

**प्रेत्य** पुण्यलोकं प्राप्य ॥ ४२ ॥

कलत्रादिसानुबन्धस्य गृहस्थस्यापि स्वधर्मानुचरणेन अपवर्ग इत्याह-

**सिलोञ्छवृत्त्या परितुष्टचित्तो धर्मं महान्तं विरजं जुषाणः ।**
**मय्यर्पितात्मा गृह एव तिष्ठन् नातिप्रसक्तः समुपैति शान्तिम् ॥ ४३ ॥**

शिलोञ्छाभ्यां **वृत्या** जीवनेन शिलोञ्छवृत्तिः वा । **विरजम्** स्वर्गादिफलकामना-रहितं **जुषाणः** कुर्वन् । **गृह एव तिष्ठन्नपि** परिग्रहवानपि **नातिप्रसक्तः** अहङ्कारममकार-लक्षणाभिमानरहितः । विषयासक्तिरहितः इति वा । **मय्यर्पितात्मा** मद्ध्यानप्राप्तापरोक्ष-भक्तिसम्पन्नः **शान्तिम्** अत्यन्तं दुःखशान्तिम् अपवर्गं **समुपैति** ॥ ४३ ॥

धर्मप्रसङ्गात् एतादृशपरिग्रहोपेतगृहस्थविप्राणां धनधान्यादिप्रदानेन ये पोषकाः तेषां सर्वानिष्टनिवारणं करोमीत्याह- **समुद्धरन्तीति** ।

**समुद्धरन्ति ये विप्रं सीदन्तं मत्परायणम् ।**
**तानुद्धरिष्ये नचिरादापदो नौरिवार्णवात् ॥ ४४ ॥**

**सीदन्तं** उपवासादिना कार्श्यं प्राप्नुवन्तम् । साध्वी बालपोषणार्थं धान्यादिराहित्ये-नेति भावः । ये **समुद्धरन्ति** पोषयन्ति ॥ ४४ ॥

नरपतेः क्षत्रियस्य धर्ममाह-

**सर्वाः समुद्धरेद् राजा पितेव व्यसनात् प्रजाः ।**
**आत्मानमात्मना धीरो यथा गजपतिर्गजान् ॥ ४५ ॥**

**सर्वाः** स्वराज्ये स्थिताः परस्य राज्ये स्थिताः प्रजाः पिता पुत्रानिव आयुधादि प्राप्तात् व्यसनात् **धीरः** युद्धादौ भयरहितः सन् **समुद्धरेत्** धनधान्यादिप्रदानाच्च **समुद्धरेत्** पालयेत् । **आत्मना** परमात्मना ध्यानविषयेणेति भावः । **आत्मना** मनसा स्वेनैव इति वा । **धीरः** सन् ज्ञानरूपे परमात्मनि रमति ध्यानादिना आत्मासक्त इत्यर्थः । एवं विधः सन् **आत्मानं** स्वं उद्धरेत् । **गजपतिः** व्यसनात् स्वं स्वेनैव उद्धरति **गजांश्च** उद्धरति यथा तथा ॥ ४५ ॥

**एवंविधो नरपतिर्विमानेनार्कवर्चसा ।**
**विधूयेहाशुभं कृत्स्नमिन्द्रेण सह मोदते ॥ ४६ ॥**

**एवं विधः** उक्तस्वधर्मकर्ता परमात्मज्ञानी, **कृत्स्नं** समस्तं **अशुभं विधूय** विमानेन स्वर्गं प्राप्तः ॥ ४६ ॥

पाश्चात्यादिभिः अनावृष्ट्या वा राज्ये उपप्लुते सति अन्नाद्यलाभलक्षणापाय आपदि प्राप्तायां ब्राह्मणादेः जीवनोपायमाह- **सीदन् विप्र** इति ।

**सीदन् विप्रो वणिग्वृत्त्या पण्यैरेवापदं तरेत् ।**
**खळगेन वा पराक्रान्तो न श्ववृत्त्या कथञ्चन ॥ ४७ ॥**

**पण्यैः** क्रयादिद्रव्यैः अथवा पण्यैः क्रयविक्रयप्राप्तद्रव्यैः । **पराक्रान्तः** शत्रुनिग्रह-शक्तिसम्पन्नः । खड्गधारणप्राप्तवेतनेन वा क्षत्रियधर्मेण **आपदं तरेत्** । **श्ववृत्त्या** वर्णावर-सेवया आपदं न तरेत् ॥ ४७ ॥

**वैश्यवृत्त्या तु राजन्यो जीवेन्मृगययाऽऽपदि ।**
**चरेद् वा विप्ररूपेण न श्ववृत्त्या कथञ्चन ॥ ४८ ॥**

**शूद्रवृत्तिं भजेद् वैश्यः शूद्रो वै कारुकक्रियाम् ।**
**कृच्छ्रान्मुक्तो न गर्ह्येण वृत्तिं लिप्सेत कर्मणा ॥ ४९ ॥**

शूद्रः **कारुकक्रियां** कारुकव्यापारं प्राप्य कर्माचरन् लोहेन विविधेन खड्गखनित्र-पात्रादिकरणप्राप्तेन जीवेत । आपन्निवृत्तौ सत्यां स्वधर्ममाह- **कृच्छ्रादिति । कृच्छ्रात्** आपदः सकाशात् **मुक्तः गर्ह्येण** निन्दितेन कर्मणा परधर्मेण **वृत्तिं** जिवनं **न लिप्सेत ॥ ४९ ॥**

गृहस्थधर्मानाह- **वेदाध्यायीति ।**

**वेदाध्यायी स्वधास्वाहाबल्यन्नाद्यैर्यथोदयम् ।**
**नृदेवपितृभूतानि मद्रूपाण्यन्वहं यजेत् ॥ ५० ॥**

**यथोदयं** धनधान्यादिसमृद्धिमनुसृत्य । गृहस्थः **वेदाध्यायी** सन् बलिः= पूजा तदर्थं दातव्यैः **अन्नाद्यैः** पयोदध्याद्यैः । **मद्रूपाणि** प्रतिमावत् मम सान्निध्योपेतानि भूतानि **यजेत् ।** कानि भूतानीति जिज्ञासायामाह- **नृदेवेति ।** नॄन् अन्नैः । पितॄन् स्वधाशब्दसहितान्नाद्यैः, देवान् स्वाहाशब्दसहितान्नाद्यैः दध्यादिभिः **अन्वहं यजेत ॥ ५० ॥**

यजनं येन केन चित् द्रव्येण न कार्यमित्याह- **यदृच्छयेति ।**

**यदृच्छयोपपन्नेन शुक्लेनोपार्जितेन वा ।**
**धनेनापीडयन् भृत्यान् मां यजेतानहं[1] विभुम् ॥ ५१ ॥**

[1] 'यजेतान्वहं' इति पाठान्तरम् ।

**यदृच्छया** अदृष्टप्रेरकपरमात्मना प्राप्तेन धनधान्यादिना, **शुक्लेन** शुद्धेन, दानादिभिरप्राप्तेनेति भावः । उपार्जितेन याचितेन वा **अनहं** अहंकारलक्षणदोषरहितं, **विभुं** सर्वसामर्थ्योपेतं माम् अन्वहं यजेत् ॥ ५१ ॥

**कुटुम्बेषु न सज्जेत न प्रमाद्येत् कुटुम्ब्यपि ।**
**विपश्चिन्नश्वरं पश्येददृष्टमपि दृष्टवत् ॥ ५२ ॥**

**कुटुम्ब्यपि** कुटुम्बवानपि अकुटुम्बीव **कुटुम्बेषु** कलत्रपुत्रादिषु **न सज्जेत** भोग्यबुद्ध्या ममतां न कुर्यात् । ईश्वरसेवाबुद्ध्या कुटुम्बं पोषयेदिति भावः । तेन ममताराहित्येन **न प्रामाद्येत्** कदापि ममतां न कुर्यादित्यर्थः । प्रमादः अनवधानं, श्रीहरिविस्मरणलक्षणपातकरहितो भवेत् इति वा अर्थः । **अदृष्टं** स्वर्गादिकम् ॥ ५२ ॥

स्वदेहस्य क्वचित् काले स्थायित्वेऽपि दारादयः तावन्नस्थायिनः । अतः तत्रासक्तिः न कार्येत्याह- **पुत्रदारेति ।**

**पुत्रदाराप्तबन्धूनां सङ्गमः पान्थसङ्गमः ।**
**अनुदेहं भवन्त्येते स्वप्नो निद्रानुगो यथा ॥ ५३ ॥**

पुत्रादिभिः स्वस्य योगः पान्थानां मार्गे गच्छतां सङ्गम इव कादाचित्कः । केषाञ्चित् स्वयावत्काले स्थायित्वेऽपि देहं देहमनु अन्ये भवन्ति नैकविधा इत्यर्थः । निद्राभेदेन यथा स्वप्नभेदः इति दृष्टान्तार्थः । तस्मात् विषयाः मनसा परित्याज्या इति भावः । ॥ ५३ ॥

**इत्थं परिमृशन् युक्तो गृहेष्वतिथिवद् वसन् ।**
**न गृहैरनुबध्येत निर्ममो निरहंकृतिः ॥ ५४ ॥**

**इत्थं** सर्वं परतन्त्रं **परिमृशन्** मननेन जानन् । **अतिथिवत्** आसक्तिं विना स्वप्रयोजनमात्रपरः सन् निरहंक्रियः स्यात् । ततः गृहे देहानुबन्धिभिः बन्धकैरपि नानुबध्येत इति भावः ॥ ५४ ॥

गृहस्थेनापि निवृत्तं कर्म कर्तव्यमित्याह- **कर्मभिरिति ।**

**कर्मभिर्गृहमेधीयैरिष्ट्वा मामेव भक्तिमान् ।**
**तिष्ठेद् वनं वोपविशेत् प्रजावान् वा परिव्रजेत् ॥ ५५ ॥**

**गृहमेधीयैः** गृहस्थाश्रमप्राप्तैः **कर्मभिः** श्रौतस्मार्तकर्मभिः मामेवोद्दिश्य देहेष्वपि स्थितं माम् उद्दिश्य **भक्तिमान्** सन् न तु फलकामनयेति भावः । **इष्ट्वा** सम्पूज्य **तिष्ठेत्** गृहस्थाश्रमे यावज्जीवं तिष्ठेत् । आश्रमान्तरे अपेक्षा चेत् **वनं** वानप्रस्थाश्रमं वा **उपविशेत् । प्रजावान्** वा ब्रह्मचारी वा **परिव्रजेत्** संन्यासं स्वीकुर्यात् ॥ ५५ ॥

स्वधर्मान् परित्यज्य विषयासक्तस्य नित्यदुःखमाह-

**यस्त्वासक्तमतिर्गेहे पुत्रवित्तेषणातुरः ।**
**स्त्रैणः कृपणधीर्मूढो ममाहमिति बध्यते ॥ ५६ ॥**

**वित्तेषणा** वित्तसङ्ग्रहासक्तिः तया **आतुरः** विविधव्यसनवान् । **कृपणधीः** दीनबुद्धिः धैर्यरहित इत्यर्थः । **मुग्धः** हिताहितज्ञानरहितः । **ममाहमिति** ज्ञानाभ्यां **बध्यते** दुःखी भवति ॥ ५६ ॥

**अहो मे पितरौ वृद्धौ भार्या बालात्मजाऽऽत्मजाः ।**
**अनाथा मामृते दीनाः कथं जीवन्ति दुःखिनः ॥ ५७ ॥**

**एवं गृहाशयाक्षिप्तहृदयो मूढधीरयम् ।**
**अतृप्तस्ताननुध्यायन् मृतोऽन्धं विशते तमः ॥ ५८ ॥**

**॥ इति श्रीमद्भागवते एकादशस्कन्धे सप्तदशोऽध्यायः ॥**

गृहाशया= कलत्राद्यासक्त्या क्षिपन्ति= निरस्तं हितज्ञानरहितं क्षुब्धमिति वा । **अतृप्तः** भोग्येषु अलंबुद्धिरहितः **तान्** कलत्रादीन् विषयान् ॥ ५८ ॥

॥ इति श्रीयादवेन्द्रयतिविरचिते एकादशस्कन्धव्याख्याने सप्तदशोऽध्यायः ॥

# 18 | अष्टादशोऽध्यायः

वानप्रस्थाश्रमस्थितस्य कार्यक्रमं तद्धर्मांश्चाह- **वनं विवक्षुरिति ।**

**श्रीभगवानुवाच-**

**वनं विविक्षुः पुत्रेषु भार्यां न्यस्य सहैव वा ।**

**वनमेव वसेच्छान्तस्तृतीयं भागमायुषः ॥ १ ॥**

**शान्तः** मयि ध्यानासक्तः । **आयुषः तृतीयं भागञ्च** चतुर्मासाधिकत्रयस्त्रिंशद्वर्ष-परिमितं भागम् ॥ १ ॥

**कन्दमूलफलैर्वन्यैर्मेध्यैर्वृत्तिं प्रकल्पयेत् ।**

**वसीत वल्कलं वासस्तृणपर्णाजिनानि वा ॥ २ ॥**

**वन्यैः** वने स्वत एव उत्पन्नैः, **मेध्यैः** पवित्रैः, **वृत्तिं** प्राणधारणं तृणपर्णाजिनानि कीटवत् निर्माय **वसीत** बिभृयात् ॥ २ ॥

**केशरोमनखश्मश्रुमलानि**[1] **बिभृयाद् व्रती ।**

**न धावेदप्सु मज्जेत त्रिकालं स्थण्डिलेशयः ॥ ३ ॥**

केशाः= शिरसि स्थिताः रोमाणि= देहभागेषु स्थितानि । श्मश्रूणि= कपोल-चुबुकयोः स्थितानि, तेषां मलानि च, क्षौराभ्यङ्गं न कार्यमिति भावः । **व्रती** एव मद्व्रतसंपन्नो भवेदित्यर्थः । **न धावेत्** दन्तधावनं न कुर्यात् । **अप्सु** शीघ्रं न गच्छेत्

---

[1] 'केशलोमनखश्मश्रुमलानि' इति पाठान्तरम् ।

इति वा । उदकस्थप्राणिहिंसापरिहारयेति भावः । धावनं अतिवेगेन गतिः, वर्षति न धावेदिति वा । कालत्रये **मज्जेत** स्नायात् । स्थण्डिले= शय्यारहिते भुवि ॥ ३ ॥

**ग्रीष्मे तप्येत पञ्चाग्निर्वर्षास्वासारषाड् जले ।**
**आकण्ठमग्नः शिशिर एवंवृत्तस्तपश्चरेत् ॥ ४ ॥**

पञ्च सूर्यादयः अग्नयः उपरि परितश्च यस्य सः **पञ्चाग्निः** सन् **तप्येत** तपः कुर्यात् । आसारं सहत इति **आसारषाट्** वर्षवेगसहः । **शिशिरे** ऋतौ तपश्चरेत् । एवंवृत्तः एवं जीवनादिव्यापारसंपन्नः तपश्चरेत् ॥ ४ ॥

**अग्निपक्वं समश्नीयात् कालपक्वमथापि वा ।**
**उलूखल्यश्मकुट्टो वा दन्तोलूखल एव वा ॥ ५ ॥**

**कालपक्वं** कपित्थादि, उलूखलेन स्थूलपिष्टकरणादिसाधनेन अश्मनि वा कुट्टनं यस्य सः उलूखलाश्मकुट्टः तण्डुलाः पिष्टानि वा तद्वान् **उलूखलाश्मकुट्टः** । दन्ताः उलूखलमिव पिष्टादिसाधनं यस्य सः । एवं विधो भवेत् ॥ ५ ॥

**स्वयं सञ्चिनुयात् सर्वमात्मनो वृत्तिकारणम् ।**
**देशकालबलाभिज्ञो नाददीतान्यदाहृतम् ॥ ६ ॥**

**आत्मनः** देहस्य **वृत्तिकारणं** प्राणधारणकारणं **सञ्चिनुयात्** स्वयमानयेत् । देशः= फलवृक्षवन्यधान्याद्युपेतदेशः, कालः= फलधान्यादिसंपत्तिप्रयोजनकः, बलं= देहस्य एकद्वित्र्युपवाससहनसामर्थ्यादीनि जानातीति तादृशः सन् तस्मिन् दिने आहृतं फलादि आददीत । अन्यत्= दिनव्यावर्तितं **नाददीत** । देशे काले वा दुर्लभं चेत् न भोज्यमिति भावः ॥ ६ ॥

**वन्यैश्चरुपुरोडाशान् निर्वपेत् कालचोदितान् ।**
**न तु श्रौतेन पशुना मां यजेत वनाश्रमी ॥ ७ ॥**

**कालचोदितान्** प्रतिपदादिकालेषु कर्तव्यतया विहितान् । चरुषु पुरोडाशान् **निर्वपेत्** कुर्यात् । तानुद्दिश्य धान्यकुट्टनं कृत्वा शूर्पेण वितुषं कृत्वा, तण्डुलादिकरण-पुरस्सरं चरुम्= ओदनं, पुरोडाशं= पिष्टविकारं, एवमादिना देवतोद्देशेन द्रव्यत्यागलक्षणं यागं कुर्यात् इत्यर्थः । पूर्ववत् गृहस्थाश्रम इव श्रौतेन विधिना मां वनाश्रमी न यजेत ॥ ७ ॥

**अग्निहोत्रं च दर्शं च पूर्णमासं च पूर्ववत् ।**
**चातुर्मास्यानि च मुनेराम्नातानि च नैगमैः ॥ ८ ॥**

**अग्निहोत्रं** वा, दर्शसंबन्धि **दर्शं** त्रिकं, पौर्णमाससम्बन्धि पौर्णमासं तत्संबन्धि-त्रिकम् । चातुर्मास्यं कर्म एवमादीनि **नैगमैराम्नातानि** निगमो वेदः, वेदसंबन्धिकल्प-सूत्रादिभिः प्रतिपादितानि कर्माणि मुनेरपि तु अपरित्यागेन कर्तव्यानि ॥ ८ ॥

**एवं चीर्णेन तपसा मुनिर्धमनिसन्ततः ।**
**मां तपोमयमाराध्य ऋषिलोकादुपैति माम् ॥ ९ ॥**

**चीर्णेन** सम्पादितेन । **धमनिसन्ततः** अजस्राग्निहोत्रसम्पन्नः इत्यर्थः । **मुनिः तपोमयं** तपसा प्राप्येषु प्रधानमित्यर्थः । तं **तपोमयं** ज्ञानरूपं इति वा । ऋषिलोकादु-पस्थितं मामुपैति ॥ ९ ॥

एवं सम्पादितेन वनस्थाश्रितधर्मेण श्रवणादिध्यानपुरस्सरं मदपरोक्षं असम्पाद्य यः लौकिकपुरुषार्थाय ऐश्वर्यादिसिद्धये यतते स **बालिशः** मन्दादपि मन्दः इत्याह- **यस्त्वेवमिति** ।

**यस्त्वेवं कृच्छ्रतश्चीर्णं तपो निःश्रेयसं महत् ।**
**कामायाल्पीयसे युञ्ज्याद् बालिशः कोऽपरस्ततः ॥ १० ॥**

**यदाऽसौ नियमेऽकल्पो जरया जातवेपथुः ।**
**आत्मन्यग्निं समारोप्य मच्चित्तोऽग्निं समाविशेत् ॥ ११ ॥**

**असौ** वानप्रस्थाश्रमस्थः **जातवेपथुः** देहकम्पवान्, **नियमे** आश्रमधर्माचरणे **अकल्पः** असमर्थः यदा तदा अजस्राग्निं **आत्मनि समारोप्य** सन्निधाप्य ॥ ११ ॥

संन्यासस्वीकारक्रमं तद्धर्मांश्चाह- **यदा कर्मविपाकेष्विति** ।

**यदा कर्मविपाकेषु**[1] **लोकेषु निरयात्मसु ।**
**विरागो जायते सम्यङ् न्यस्ताग्निः प्रव्रजेत् ततः ॥ १२ ॥**

**निरयात्मसु** नरकसुखसहितेषु । विषयदुःखसुखयोः नियतसम्बन्धदर्शनात् इति भावः । **प्रव्रजेत्** संन्यसेत् ॥ १२ ॥

**इष्ट्वा यथोपदेशं मां दत्वा सर्वस्वमृत्विजे ।**
**अग्नींश्च प्राण आवेश्य निरपेक्षः परिव्रजेत् ॥ १३ ॥**

---

[1] 'धर्मविपाकेषु' इति पाठान्तरम् ।

**यथोपदेशम्** संन्याससस्वीकारमनुसृत्य, **मां** देवांश्च **इष्ट्वा, ऋत्विजे** विरजाहोमादि-कर्त्रे **सर्वस्वं** स्वीयं सर्वं वस्तु दत्वा, देवादिप्रसादं संपाद्य इति भावः, **प्राणे** अन्तर्यामिणि । **निरपेक्षः** संन्यासधर्मश्रवणप्राप्यपुण्यलोकापेक्षारहितः[1] ॥ १३ ॥

फलकामनया संन्याससस्वीकारे, देवताराधनाकरणे च संन्यासो दुर्लभ इत्याह- **विप्रस्येति ।**

**विप्रस्य वै सन्न्यसतो देवा दारादिरूपिणः ।**
**विघ्नं कुर्वन्त्ययं ह्यस्मानाक्रम्य समियात् परम् ॥ १४ ॥**

**दारादिरूपिणः** दारादिषु स्थिताः देवाः । दारादिरूपान्निमित्तात् इति वा । **विघ्नं कुर्वन्तीति ।** किमर्थं देवा विघ्नं कुर्वन्ति? इत्यत आह- **अयं ह्यस्मानिति । अयं** संन्यासग्रहणेच्छुः, **अस्मान्** देवजातीन् **आक्रम्य** अविगणय्य, **परं** पुरुषार्थं, परमात्मानं वा, समियात् इति बुद्ध्या विघ्नं कुर्वन्तीव । असाधूनाञ्च संन्यासभ्रंश एवेति भावः ॥ १४ ॥

परमहंसानां दिगम्बरत्वं गुणः । कलियुगे भिक्षार्थं ग्रामप्रवेशस्य आवश्यकत्वात् कौपीनधारणं अनुमतमित्याह- **बिभृयाच्चेदिति ।**

**बिभृयाच्चेन्मुनिर्वासः कौपीनाच्छादनं परम् ।**
**त्यक्तं न दण्डपात्राभ्यामन्यत् किञ्चिदनापदि ॥ १५ ॥**

**दृष्टिपूतं न्यसेत् पादं वस्त्रपूतं पिबेज्जलम् ।**
**सत्यपूतं वदेद् वाचं मनःपूतं समाचरेत् ॥ १६ ॥**

[1] 'संन्यासधर्माचरणप्राप्यपुण्यलोकापेक्षारहितः' इति पाठेन भाव्यमिति भाति ।

कौपीनम् आच्छादनं कन्थां वा दण्डपात्राभ्यां सह बिभृयात् स्वीकुर्यात् । **परं** एतदन्यत् **त्यक्तं** मया संन्यस्तमिति त्यक्तं **अनापदि किञ्चिदपि** न बिभृयात् । आपदि तु अन्यत् कौपीनादेरन्यत् यथोचितं बिभृयादिति भावः । **कौपीनाच्छादनं परं** एकमेव कौपीनलक्षणं आच्छादनं वा । शीतोष्णलक्षणबन्धसहनसामर्थ्ये सतीति भावः । बिभृयादिति वा । **दृष्टिपूते** भुवि पिपीलिकादिहिंसां परिहृत्य इति भावः ॥ १६ ॥

संन्यासस्य त्रिदण्डोऽस्तीत्याह- **मौनेति** ।

**मौनानीहानिलायामदण्डो वाग्देहचेतसाम् ।**
**न ह्येते यस्य सन्त्यङ्ग वेणुभृन्न**[1] **भवेद् यतिः ॥ १७ ॥**

**मौनं** श्रीहरेरन्यस्य वचसा अनुक्तिः । इत्थंभूतलक्षणे तृतीया । मौनलक्षणो **वागदण्डः** । परमात्मनि वाङ्नियमनमित्यर्थः । **अनीहा** विषयापेक्षाराहित्यम् । परमात्मन्येव चेतसः नियमः **अनिलायामः** । किल्बिषपरिहारेण परमात्मसेवोपयुक्तत्वम् इत्यर्थः । एतल्लक्षणोपेतः त्रिदण्डः । यस्य संन्यासिसंज्ञकस्य एते मौनादयः नियमनानि न सन्ति स वेणुभृदपि मस्कर्यपि यतिः इन्द्रियविजयवान् न भवेत् । वेणुभिरिति वा ॥ १७ ॥

त्रेतायुगादिधर्ममाह- **भिक्षामिति** ।

**भिक्षां चतुर्षु वर्णेषु विगर्ह्यान् वर्जयंश्चरेत् ।**
**सप्तागारानसंक्लृप्तांस्तुष्येल्लब्धेन तावता ॥ १८ ॥**

---

[1] 'वेणुभिर्न' इति पाठान्तरम् ।

कलौ **विगर्ह्यान्** प्रायशः तद्गृहान् वर्जयित्वा, असंक्लृप्तान् निमन्त्रणरहितान् । गृहान् प्रति भिक्षामुद्दिश्य **चरेत्** पृच्छेत् । ननु यदि भिक्षार्थं भवद्गृहं प्रति आगमिष्यति इति क्लृप्तिराहित्ये सति सप्तेति नियमे सति कदाचित् अपेक्षितान्नालाभे सति किं कर्तव्य- मिति जिज्ञासायामाह- **तावता** स्वल्पेनापि लब्धेनान्नेन **तुष्येत्** अलम्बुद्धिं सम्पादयेत् ॥ १८ ॥

व्यञ्जनदध्याद्याकाङ्क्षया कस्यचित् गृहे न भोक्तव्यमित्याह- **बहिर्जलाशयमिति** ।

**बहिर्जलाशयं गत्वा तत्रोपस्पृश्य वाग्यतः ।**
**विभज्य याचतः शेषं भुञ्जीताशेषमाहृतम् ॥ १९ ॥**

**जलाशयं** नदीं तटाकादिकं वा गत्वा **उपस्पृश्य** उचितस्नानादि कृत्वा **वाग्यतः** छात्रैः सह तदा सम्भाषणमकुर्वन्, **आहृतम्** अन्नं **याचतः** अन्नार्थिनः **विभज्य** दत्वा **शेषं भुञ्जीत** गृहस्थवत् केवलम् । एकं वा न परित्यजेदित्यर्थः ॥ १९ ॥

**एकश्चरेन्महीमेतां निःसङ्गः संयतेन्द्रियः ।**
**आत्मक्रीड आत्मरत आत्मवान् समदर्शनः ॥ २० ॥**

यदि तीर्थयात्राद्यपेक्षा तदा एकः चरेत् । **निस्सङ्गः** तीर्थाटनकर्तृभिः सह सञ्चाररहितः । **निस्सङ्गः** तदा स्वस्मिन् पूजाकर्तृषु प्रीतिरहितो वा । जनेषु प्रीतेर्बन्धक- त्वादिति भावः । देहाभिमानरहितो वा । अत एव संयतानि विषयेभ्यः आकृष्टानि, इन्द्रियाणि येन सः । समत्वेन दर्शनं यस्य सः **समदर्शनः,** श्रीहरेः सर्वावतारेष्वपि सर्वगुणशक्त्यादिपूर्णत्वज्ञानवान् समदर्शनः । हिताहितकर्तृषु रागद्वेषरहितो वा, हिता- हितयोः स्वकर्मप्राप्तबुद्ध्या इति भावः । अत एव **आत्मवान्** प्रशस्तमनाः, मनस्सम्पन्नः श्रीहरिध्यानाय इति भावः । यदि जामितापरिहारार्थं कदाचित् स्वस्य जनैः सह लीला

अपेक्षिता तदा आत्मना सह क्रीडा लीला यस्य सः, श्रीकृष्णस्य नवनीतचौर्यादौ पृथुकतण्डुलजलस्वीकाराद्यनुसन्धानं तेन हासश्च, आत्मना क्रीडति इति भावः । यदि सुखापेक्षा तदा आत्मना ध्यानविशेषेणेति भावः । एवं निजसुखं यस्य सः एतादृशो भवेदित्यर्थः ॥ २० ॥

प्रधानं कर्तव्यमाह- **विविक्तेति ।**

**विविक्तक्षेमशरणो मद्भावविमलाशयः ।**
**आत्मानं चिन्तयेदेकमभेदेन मया मुनिः ॥ २१ ॥**

विविक्तं जनसञ्चाररहितं, क्षेमसहितं, शरणं, निवासस्थानं यस्य सः । मद्भावेन मयि दृढभक्त्या, विमलः= निरस्तरजस्तमोभावः, आशयः= अन्तःकरणं यस्य सः, एतादृशः सन् **आत्मानं** अन्तर्यामिणं, **मया अभेदेन** चिन्तयेत् । अनन्तरं सर्वकल्याणगुणैः समरहितं **आत्मानं** अन्तर्यामिणं चिन्तयेत् । **एकं** सर्वदेशादिषु प्रधानत्वेन चिन्तयेत् इति वा ॥ २१ ॥

अविळम्बेन मद्ध्यानादौ प्रवृत्तौ भक्तानां हितमुपदिशति- **अन्वीक्षेतेति ।**

**अन्वीक्षेतात्मनो बन्धं मोक्षं च ज्ञाननिष्ठया ।**
**बन्ध इन्द्रियविक्षेपो मोक्ष एषां च संयमः ॥ २२ ॥**

इन्द्रियविक्षेपप्राप्तः बन्धः, कार्यकारणयोरभेदोक्तिः । विषयभोगप्राप्तः कर्मलक्षणः प्रधानो बन्धः, तं **आत्मनः** स्वस्मिन् **अन्वीक्षेत । ज्ञाननिष्ठया** स्वतन्त्रपरतन्त्रचेतना-चेतनगुणदोषादिज्ञानोत्कर्षेण **एषाम्** इन्द्रियाणां **संयमः** परमात्मन्येव प्रवर्तनं, तेन

प्राप्तो यो **मोक्षः** अत्यन्तं दुःखराहित्यम् । तं मोक्षं **आत्मनः** प्रसादात् **अन्वीक्षेत ॥** २२ ॥

**तस्मान्नियम्य षड्वर्गं मद्भावेन चरेन्मुनिः ।**
**विरक्तः क्षुल्लकामेभ्यो लब्ध्वाऽऽत्मनि सुखं महत् ॥ २३ ॥**

**षड्वर्गं** इन्द्रियसङ्घम् । मयि **नियम्य** श्रीहरिकथाश्रवणतत्प्रतिमादर्शनादिरूपेण इति भावः । **तस्मात्** ज्ञानात् **मद्भावेन** दृढभक्त्या, **आत्मनि** स्वस्मिन् स्थितं **सुखं लब्ध्वा चरेत्** श्रवणाद्यावृत्तिं कुर्यादित्यर्थः ॥ २३ ॥

मस्करिणः अन्नफलादिस्वीकारार्थं सञ्चारार्हप्रदेशानाह- **पुरमिति ।**

**पुरग्रामव्रजान् सर्वान् भिक्षार्थं प्रविशंश्चरेत् ।**
**पुण्यदेशसरिच्छैलवनाश्रमवतीं महीम् ॥ २४ ॥**

राजराजाश्रयः **पुरम्** । बहुजनावासस्थानं **ग्रामः** । व्रजान्= गोनिवासस्थलानि । आश्रमः= ऋषिनिवासभूमयः **चरेत्** । एतान् प्रविशन् **महीं चरेत्** तीर्थयात्रां कुर्यात् ॥ २४ ॥

ग्रामादिषु पुर्यां वा भिक्षाटनेन मृष्टान्नलाभे सति तत्रासक्तो न भवेदित्याह- **वानप्रस्थेति ।**

**वानप्रस्थाश्रमपदेष्वभीक्ष्णं भैक्ष्यमाचरेत् ।**
**संसिद्ध्यत्याश्वसंमोहः शुद्धसत्वः शिलान्धसा**[1] **॥ २५ ॥**

वानप्रस्थानां पदेषु= आवासस्थानेषु **अभीक्ष्णं** पुनःपुनः बहुदिनानि **भैक्ष्यं** भिक्षाटनं **आचरेत्** कुर्यात् । वानप्रस्थेषु बहुशः भिक्षाग्रहणस्य फलमाह- **संसिद्ध्यतीति ।**

---
[1] 'सिलान्धसा' इति पाठान्तरम् ।

**शिलान्धसा** धान्यकुट्टनशिलाविकीर्णधान्यान्नभोजनेन इत्यर्थः । **शुद्धसत्वः** शुद्धं= राजसादिद्रव्योपचयरहितं सत्वं= अन्तःकरणं यस्य सः । **असंमोहः** देहादिषु अहङ्कार-ममकारादिज्ञानरहितः **आशु संसिद्धयति** समाधिसंपन्नो भवति ॥ २५ ॥

दुःखबन्धविरोधिज्ञानपाटवं सम्पादनीयमित्याह- **नैतद्वस्तुतयेति ।**

**नैतद् वस्तुतया पश्येद् दृश्यमानं विनश्वरम् ।**
**असक्तचित्तो विरमेदिहामुत्र चिकार्षितात् ॥ २६ ॥**

**दृश्यमानं** सुखहेतुतया प्रतीयमानम्, **एतद्** विषयजातं **वस्तुतया** स्वतः फलदातृत्वेन **न पश्येत् ।** अचेतनस्य स्वतो व्यापारायोगादिति भावः । **विनश्वरं पश्येत् ।** एवं ज्ञानदार्ढ्यसम्पादनस्य प्रयोजनमाह- **असक्तचित्तः** विषयेष्वादररहितचित्तः सन् **इहामुत्र** भूमिस्वर्गादौ **चिकीर्षितात्** सम्पादयितुमिष्टात् विषयसुखात् **विरमेत्** निवृत्तो भवेत् । स्वतः सर्वेष्टप्रदे परमात्मनि सक्तो भवेदिति भावः ॥ २६ ॥

विषयसमूहस्य कथमवस्तुत्वं ज्ञातव्यमिति जिज्ञासायामाह- **यदेतदिति ।**

**यदेतदात्मनि जगन्मनोवाक्प्राणसम्भृतम् ।**
**सर्वं मायेति तर्केण स्वस्थस्त्यक्त्वा न तत् स्मरेत् ॥ २७ ॥**

प्राणः देहबलमित्यर्थः । **मनोवाक्प्राणाः** जनकाः यस्य तत् कर्म तेन **सम्भृतं** जीवकर्मणा उत्पन्नमित्यर्थः । **आत्मनि** परमात्माधारतया स्थितं **जगत् सर्वं माया** नित्यसुखलक्षणफलरहितं भवति । ईश्वरोपासनमेव नित्यसुखलक्षणफलसंपादकमिति भावः । कुतः नित्यसौख्यकारणत्वं जगतो नास्ति इति जिज्ञासायामाह- **मायेति** यतः गुणात्मकप्रकृतिजन्यं तस्मात् । तमोगुणकार्यस्य दुःखजनकत्वादिति भावः । इति

**तर्केण** सर्वस्मिन् असत्वानुमानेन, **त्यक्त्वा** विषयजातं परित्यज्य **तत्** विषयजातं मनसाऽपि **न स्मरेत्,** रागादिपुरस्सरं बन्धहेतुत्वादिति भावः । एवं दृढज्ञानस्य नित्यसौख्यसंपादकमाह- **स्वस्थ** इति । स्वतन्त्रे परमात्मनि समाधिना स्थितः भवेत् । समाधेः नित्यसौख्यफलकत्वादिति भावः ॥ २७ ॥

ननु ज्ञानादिसम्पन्नस्य संन्यासे अधिकारो वा जिज्ञासोरपि अधिकारो वा इति जिज्ञासायामाह- **ज्ञाननिष्ठ** इति ।

**ज्ञाननिष्ठो विरक्तो वा मद्भक्तो वाऽनपेक्षकः ।**
**सलिङ्गानाश्रमान् मुक्त्वा चरेदविधिगोचरः ॥ २८ ॥**

निष्ठा= उत्कर्षः संन्यासे ज्ञानोत्कर्षवान् अधिकारी । वा पक्षान्तरम् । जिज्ञासुरधिकारी विरक्तोप्यधिकारी । दृढं मद्भक्तःअधिकारी । संन्यासे भक्तिमानप्यधिकारी । **सलिङ्गान्** द्विजलिङ्गं यजनं शिखोपवीतादिकं वा एतत्सहितानाश्रमान् ब्रह्मचर्यादिकं त्यक्त्वा, **अविधिगोचरः** सन् विधिविहितयागादिकर्मरहितः संन्यासी सन् इत्यर्थः । **चरेत्** परमात्मानमेव श्रवणाद्यावृत्त्या परोक्षतो जानीयादित्यर्थः ॥ २८ ॥

ख्यातिलाभे पूजासंपादनपुरस्सरं गर्वादिहेतून् स्वगुणान् न प्रकटयेत् इति हितं उपदिशति **बुध** इति ।

**बुधो बालकवत् क्रीडेत् कुशलो जडवच्चरेत् ।**
**वदेदुन्मत्तवद् विद्वान् गोचर्यां नैगमश्चरेत् ॥ २९ ॥**

**बुधोऽपि** धर्माधर्मज्ञानवानपि बालक इव क्रीडन् विचरेत् स्वात्मानं प्रदर्शयेत् । **कुशलः** कार्याकार्यवर्णने विचक्षणोऽपि **जडवत्** बुद्धिरहितवत् **चरेत्** । **विद्वान्** सम्भाषणे

उचितानुचितज्ञोऽपि **उन्मत्तवत्** तत्सङ्गवत् वदेत् । कुशलवत् न वदेत् । लोकमनुसृत्य न वदेदिति भावः । **नैगमोऽपि** परमात्मध्याननिष्ठोऽपि **गोचर्यां** गौः= पशुः लौकिकार्थ-ज्ञानरहितः तस्य चर्यां= वृत्तिं अन्नादिग्रहणव्यापारं **चरेत्** कुर्यात् । एवं स्वात्मानं विष्णुभक्तिरहितान् प्रति दर्शयेदिति भावः ॥ २९ ॥

**वेदवादरतो न स्यान्न पाषण्डी न हैतुकी ।**
**शुष्कवादविवादेन कञ्चित्पक्षं न संश्रयेत् ॥ ३० ॥**

**वेदवादरतः** तर्कमात्रेण वेदार्थस्य विरोधं प्रतीत्य वेदस्य अन्यार्थकल्पना वेदवाद-शब्दार्थः । तत्र रतः तत्कर्ता न भवेदित्यर्थः । किन्तु इतिहासपुराणवेदाङ्गसहितोप-क्रमादिवेदवाक्यानुसारेण वेदार्थं जानीयादिति भावः । पाषण्डवान् **पाषण्डी** । पाशुपत-शाक्तबौद्धादिमतानि पाषण्डशब्दार्थः । पाषण्ड आदरवान् न भवेदित्यर्थः । **हैतुकी** हेतुवादी, कणादगौतमादिमते आदरवान् न भवेदित्यर्थः । शुष्कवादलक्षणविवादेन, **शुष्कवादो** नाम परमात्मगुणज्ञानानुपयुक्तवादः, वार्तिकसूत्रयोः वैयर्थ्यं विवादः, प्राभाकरभट्टयोः सत्वासत्वविवादः, एवमादिविवादः, तेन इत्थंभूतलक्षणे तृतीया, तेन सहेति वा । **कञ्चित् पक्षं न संश्रयेत्** धीरः ॥ ३० ॥

**नोद्विजेत जनाद् धीरो जनं चोद्वेजयेन्न तु ।**
**अतिवादांस्तितिक्षेत नावमन्येत कञ्चन ॥ ३१ ॥**
**देहमुद्दिश्य पशुवद् वैरं कुर्यान्न केनचित् ॥ ३२ ॥**

ज्ञानेन धैर्यसम्पन्नः भवेत् । **जनात् नोद्विजेत** चकितो न भवेत् । **जनं नोद्वेजयेत्** तेन तत्र स्थितेश्वरापराधः स्यात् । **अतिवादान्** स्वव्याहत्यादिदोषयुक्तप्रश्नादीन् तत्वज्ञान-लक्षणफलरहितविवादान् **तितिक्षेत** परित्यजेदित्यर्थः । **कञ्चन** विष्णुभक्तम् ॥ ३२ ॥

**एक एव परो ह्यात्मा भूतेष्वात्मन्यवस्थितः ।**
**खं यद्वदुदपात्रेषु भूतान्येकात्मकानि च ॥ ३३ ॥**

**अलब्ध्वा न विषीदेत कालेकालेऽशनं क्वचित् ।**
**लब्ध्वा न हृष्येद् धृतिमानुभयं दैवतन्त्रितम् ॥ ३४ ॥**

**परः** सम्पूर्णकल्याणगुणः **आत्मा** अन्तर्यामी **एक एव** एकविध एव, वैषम्य-नैर्घृण्यादिरहित एव इत्यर्थः । **भूतेषु आत्मनि च आस्थितः ।** भूतावमानः विष्णववमान-तया पर्यवस्यतीत्याह- **खं यद्वदिति । उदपात्रेषु** घटादिषु स्थितं **खं** महाकाशः **यद्वत्** यथा भूतानां उपजीव्यं, अवकाशे सति हि घटादेरवस्थानमिति भावः । तथा **एकात्मकानि** एकः आत्मा अन्तर्यामी उपजीव्यो येषाम् । अतः देवप्रसादं सम्पादयेदिति भावः ॥ ३४ ॥

दुर्भिक्षादौ कदाचित् विहितान्नालाभेऽपि निषिद्धेनेवान्नेन देहधारणं कर्तव्यमित्याह- **आहारार्थमिति ।**

**आहारार्थं समीहेत युक्तं तत्प्राणधारणम् ।**
**तत्वं विमृश्यते तेन तद् विज्ञाय विमुच्यते ॥ ३५ ॥**

**समीहेत** प्रयत्नं कुर्यात् । **तत्** तेन आहारेण **प्राणधारणं युक्तं** भवेदित्यर्थः । प्राणधारणस्य प्रयोजनमाह- **तेन** प्राणधारणेन निमित्तेन स्वतन्त्रपरतन्त्रलक्षणं **तत्वं विमृश्यते** सम्यक् ज्ञायेतेत्यर्थः । ततः सर्वतत्वेश्वरं स्वतन्त्रपरमात्मानं **विज्ञाय विमुच्यते** सुखावरणदुःखाद् विमुच्यते । अत्यन्तं मुक्तो भवति । सदा निजानन्दानुभववांश्च भवति इति भावः । तस्माद् देहे ममकारपरित्यागेऽपि ईश्वरसेवार्थं तत्पोषणं कर्तव्यमिति भावः ॥ ३५ ॥

सुभिक्षादौ स्थितिप्रकारमाह- **यदृच्छयेति ।**

**यदृच्छयोपपन्नान्नम् अद्याच्छ्रेष्ठमुतापरम् ।**
**तथा वासस्तथा शय्यां प्राप्तं प्राप्तं भजेन्मुनिः ॥ ३६ ॥**

अपरं अमृष्टान्नं वा । शीतादिषु वस्त्रधारणमाह- **तथा वासमिति । भजेत्** स्वीकुर्यात् ॥ ३६ ॥

विधिनिषेधचकिततया कर्माचरणे सति फलबाहुल्याभावात् ईश्वरप्रसादलक्षण-महाफलसिद्धये नरकादिभयं विना ईश्वराज्ञात्वेन गौरवेण धर्मः कर्तव्य इत्याह- **शौचमिति ।**

**शौचमाचमनं स्नानं न तु चोदनया चरेत् ।**
**अन्यांश्च नियमान् ज्ञानी यथाऽहं लीलयेश्वरः ॥ ३७ ॥**

**चोदनया** विधिचकिततया **नाचरेत् ।** कया बुद्ध्या शौचादि कर्तव्यमिति जिज्ञासा-यामाह- **यथाऽहमिति ।** अहं लीलया यथा जगद्व्यापारं नियमांश्च करोमि न तु परभयात् करोमि, तथा चरेत् ॥ ३७ ॥

विधिनिषेधयोः शास्त्रचकिततया आचरणाभावे निमित्तान्तरमाह- **नहीति ।**

**नहि तस्य विकल्पाख्या क्रिया मद्वीक्षया हता ।**
**आदेहान्तं क्वचित् ख्यातिस्ततः सम्पद्यते मया ॥ ३८ ॥**

**मद्वीक्षया** मम दयादृष्ट्या **तस्य** ज्ञानिनः मम अपरोक्षेणेति वा **क्रिया** पापादिरूपा (हता हि), अतः **तस्य** ज्ञानिन **आदेहान्तं** तस्य ज्ञानिनः क्वचित् ख्यातिः अधर्मबुद्धि-

श्चेदपि[1] विकल्पः= विधिविरुद्धत्वेन कल्पनम् इत्याख्या= व्यपदेशो न हि । ज्ञानी अधर्मं करोतीति व्यपदेशो नहि । ततः प्रारब्धकर्मावसानसहितापरोक्षेण **मया सम्पद्यते** सालोक्यादिमान् भवति ॥ ३८ ॥

गुरुकुलवासाद्यनन्तरं सप्तत्यूर्ध्वं यस्य सन्यासः तस्य धर्मानुक्त्वा बाल्ये यस्य संन्यासः तस्यापि श्रवणादिधर्मानाह- **दुःखोदर्केष्विति** । अथवा एतादृशम् अपरोक्षज्ञानं कथं सम्पादनीयमिति आदरात् पुनर्जिज्ञासायां श्रवणादिपुरस्सरं सम्पादनीयमित्याह- **दुःखोदर्केष्विति** । काम्येषु कथं दृढविराग इति जिज्ञासायामाह- **दुःखोदर्केष्विति** ।

**दुःखोदर्केषु कामेषु जातनिर्वेद आत्मवान् ।**
**अजिज्ञासितमद्धर्मो गुरुं मुनिमुपाव्रजेत् ॥ ३९ ॥**

**दुःखोदर्केषु** विषयभोगात् सुखमेकम्, दुःखानि दशेति भावः । अजिज्ञासिताः= अश्रुताः श्रवणेन अनिर्धारिताः इत्यर्थः । मद्धर्माः= पूर्णकल्याणगुणशक्त्यादयः येन स **मुनिं** स्वतन्त्रपरतन्त्रतत्वनिर्धारणसम्पन्नं **गुरुं** प्रवचनासक्तम् **उपाव्रजेत्** प्राप्नुयात् ॥ ३९ ॥

**तावत् परिचरेद् भक्तः श्रद्धावाननसूयकः ।**
**यावद् ब्रह्म विजानीयान्मामेव गुरुमादृतः ॥ ४० ॥**

**श्रद्धावान्** शास्त्रेषु विश्वासवान् सन् **तावत्** वत्सरपर्यन्तं **गुरुं** तत्र स्थितं **मां** च प्रति **परिचरेत्** सेवां कुर्यात् । **यावद्ब्रह्म विजानीयात्** तावत्पर्यन्तम्, संन्यासी चेत् पादसंहननादि न, यथोचितं सेवां विद्याप्राप्त्यनन्तरमपि कुर्यादिति भावः[2] ॥ ४० ॥

---

[1] अयं सम्भावितः पाठः । 'क्वचित् अधर्मख्यातिः बुद्धिश्चेदपि' इति मूलपुस्तके । [2] अयं सम्भावितः पाठः । मूलपुस्तके 'यावद्ब्रह्म विजानीयात् तावत्पर्यन्तं संन्यासी चेत् पादसंहननादि न चेद् यथोचितां सेवां विद्याप्राप्त्यनन्तरमपि गुरुशुश्रूषां कुर्यादिति भावः' इति पठ्यते । बन्नञ्जे-गोविन्दाचार्यैरुदाहृते तु पाठे 'यावद्ब्रह्म विजानीयात् तावत्पर्यन्तम् । विद्याप्राप्त्यनन्तरमपि यथोचितं शुश्रूषां कुर्यात्' इति पठ्यते ।

उक्तधर्मरहितस्य संन्यासवेषयुक्तस्य नरके पतनमाह- **यस्त्विति ।**

**यस्त्वसंयतषड्वर्गः प्रचलेन्द्रियसारथिः**[1] **।**
**ज्ञानवैराग्यरहितस्त्रिदण्डमुपजीवति ॥ ४१ ॥**

**असंयतषड्वर्गः** असंयतः अवशीकृतः षड्वर्गः येन रसादीन्द्रियार्थभोगवान् इत्यर्थः । प्रचलः= ईश्वरध्यानचलवान्, इन्द्रियसारथिः= मनः यस्य सः, सततं विषयचिन्तायुक्त इत्यर्थः । **त्रिदण्डं** सन्यासाश्रमं अत्र रूढिस्वीकारः । **उपजीवति** संन्यासप्रदर्शनेन लाभं पूजादिकं सम्पादयति ॥ ४१ ॥

**सुरानात्मानमात्मस्थं निह्नुते मां च धर्महा ।**
**अविपक्वकषायोऽस्मादमुष्माच्च विहीयते ॥ ४२ ॥**

सः **सुरान्** तत्वदेवान्, **आत्मस्थं** देहे विद्यमानमन्तर्यामिणम् **आत्मानं** स्वरूपं आनन्दानुभवं **निह्नुते** अपलपति स्वधर्महा च भवति । सः **अविपक्वकषायः** चेतोमलानि पापादयः अविपक्वा अनिवृत्ताः यस्य एतादृशः । **अस्मात्** भुवि स्थितात् सौख्यात्, **अमुष्मात्** स्वर्गस्थात् सौख्यात् **विहीयते** हीनो भवति । तस्य नरकं भवतीत्यर्थः ॥ ४२ ॥

आश्रममुख्यधर्मानाह- **भिक्षोरिति ।**

**भिक्षोर्धर्मः शमोऽहिंसा तप ईक्षा वनौकसाम् ।**
**गृहिणो भूतरक्षेज्या द्विजस्याचार्यसेवनम् ॥ ४३ ॥**

---

[1] 'प्रचण्डेन्द्रियसारथिः' इति पाठान्तरम् ।

**शमः** सदा मम ध्यानं, **अहिंसा** प्राणिनां दुःखकरव्यापारवर्जनं च भिक्षोर्धर्मः । **ईक्षा** ध्यानं **भूतरक्षा** साधुकुटुम्बादिरक्षा **इज्या** दर्शपौर्णमासादिधर्मः । **द्विजस्य** ब्रह्मचारिणः आचार्यसेवापुरस्सरं स्वाध्यायाद्यभ्यासः ॥ ४३ ॥

गृहस्थस्य पुनः धर्मविशेषानाह- **ब्रह्मचर्यमिति** ।

**ब्रह्मचर्यं तपः शौचं सन्तोषो भूतसौहृदम् ।**
**गृहस्थस्याग्रतो गन्तुः सर्वेषां मदुपासनम् ॥ ४४ ॥**

**इति मां यः स्वधर्मेण भजेन्नित्यमनन्यभाक् ।**
**सर्वभूतेषु मद्भावो मद्भक्तिं विन्दते चिरात् ॥ ४५ ॥**

**भक्त्योद्धवानपायिन्या सर्वलोकमहेश्वरम् ।**
**सर्वोत्पत्त्यप्ययं ब्रह्मकारणं मोपयाति सः ॥ ४६ ॥**

**ब्रह्मचर्यं** ऋतावेव भार्यासङ्गः । अधिकार्थापेक्षाराहित्यं **सन्तोषः** । अग्रतः प्रथमं गन्तुः (अत्र पत्रं क्रिमिरवादितम्) । प्राप्तस्य गृहस्थस्य ब्रह्मचर्यादयः । भूतेषु स्थिते मयि भावो यस्य । आदरवान् यो मां भजेत्, तस्य अपेक्षितं फलं आह- **मद्भक्तिं विन्दते** । सर्वेषां= गुणमहदादीनां उत्पत्तिस्थित्यप्ययादयः येन तम् । ब्रह्मणः= चतुर्मुखादेः कारणं माम् । कारणं= नित्यानन्दाभिव्यक्तौ कारणमिति वा **उपयाति** अपरोक्षीकरोतीत्यर्थः ॥ ४६ ॥

उक्तगुणैः परमात्मापरोक्षवतः फलमाह-

**इति स्वधर्मनिर्णिक्तसत्वो निर्ज्ञातमद्गतिः ।**
**ज्ञानविज्ञानसम्पन्नो विरक्तः समुपैति माम् ॥ ४७ ॥**

निर्णिक्तं= अत्यन्तं शुद्धं सत्वं= अन्तःकरणं यस्य सः । गम्यत इति गतिः स्वरूपं, निर्ज्ञातं = अपरोक्षीकृतं मत्स्वरूपं येन सः । ज्ञानेन= सर्वतत्वज्ञानेन विज्ञानेन= सर्वतत्वेश्वरज्ञानेन ब्रह्मज्ञानेन च मां समुपैति । वैकुण्ठादौ मत्समीपं प्राप्नोति ॥ ४८ ॥

ननु आश्रमधर्माणां फलान्तरश्रवणात् कथं तत्प्राप्तिः फलम् ? इति जिज्ञासायामाह- **स एव मद्भक्तियुत** इति ।

**वर्णाश्रमवतां धर्म एष आचारलक्षणः ।**
**स एव मद्भक्तियुतो निःश्रेयसकरः परः ॥ ४८ ॥**

**एतत् तेऽभिहितं साधो भवान् पृच्छति यच्च माम् ।**
**यथा स्वधर्मसंयुक्तो भक्तो मां समियात् परम् ॥ ४९ ॥**

**॥ इति श्रीमद्भागवते एकादशस्कन्धे अष्टादशोऽध्यायः ॥**

**स एव** वर्णाश्रमधर्म एव **निःश्रेयसकरः** ज्ञानभक्तिभ्यामिति भावः ॥ ४९ ॥

॥ इति श्रीयादवेन्द्रयतिविरचिते एकादशस्कन्धव्याख्याने अष्टादशोऽध्यायः ॥

# 19 | एकोनविंशोऽध्यायः

स्वर्गादिसाधनधर्मः यथा जीवशक्तिसाध्यः एवं ईश्वरज्ञानं न जीवशक्तिसाध्यम् । ईश्वरस्य अव्यक्तत्वात् किन्तु परमकारुणिकेश्वरप्रसादादेव भवति इत्याह- **यो विद्याश्रुत** इति ।

**श्रीभगवानुवाच-**

**यो विद्याश्रुतसम्पन्न आत्मवानानुमानिकः ।**

**मायामात्रमिदं ज्ञात्वा ज्ञानं च मयि सन्न्यसेत् ॥ १ ॥**

**आत्मवान्** परमात्मभक्तियुक्तः । विद्यायाः = वेदादिरूपायाः श्रुतेन = अर्थज्ञानेन संपन्नः गुरुभ्यः इति भावः । **आनुमानिकः** उपक्रमादियुक्तिभिः निरस्त विपर्ययादिः । **इदं** कार्यजातं **मायामात्रं** त्रिगुणात्मकप्रकृतिजन्यं इति ज्ञात्वा **आत्मवान्** सर्वेश्वरावधारण-वान् सन् **ज्ञानं** मद्विषयं परोक्षापरोक्षरूपं **मयि संन्यसेत्** । ज्ञानं मदायत्तमिति जानीयात् । स्वशक्तिसंपादितत्वबुद्धिं त्यजेत् इत्यर्थः । एतादृशः ज्ञानस्य न्यासः मम पूजेति भावः ॥ १ ॥

प्रसङ्गादेकान्तभक्तानां स्वभावमाह- **ज्ञानिनस्त्वहमिति** । अथवा एकान्तानां आनन्दानुभवादिस्वस्वरूपापेक्षया अहमेव अत्युपादेय इत्याह- **ज्ञानिनस्त्वहमिति** ।

**ज्ञानिनस्त्वहमेवेष्टः स्वार्थो हेतुश्च सम्मतः ।**

**स्वर्गश्चैवापवर्गश्च नान्योऽर्थो मदृते प्रियः ॥ २ ॥**

**सम्मतः** अहं अपरोक्षज्ञानप्राप्यत्वेन श्रुत्यादिना निर्णीतः । मद**न्योऽर्थः** स्वर्गा-पवर्गादिलक्षणं फलम् । **हेतुः** तत्साधनकाम्यकर्म सर्वोऽपि **मद्दते** मयि अपरोक्षीकृते सति । **ज्ञानिन** एकान्तस्य प्रयोजनं, किन्तु **अहमेवेष्टः स्वार्थः । मद्दते** मां विनेति वा । **ज्ञानिनः** केषाञ्चित् ज्ञानिनां मया सह अपवर्गादिः प्रिय इत्यर्थः ॥ २ ॥

**ज्ञानविज्ञानसम्पन्नाः**[1] **पदं श्रेष्ठं विदुर्मम ।**
**ज्ञानी प्रियतमोऽतो मे ज्ञानेनासौ बिभर्ति माम् ॥ ३ ॥**

ज्ञानं= सर्वतत्वानां ज्ञानं विज्ञानं= सर्वतत्वस्वरूपादिप्रदेश्वरज्ञानं ताभ्यां संपन्नाः **मम पदं** स्वस्वरूपं विदुः अपरोक्षीकुर्युः । **श्रेष्ठं पदं** वैकुण्ठादि वा **विदुः** प्राप्नुयुः । अपरोक्षप्राप्तमत्प्रसादादिति भावः । **असौ** ज्ञानी **मां बिभर्ति ।** ज्ञानिश्रेष्ठे मम विभूतिरूप-मस्तीत्यर्थः । अथवा **ज्ञानेन बिभर्ति** निरीश्वरवादं परिहृत्य भक्तेषु मद्विषयां बुद्धिं स्थिरां करोतीत्यर्थः । **अतः मे ज्ञानी प्रियतमः ।** तस्मात् ज्ञानं सम्पादनीयमित्यर्थः ॥ ३ ॥

जीवस्य सर्वपापनिवर्तकं ज्ञानमेवेत्याह- **तपस्तीर्थमिति ।**

**तपस्तीर्थं जपो दानं पवित्राणीतराणि च ।**
**नालं कुर्वन्ति तां शुद्धिं या ज्ञानकलया कृता ॥ ४ ॥**

**तपः** कृच्छ्रचान्द्रायणादि **पवित्राणि** पवित्रकराणि प्रायश्चित्तादीनि **ज्ञानस्य कलया** एकदेशेन या **शुद्धिः** सर्वपापाश्लेषः तां शुद्धिं न कुर्वन्त्येव । **अलं** अत्यन्तं **न कुर्वन्ति ।** ईषत्कुर्वन्तीति भावः ॥ ४ ॥

---

[1] 'ज्ञानविज्ञानसम्बद्धाः' इति पाठान्तरम् ।

**ज्ञानविज्ञानसहितं ज्ञात्वा स्वात्मानमुद्धव ।**
**ज्ञानविज्ञानसम्पन्नो भज मां भक्तिभावितः ॥ ५ ॥**

**स्वात्मानं** स्वदेहस्थं **ज्ञानेन** स्वपराशेषज्ञानेन **विज्ञानेन** स्वपराशेषगतसर्वविशेषज्ञानेन सम्पन्नः तमोविकार्यदेहगतत्वेपि ज्ञानतिरोधानादिरहित इत्यर्थः । **ज्ञात्वा उद्धव** भक्तिसंपन्नः **मां भज** ॥ ५ ॥

कर्माचरणपुरस्सरमेव मम ध्यानादिकं कर्तव्यमित्याशयेनाह- **ज्ञानविज्ञानयज्ञेनेति ।**

**ज्ञानविज्ञानयज्ञेन मामिष्ट्वाऽऽत्मानमात्मनि ।**
**सर्वयज्ञपतिं मां वै संसिद्धिं मुनयोऽन्वगुः ॥ ६ ॥**

ज्ञानविहितं निर्दुःखनिजानन्दाभिव्यक्तिम् आनन्दविशेषाभिव्यक्तिं च (पत्रं छिन्नम्) प्राप्ताः ॥ ६ ॥

ननु दुःखानुभवस्वभावस्य जीवस्य कथं ज्ञानेन दुःखनिवृत्तिः ? इत्याशंक्याह- **त्वय्युद्धवेति** । अप्राकृतभक्तानां दुःखानुभवो न स्वभावः इत्याह- **त्वय्युद्धवेति ।**

**त्वय्युद्धवाविशति[1] यस्त्रिविधो विकारो मायाऽन्तराऽऽपतति नाद्यपवर्गयोर्यः ।**
**जन्मादयोऽस्य वद मां तव तस्य किं स्युराद्यन्तयोर्यदसतोऽस्ति तदेव मध्ये ॥७**

**उद्धव त्वयि** सात्विकस्वभावे इति भावः । **यः त्रिविधः** सत्वजन्यः ज्ञानसुखरूपः, रजोजन्यः विषयतृष्णादिरूपः, तमोजन्यः अन्यथाज्ञानदुःखादिरूपः, एवं त्रिविधः **विकारः आविशति** प्राप्नोति । सः **माया** गुणत्रयात्मकप्रकृतिबन्धजन्य इत्यर्थः । अतः सः **अन्तरा** मध्ये सृष्टिकाले **आपतति** । यो विकार आदौ= गुणोत्पत्तेः पूर्वम्

---
[1] 'त्वय्युद्धवाश्रयति' इति पाठान्तरम् ।

अपवर्गे= गुणनिवृत्त्यनन्तरं च **नापतति,** सः अन्तराऽपि न स्वाभाविक इत्यर्थः । ननु क्षीरस्य तक्रयोगेन यथा क्षीरत्वापगमः एवं गुणसंबन्धेन जीवस्य सुखस्वभावापगमः भवेत् इत्याशङ्क्याह- **जन्मादय** इति । **तस्य** प्राकृतस्य वैकृतस्य वा देहस्य **जन्मादयः अस्य** विकारस्वभावरहितस्य ज्ञानानन्दादिरूपस्य **तव** स्युः किं? मां प्रति **वद ।** जीवस्य स्वरूपेणोत्पत्त्यभावः नित्यत्वं *तवापि जातिस्मरणादिना सिद्धम् । अतः* **असतः** अवस्तुनः अनित्यस्य जगतः **आद्यन्तयोः** यज्जीवस्य ज्ञानानन्दादि यत् स्वरूपं अस्ति सृष्टिकालेऽपि तदेवास्ति, आनन्दस्य सुषुप्तौ अनुभूयमानत्वादिति भावः । बन्धस्य अभिमानलक्षणभ्रमप्राप्तत्वात् मदनुग्रहयुक्तं ज्ञानं भ्रमनिवृत्तये सम्पाद-नीयमिति भावः ॥ ७ ॥

**उद्धव उवाच-**

**ज्ञानं विशुद्धं विपुलं यदेतद् वैराग्यविज्ञानयुतं पुराणम् ।**

**आख्याहि विश्वेश्वर विश्वमूर्ते त्वद्भक्तियोगं च महद्भिमृग्यम् ॥ ८ ॥**

**विपुलं** पुष्कळं भक्तियुक्तं इति भावः । यथा ज्ञानवृद्धसंप्रदायमनतिक्रम्य स्थितं **पुराणं** प्रकरणादिरूपं महद्भिः= ऋजुप्रवृत्तिभिः विमृग्यं= अत्युपादेयभक्तिलक्षणं योगं= उपायं साधनं वा ॥ ८ ॥

**श्रीभगवानुवाच-**

**इत्थमेतत् पुरा राजा भीष्मं धर्मभृतां वरम् ।**

**अजातशत्रुः पप्रच्छ सर्वेषामनुशृण्वताम् ॥ ९ ॥**

**निवृत्ते भारते युद्धे सुहृन्निधनविह्वलः ।**

**श्रुत्वा धर्मान् बहून् भीष्मं मोक्षधर्मानपृच्छत ॥ १० ॥**

**तानहं तेऽभिधास्यामि देवव्रतमुखाच्छ्रुतान् ।**
**ज्ञानविज्ञानवैराग्यश्रद्धाभक्त्युपबृंहितान् ॥ ११ ॥**

**अजातशत्रुः** धर्मराजः स्वगुणोत्कर्षादिति भावः, **देवव्रतः** भीष्मः ज्ञानविज्ञाने वक्ष्ये । ज्ञानादिभिः उपबृंहितान् मोक्षधर्मान् । श्रद्धा= शास्त्रोक्तमस्तीति बुद्धिः, ममात्रास्तीति प्रयोजनम् इति बुद्धिश्च ॥ ११ ॥

ज्ञानलक्षणमाह- **नवैकादशेति ।**

**नवैकादश पञ्च त्रीन् भावान् भूतेषु येन वै ।**
**ईक्षेतान्वेकमप्येषु तज्ज्ञानं मम निश्चितम् ॥ १२ ॥**

**नव** विवक्षाभेदेन । बुद्धिः, अहङ्कारः, चित्तं, मूलप्रकृतिश्च भूतानि पञ्च । एवं मनसा सह श्रोत्रादीनि **एकादश । गुणाः** सत्त्वादयस्त्रयः[1], शब्दादयः **पञ्च** । एवमष्टाविंशतिसंख्याकान्[2] **भावान्** तत्त्वानि तत्तन्नियामकदेवैः सहितम् । **निश्चितं** निश्चयः[3] ॥ १२ ॥

विज्ञानलक्षणमाह- **एतदेवेति ।**

**एतदेव हि विज्ञानं न तथैकेन येन यत् ।**
**स्थित्युत्पत्त्यप्यया नः स्युर्भावानां त्रिगुणात्मनाम् ॥ १३ ॥**

**एतदेव विज्ञानं** तर्हि ज्ञानविज्ञानयोः को भेद इति जिज्ञासायामाह- **न तथेति ।** तथापि ज्ञानविज्ञानयोः एकताप्राप्तावपि अथ तावन्मात्रं न विज्ञानं, स्वयोग्यबिम्बज्ञान-लक्षणविशेषणान्तरविशिष्टमेव विज्ञानमित्यर्थः । ज्ञानलक्षणे योग्यध्यानलक्षणविशेषणा-

---

[1] सत्त्वादयस्त्रय इति बन्नञ्जे-गोविन्दाचार्यैरुदाहृतपाठेऽधिकं पठ्यते । [2] अयं बन्नञ्जे-गोविन्दाचार्यैरुदाहृतपाठः । मूलपुस्तके तु 'एवं त्रीन् त्रिसंख्याकान्' इति पठ्यते । [3] अत्रान्वयज्ञानार्थं क्वचिदधिकमुल्लिख्यतेऽस्माभिः- 'एतानि तत्त्वानि भूतेषु येनान्वीक्षते, अथचैष्वेकं प्रधानं तत्वेशं भगवन्तं येनान्वीक्षते तज्ज्ञानमिति निश्चय इति' इति ।

भावात् ज्ञानविज्ञानयोर्भेद इति भावः । तत्त्वेषु स्वतन्त्रास्वतन्त्रत्वलक्षणं विशेषो वर्णितः । तत्र किं स्वतन्त्रत्वमिति जिज्ञासायां तल्लक्षणमाह- **एकेन** इति । **एकेन (नः)** अनेकानां तत्वानां मध्ये इत्यर्थः । **एकेन** मुख्येन सकलशक्तीनां सत्वादिति भावः । **येन** तत्वेन यच्च यत्र प्रकृतौ स्थित्वा प्रकृतिक्षोभार्थमिति भावः । **त्रिगुणात्मनां** गुणात्मकप्रकृतिकार्याणाम् । **भावानां** वस्तूनां च कार्यकारणानामित्यर्थः, स्थित्युत्पत्त्यप्ययाः स्युः क्रियन्ते ॥ १३ ॥

**आदावन्त्ये च मध्ये च यज्ज्ञं सृज्यं यदन्वियात् ।**
**पुनस्तत्प्रतिसङ्क्रामे यच्छिष्येत तदेव सत् ॥ १४ ॥**

**ज्ञं** सर्वज्ञं **यत्** तत्वं **सृज्यम्** उद्दिश्य **आदौ** सृष्टिसमये अन्वियात् कारणानि विवेश कारणशक्तीनां फलोन्मुखार्थमिति भावः । **मध्ये** स्थितिकाले सृष्टं **अन्वियात्** अनुप्रविशति । **अन्त्ये** काले संहारार्थं सृष्टं रूपान्तरेण **अन्वियात्** । पुनश्च सर्वकालेषु इत्यर्थः[1] अतो विरिञ्च्यादीनां न स्वातन्त्र्यमिति भावः । एवं गुणपूर्णत्वं प्रतिपाद्य निर्दोषत्वमपि आह- **तत्प्रतिसंक्रमे** तेषां चेतनाचेतनतत्वानां प्रतिसङ्क्रमे प्रलयेऽपि । यत् सर्वज्ञं शिष्येत विकाररहिततया वर्तते । **तत् सत्** स्वतन्त्रतत्वमित्यर्थः ॥ १४ ॥

स्वतन्त्रास्वतन्त्रतत्वे प्रमाणमाह- **श्रुतिरिति** ।

**श्रुतिः प्रत्यक्षमैतिह्यमनुमानं चतुष्टयम् ।**
**प्रमाणेष्वनवस्थानाद् विकल्पात् स विरज्यते ॥ १५ ॥**

---

[1] अयं गोविन्दाचार्यैरुदाहृतः पाठः । अस्मत्सम्पादितपुस्तके तु 'अन्वियात् प्राप्तं गुणश्च सर्वकालेषु इत्यर्थः एवं सृष्ट्यादिकर्तृ अतो विरिञ्च्यादीनां' इत्यादि पठ्यते ।

**ऐतिह्यं** पौरुषेयागमविवक्षाभेदाच्चतुष्टयम्[1] । चेतनमेकमेव तत्वमिति कश्चित् । अचेतनं एकमेव तत्वमिति अन्यः । एवमादिकुमतिनिरासायाह- **प्रमाणेष्विति ।** उक्तेषु **प्रमाणेषु अनवस्थानात्** प्रतिपाद्यत्वेन उक्तमतानामभावात् **विकल्पात्** प्रमाण-विरुद्धमतकल्पनात् **सः** प्रमाणैः अर्थसत्वनिश्चयवान् ज्ञानी **विरज्यते** निवृत्तो भवति । तस्मात् भ्रान्तिप्रतिपन्नानि परित्याज्यानीति भावः ॥ १५ ॥

ननु 'अपाम सोमम् अमृता अभूम' इति श्रौतकर्मणाऽपि मुक्तिफलप्रतीतेः कदाचित् अस्वतन्त्रादपि मोक्षसंभवाद् विज्ञानेनैव कथं संसिद्धिः इत्यत आह- **कर्मणामिति ।**

**कर्मणां फलरूपत्वादाविरिञ्चादमङ्गळम् ।**
**विपश्चिन्नश्वरं पश्येददृष्टमपि दृष्टवत् ॥ १६ ॥**

**आविरिञ्चात्** सत्यलोकपर्यन्तम् । पदं स्थानम् **अमङ्गलं** नाशोपेतम् । एवं सति विपश्चित् **अदृष्टमपि** स्वर्गादौ स्वयमपि **दृष्टवत्** इह ऐश्वर्यवत् नश्वरं शीघ्रं विनाशी इति **पश्येत्** जानीयात् इति किमुत । अतो विषयविरागो महान् भवेदिति भावः ॥ १६ ॥

**भक्तियोगः पुरैवोक्तः प्रीयमाणाय तेऽनघ ।**
**पुनश्च कथयिष्यामि मद्भक्तेः कारणं परम् ॥ १७ ॥**

**परं** पुष्कळं भक्तिकारणं पुनः कथयिष्यामि ॥ १७ ॥

**श्रद्धाऽमृतकथायां मे शश्वन्मदनुकीर्तनम् ।**
**परिनिष्ठा च पूजायां स्तुतिभिः स्तवनं मम ॥ १८ ॥**

---

[1] 'पौरुषेयापौरुषेयागमविवक्षाभेदाच्चतुष्टयम्' इति बन्नञ्जे-गोविन्दाचार्यैरुदाहृतः पाठः ।

परिनिष्ठा पूजायां, पञ्चरात्रागमोक्तनियमेनैव प्रवृत्तिः **परिनिष्ठा** ॥ १८ ॥

**आदरः परिचर्यायां सर्वाङ्गैरभिवन्दनम् ।**

**मद्भक्तपूजाऽभ्यधिका सर्वभूतेषु मन्मतिः ॥ १९ ॥**

**परिचर्यायां** श्रीतुळस्याद्यानयनदेवगृहसंमार्जनगोमयाद्यनुलेपनादिषु **आदरः** गर्वपरित्यागेन दासवत् एतत् करणम् । उरश्शिरः*प्रभृतिभिरङ्गैः अभिवन्दनम् ।* **सर्वभूतेषु** विद्यमानेषु वस्तुषु । **मन्मतिः** सर्वान्तर्यामित्वेन स्थिततत्वबुद्धिः ॥ १९ ॥

**मदर्थेष्वङ्गचेष्टा च वचसा मद्गुणेरणम् ।**

**मय्यर्पणं च मनसः सर्वकामविवर्जनम्**[1] **॥ २० ॥**

**मदर्थेषु** मत्पूजाप्रयोजनकेषु कार्येषु । **अङ्गचेष्टा** देहावयवव्यापारः कर्तव्य इत्यर्थः । नतु विषयभोगार्थं अङ्गव्यापारः कर्तव्य इति भावः । **मनसः सर्वकामविवर्जनं** मनसा विषयपरित्याग इति यत् तस्य **मय्यर्पणम्** ॥ २० ॥

**मदर्थे च परित्यागो भोगस्य च सुखस्य च ।**

**इष्टं दत्तं हुतं भुक्तं मदर्थं यद् व्रतं तपः ॥ २१ ॥**

**भोगस्य** विषयानुभवस्य । **इष्टं** यागः ॥ २१ ॥

**एवं धर्मैर्मनुष्याणामुद्धवात्मनिवेदिनाम् ।**

**मयि सञ्जायते भक्तिः कोऽन्योऽर्थोऽस्यावशिष्यते ॥ २२ ॥**

---

[1] 'सर्वकामविसर्जनम्' इति पाठान्तरम् ।

**ऐतिह्यं** पौरुषेयागमविवक्षाभेदाच्चतुष्टयम्[1] । चेतनमेकमेव तत्वमिति कश्चित् । अचेतनं एकमेव तत्वमिति अन्यः । एवमादिकुमतिनिरासायाह- **प्रमाणेष्विति ।** उक्तेषु **प्रमाणेषु अनवस्थानात्** प्रतिपाद्यत्वेन उक्तमतानामभावात् **विकल्पात्** प्रमाण-विरुद्धमतकल्पनात् **सः** प्रमाणैः अर्थसत्वनिश्चयवान् ज्ञानी **विरज्यते** निवृत्तो भवति । तस्मात् भ्रान्तिप्रतिपन्नानि परित्याज्यानीति भावः ॥ १५ ॥

ननु 'अपाम सोमम् अमृता अभूम' इति श्रौतकर्मणाऽपि मुक्तिफलप्रतीतेः कदाचित् अस्वतन्त्रादपि मोक्षसंभवाद् विज्ञानेनैव कथं संसिद्धिः इत्यत आह- **कर्मणामिति ।**

**कर्मणां फलरूपत्वादाविरिञ्चादमङ्गळम् ।**
**विपश्चिन्नश्वरं पश्येददृष्टमपि दृष्टवत् ॥ १६ ॥**

**आविरिञ्चात्** सत्यलोकपर्यन्तम् । पदं स्थानम् **अमङ्गलं** नाशोपेतम् । एवं सति विपश्चित् **अदृष्टमपि** स्वर्गादौ स्वयमपि **दृष्टवत्** इह ऐश्वर्यवत् नश्वरं शीघ्रं विनाशी इति **पश्येत्** जानीयात् इति किमुत । अतो विषयविरागो महान् भवेदिति भावः ॥ १६ ॥

**भक्तियोगः पुरैवोक्तः प्रीयमाणाय तेऽनघ ।**
**पुनश्च कथयिष्यामि मद्भक्तेः कारणं परम् ॥ १७ ॥**

**परं** पुष्कळं भक्तिकारणं पुनः कथयिष्यामि ॥ १७ ॥

**श्रद्धाऽमृतकथायां मे शश्वन्मदनुकीर्तनम् ।**
**परिनिष्ठा च पूजायां स्तुतिभिः स्तवनं मम ॥ १८ ॥**

---

[1] 'पौरुषेयापौरुषेयागमविवक्षाभेदाच्चतुष्टयम्' इति बन्नञ्जे-गोविन्दाचार्यैरुदाहृतः पाठः ।

परिनिष्ठा पूजायां, पञ्चरात्रागमोक्तनियमेनैव प्रवृत्तिः **परिनिष्ठा** ॥ १८ ॥

**आदरः परिचर्यायां सर्वाङ्गैरभिवन्दनम् ।**

**मद्भक्तपूजाऽभ्यधिका सर्वभूतेषु मन्मतिः ॥ १९ ॥**

**परिचर्यायां** श्रीतुळस्याद्यानयनदेवगृहसंमार्जनगोमयाद्यनुलेपनादिषु **आदरः** गर्वपरित्यागेन दासवत् एतत् करणम् । उरश्शिरःप्रभृतिभिरङ्गैः अभिवन्दनम् । **सर्वभूतेषु** विद्यमानेषु वस्तुषु । **मन्मतिः** सर्वान्तर्यामित्वेन स्थितत्वबुद्धिः ॥ १९ ॥

**मदर्थेष्वङ्गचेष्टा च वचसा मद्गुणेरणम् ।**

**मय्यर्पणं च मनसः सर्वकामविवर्जनम्**[1] **॥ २० ॥**

**मदर्थेषु** मत्पूजाप्रयोजनकेषु कार्येषु । **अङ्गचेष्टा** देहावयवव्यापारः कर्तव्य इत्यर्थः । नतु विषयभोगार्थं अङ्गव्यापारः कर्तव्य इति भावः । **मनसः सर्वकामविवर्जनं** मनसा विषयपरित्याग इति यत् तस्य **मय्यर्पणम्** ॥ २० ॥

**मदर्थे च परित्यागो भोगस्य च सुखस्य च ।**

**इष्टं दत्तं हुतं भुक्तं मदर्थं यद् व्रतं तपः ॥ २१ ॥**

**भोगस्य** विषयानुभवस्य । **इष्टं** यागः ॥ २१ ॥

**एवं धर्मैर्मनुष्याणामुद्धवात्मनिवेदिनाम् ।**

**मयि सञ्जायते भक्तिः कोऽन्योऽर्थोऽस्यावशिष्यते ॥ २२ ॥**

---

[1] 'सर्वकामविसर्जनम्' इति पाठान्तरम् ।

**आत्मनि** स्वस्मिन्, **वेदिनां** जानतां, आत्मसमर्पणं कुर्वतामिति वा । मनुष्याणां स्वस्वधर्मैः भक्त्यपेक्षया **अन्यः कः अर्थः** । स्वधर्माणां फलरूपः कः **अवशिष्यते** उर्वरितो भवति । सर्वधर्माणां भक्तिरेव मुख्यफलमित्यर्थः ॥ २२ ॥

**यदा मय्यर्पितं चित्तं शान्तं सत्वोपबृंहितम् ।**
**धर्मं ज्ञानं सवैराग्यमैश्वर्यं चाभिपद्यते ॥ २३ ॥**

**शान्तं** मयि स्थिरं रागद्वेषादिरहितमिति वा । यदा **सत्वोपबृंहितं** सर्वसात्विकैक-स्वभावम् । तदा धर्मादिकम् **अभिपद्यते** । धर्मज्ञानादिशब्दार्थं वक्ष्यति । **शान्तं** सत्वोपबृंहितं **चित्तं** नयेत् ॥ २३ ॥

दुःखकारणमाह- **यद्यर्पितमिति** ।

**यद्यर्पितं तद् विकल्प इन्द्रियैः परिधावति ।**
**रजस्वलमसन्निष्ठं चित्तं विद्धि विपर्ययम् ॥ २४ ॥**

**तद्** ज्ञानादिपुरुषार्थसाधकं चित्तं **विकल्पे** विविधविषयेषु **अर्पितं** सत् विषयध्यानो-पेतं सदित्यर्थः । **इन्द्रियैः परिधावति** विषयान् भुङ्क्ते इत्यर्थः । तदा तच्चित्तं **रजस्वलं** राजसं **असन्निष्टं** च तामसं च यत् **विपर्ययं** दुःखफलकं **विद्धि** । तस्मात् विषयवैराग्यं सर्वसौख्यानां कारणमिति ॥ २४ ॥

इदानीं धर्मज्ञानार्थशब्दार्थमाह- **मद्भक्तिकृदिति** ।

**धर्मो मद्भक्तिकृत् प्रोक्तो ज्ञानं चैकात्म्यदर्शनम् ।**
**गुणेष्वसङ्गो वैराग्यमैश्वर्यं चाणिमादयः ॥ २५ ॥**

**मद्भक्तिकृत्** निवृत्तधर्म इति भावः । **ऐकात्म्यदर्शनं** 'विष्णुः सर्वेभ्यः प्रधानः' इति ज्ञानम् । **गुणेषु** विषयेषु **असङ्गः** मनसः सक्तिराहित्यम् ॥ २५ ॥

**उद्धव उवाच-**

**यमः कतिविधः प्रोक्तो नियमो वाऽरिकर्शन ।**
**कः शमः को दमः कृष्ण का तितिक्षा धृतिः प्रभो ॥ २६ ॥**

**किं दानं किं तपः शौर्यं किं सत्यं ऋतमुच्यते ।**
**किमन्नं तृप्तिजनकं किञ्च शौचं जनार्दन ॥ २७ ॥**

**कस्त्यागः किं धनं श्रेष्ठं को यज्ञः का च दक्षिणा ।**
**पुंसः किं स्विद् बलं श्रीमद् भगो लाभश्च केशव ॥ २८ ॥**

**का विद्या ह्रीः परा का श्रीः किं सुखं दुःखमेव च ।**
**कः पण्डितः कश्च मूर्खः कः पन्था उत्पथश्च कः ॥ २९ ॥**

**कः स्वर्गो नरकः कः स्वित् को बन्धुरुत किं गृहम् ।**
**क आढ्यः को दरिद्रो वा कृपणः कः क ईश्वरः ॥ ३० ॥**
**एतान् प्रश्नान् मम ब्रूहि विपरीतं च सत्पते ॥ ३१ ॥**

**विपरीतं** यमाधिभ्यः विपरीतं, उक्तादन्यं दोषम् ॥ ३१ ॥

यमादीनाह- **अहिंसेति ।**

**श्रीभगवानुवाच-**

**अहिंसा सत्यमस्तेयमसङ्गो ह्रीरसञ्चयः ।**
**आस्तिक्यं ब्रह्मचर्यं च मौनं स्थैर्यं क्षमाऽभयम् ॥ ३२ ॥**

**आत्मनि** स्वस्मिन्, **वेदिनां** जानतां, आत्मसमर्पणं कुर्वतामिति वा । मनुष्याणां स्वस्वधर्मैः भक्त्यपेक्षया **अन्यः कः अर्थः ।** स्वधर्माणां फलरूपः कः **अवशिष्यते** उर्वरितो भवति । सर्वधर्माणां भक्तिरेव मुख्यफलमित्यर्थः ॥ २२ ॥

**यदा मय्यर्पितं चित्तं शान्तं सत्वोपबृंहितम् ।**
**धर्मं ज्ञानं सवैराग्यमैश्वर्यं चाभिपद्यते ॥ २३ ॥**

**शान्तं** मयि स्थिरं रागद्वेषादिरहितमिति वा । यदा **सत्वोपबृंहितं** सर्वसात्विकैक-स्वभावम् । तदा धर्मादिकम् **अभिपद्यते ।** धर्मज्ञानादिशब्दार्थं वक्ष्यति । **शान्तं** सत्वोपबृंहितं **चित्तं** नयेत् ॥ २३ ॥

दुःखकारणमाह- **यद्यर्पितमिति ।**

**यद्यर्पितं तद् विकल्प इन्द्रियैः परिधावति ।**
**रजस्वलमसन्निष्ठं चित्तं विद्धि विपर्ययम् ॥ २४ ॥**

**तद्** ज्ञानादिपुरुषार्थसाधकं चित्तं **विकल्पे** विविधविषयेषु **अर्पितं** सत् विषयध्यानो-पेतं सदित्यर्थः । **इन्द्रियैः परिधावति** विषयान् भुङ्क्ते इत्यर्थः । तदा तच्चित्तं **रजस्वलं** राजसं **असन्निष्टं** च तामसं च यत् **विपर्ययं** दुःखफलकं **विद्धि ।** तस्मात् विषयवैराग्यं सर्वसौख्यानां कारणमिति ॥ २४ ॥

इदानीं धर्मज्ञानार्थशब्दार्थमाह- **मद्भक्तिकृदिति ।**

**धर्मो मद्भक्तिकृत् प्रोक्तो ज्ञानं चैकात्म्यदर्शनम् ।**
**गुणेष्वसङ्गो वैराग्यमैश्वर्यं चाणिमादयः ॥ २५ ॥**

**मद्भक्तिकृत्** निवृत्तधर्म इति भावः । **ऐकात्म्यदर्शनं** 'विष्णुः सर्वेभ्यः प्रधानः' इति ज्ञानम् । **गुणेषु** विषयेषु **असङ्गः** मनसः सक्तिराहित्यम् ॥ २५ ॥

**उद्धव उवाच-**

**यमः कतिविधः प्रोक्तो नियमो वाऽरिकर्शन ।**

**कः शमः को दमः कृष्ण का तितिक्षा धृतिः प्रभो ॥ २६ ॥**

**किं दानं किं तपः शौर्यं किं सत्यं ऋतमुच्यते ।**

**किमन्नं तृप्तिजनकं किञ्च शौचं जनार्दन ॥ २७ ॥**

**कस्त्यागः किं धनं श्रेष्ठं को यज्ञः का च दक्षिणा ।**

**पुंसः किं स्विद् बलं श्रीमद् भगो लाभश्च केशव ॥ २८ ॥**

**का विद्या ह्रीः परा का श्रीः किं सुखं दुःखमेव च ।**

**कः पण्डितः कश्च मूर्खः कः पन्था उत्पथश्च कः ॥ २९ ॥**

**कः स्वर्गो नरकः कः स्वित् को बन्धुरुत किं गृहम् ।**

**क आढ्यः को दरिद्रो वा कृपणः कः क ईश्वरः ॥ ३० ॥**

**एतान् प्रश्नान् मम ब्रूहि विपरीतं च सत्पते ॥ ३१ ॥**

**विपरीतं** यमाधिभ्यः विपरीतं, उक्तादन्यं दोषम् ॥ ३१ ॥

यमादीनाह- **अहिंसेति ।**

**श्रीभगवानुवाच-**

**अहिंसा सत्यमस्तेयमसङ्गो ह्रीरसञ्चयः ।**

**आस्तिक्यं ब्रह्मचर्यं च मौनं स्थैर्यं क्षमाऽभयम् ॥ ३२ ॥**

**शौचं जपस्तपो होमः श्रद्धाऽऽतिथ्यं मदर्चनम् ।**
**तीर्थाटनं परार्थेहा तुष्टिराचार्यसेवनम् ॥ ३३ ॥**

**एते यमाः सनियमा उभयोर्द्वादश स्मृताः ।**
**पुंसामुपासितास्तात यथाकामं दुहन्ति हि ॥ ३४ ॥**

**एते** द्वादश **यमा** इति स्मृताः एते शौचादयो नियमाः स्मृताः । **सनियमा एते यमा उपासिताः** सम्पादिताः । **पुंसां** उपायाः इहामुत्र । **कामं** फलम् । **यथा** अपेक्षामनुसृत्य **दुहन्ति** ददति ॥ ३४ ॥

शमादिशब्दमुख्यार्थमाह- **शम इति ।**

**शमो मन्निष्ठता बुद्धेर्दम इन्द्रियसंयमः ।**
**तितिक्षा दुःखसम्मर्षो जिह्वोपस्थजयो धृतिः ॥ ३५ ॥**

बुद्धेर्निश्चयः । अन्तःकरणस्य **मन्निष्ठता** मद्ध्यानासक्तता । **सम्मर्षः** सहनम् । **धृतिः** धैर्यम् ॥ ३५ ॥

**दण्डन्यासः परं दानं कामत्यागस्तपः स्मृतम् ।**
**स्वभावविजयः शौर्यं सत्यं च समदर्शनम् ॥ ३६ ॥**

**दण्डन्यासः** प्राणिनां दुःखकारणपरियागः । **कामत्यागः** अभिलषितविषय-परित्यागः । **स्वभावविजयः** भावः चित्तं तस्य विजयः । **समदर्शनं** यथा वस्तु तथा ज्ञानम् ॥ ३६ ॥

**ऋतं च सूनृता वाणी कविभिः परिकीर्तिता ।**
**कर्मस्वसङ्गमः शौचं त्यागः सन्न्यास उच्यते ॥ ३७ ॥**

**कर्मसु** अन्तर्यामिभिः प्राधान्येन क्रियमाणेषु व्यापारेषु । **असङ्गः** अहमेव कर्तेति **बुद्ध्यभावः** । **त्यागः** देहादिषु ममतापरित्यागः ॥ ३७ ॥

**धर्म इष्टं धनं नृणां यज्ञोऽहं भगवत्तमः ।**

**दक्षिणा ज्ञानसन्देशः प्राणायामः परं बलम् ॥ ३८ ॥**

**धर्मः** निवृत्तिधर्मः । **नृणां** भक्तानाम् **इष्टं धनम् अहं भगवत्तमः** ब्रह्माद्युत्तमः अहम् । **यज्ञः** इज्यत इति यज्ञः यज्ञदेवता । **ज्ञानसन्देशः** ज्ञानोपदेशः ॥ ३८ ॥

**भगो म ऐश्वरो[1] भावो लाभो मद्भक्तिरुत्तमा ।**

**विद्याऽऽत्मनि भिदाबोधो जुगुप्सा ह्रीर्विकर्मसु ॥ ३९ ॥**

ज्ञानिनां **भगः** माहात्म्यम् । **आत्मनि** अनन्तानन्तकल्याणगुणे मयि ईश्वरे **भिदाबोधः** चेतनाचेतनसर्वजगद्वैलक्षण्यज्ञानं **विद्या** । उक्तञ्च 'अन्यभावव्यावृत्तेश्च' (ब्र.सू.१-३-१२) इति, 'आत्मेति तूपगच्छन्ति ग्राहयन्ति च' (ब्र.सू.४-१-३) इति च, 'शारीरश्चोभयेऽपि हि भेदेनैनमधीयते' (ब्र.सू.१-२-२०) इति च ॥ ३९ ॥

**श्रीर्गुणा नैरपेक्ष्याद्याः सुखं दुःखात्ययात् सुखम् ।**

**दुःखं कामसुखापेक्षा पण्डितो बन्धमोक्षवित् ॥ ४० ॥**

**दुःखात्ययात्** दुःखकारणकर्मबन्धात्ययात् अनन्तरं यत् सुखं तत् सुखमित्युच्यते । **कामसुखापेक्षा** काम्यन्त इति कामाः विषयाः, तेषां सकाशात् सुखापेक्षा दुःखम् । स्वापराधात् बन्धः, ईश्वरप्रसादात् मोक्षः इति निश्चयवान् यः स पण्डित इत्युच्यते ॥ ३९ ॥

---

[1] 'भगो मयीश्वरो' इति पाठेन भाव्यमिति भाति ।

**मूर्खो देहाद्यहम्बुद्धिः पन्था मन्निगमः स्मृतः ।**
**उत्पथश्चित्तविक्षेपः स्वर्गः सत्वगुणोदयः ॥ ४१ ॥**

**नरकस्तमउन्नाहो बन्धुर्गुरुरहं सखे ।**
**गृहं शरीरं मानुष्यं गुणाढ्यो ह्याढ्य उच्यते ॥ ४२ ॥**

देहादिषु अन्तर्यामिणि देहादिस्वामिनि सति, पुत्रदेहादौ अहमेव कर्तेति बुद्धिः, ममैवेदं देहधर्मादि इति बुद्धिः यस्यास्ति स **मूर्खः** । मत्पन्था मत्प्रापको मार्गः । **निगमः** उपनिषदादिः, वेदः, भारतभागवतादिः । तमोगुणस्य उद्रेकः **नरकः** । गुरुः ज्ञानप्रदः, बन्धसौख्यप्रदः अहम् । हे **सखे गुणाढ्यः** स्वधर्मभक्त्यादिसंपन्नः ॥ ४२ ॥

**दरिद्रो यस्त्वसन्तुष्टः कृपणो योऽजितेन्द्रियः ।**
**गुणेष्वसक्तः स्ववशो गुणसङ्गी विपर्ययः ॥ ४३ ॥**

**असन्तुष्टः दरिद्रः** । चित्तासन्तोषमात्राद्दरिद्रः । विषयेषु दोषज्ञानेऽपि तद्भोक्ता **कृपणः** । विषयेषु असक्तः **स्ववशः** समर्थ इत्यर्थः । **विपर्ययः** विषयेषु पुरुषार्थत्व-बुद्ध्या भोक्ता विपरीतः असमर्थः, बाल इत्यर्थः ॥ ४३ ॥

**एत उध्दव ते प्रश्नाः सर्वे साधु निरूपिताः ॥ ४४ ॥**
**किं वर्णितेन बहुना लक्षणं गुणदोषयोः ।**
**गुणदोषदृशिर्दोषो गुणस्तूभयवर्जनम् ॥ ४५ ॥**

**॥ इति श्रीमद्भागवते एकादशस्कन्धे एकोनविंशोऽध्यायः ॥**

**प्रश्नाः** प्रश्नविषयाः, **बहुना** विविधेन गुणेन दोषेण वा वर्णितेन **किं** वा ज्ञातव्योर्थः । न कोपि । किन्तु अवश्यज्ञातव्यं वदामीत्याह- **लक्षणमिति ।** गुणदोषलक्षणयोः **लक्षणं** स्वरूपविभागज्ञापकं वदामि । गुणदोषयोः दृष्टिः= विपरीतज्ञानं, विष्णुप्रीतिकरे गुणे दोषत्वज्ञानं **दोषः ।** दोषे काम्यकर्मणि हिंसायां गुणत्वज्ञानं **दोषः ।** उभयोः= गुणदोषविपरीतज्ञानयोः वर्जनं येन गुणदोषव्यवस्थया यथार्थज्ञानेन तत् **उभयवर्जनम् ।** विपरीतज्ञानराहित्येन यथार्थज्ञानं गुणशब्दमुख्यार्थः ॥ ४७ ॥

॥ इति श्रीयादवेन्द्रयतिविरचिते एकादशस्कन्धव्याख्याने एकोनविंशोऽध्यायः ॥

**मूर्खो देहाद्यहम्बुद्धिः पन्था मन्निगमः स्मृतः ।**
**उत्पथश्चित्तविक्षेपः स्वर्गः सत्वगुणोदयः ॥ ४१ ॥**

**नरकस्तमउन्नाहो बन्धुर्गुरुरहं सखे ।**
**गृहं शरीरं मानुष्यं गुणाढ्यो ह्याढ्य उच्यते ॥ ४२ ॥**

देहादिषु अन्तर्यामिणि देहादिस्वामिनि सति, पुत्रदेहादौ अहमेव कर्तेति बुद्धिः, ममैवेदं देहधर्मादि इति बुद्धिः यस्यास्ति स **मूर्खः** । मत्पन्था मत्प्रापको मार्गः । **निगमः** उपनिषदादिः, वेदः, भारतभागवतादिः । तमोगुणस्य उद्रेकः **नरकः** । गुरुः ज्ञानप्रदः, बन्धसौख्यप्रदः अहम् । हे **सखे गुणाढ्यः** स्वधर्मभक्त्यादिसंपन्नः ॥ ४२ ॥

**दरिद्रो यस्त्वसन्तुष्टः कृपणो योऽजितेन्द्रियः ।**
**गुणेष्वसक्तः स्ववशो गुणसङ्गी विपर्ययः ॥ ४३ ॥**

**असन्तुष्टः दरिद्रः** । चित्तासन्तोषमात्राद्दरिद्रः । विषयेषु दोषज्ञानेऽपि तद्भोक्ता **कृपणः** । विषयेषु असक्तः **स्ववशः** समर्थ इत्यर्थः । **विपर्ययः** विषयेषु पुरुषार्थत्व-बुद्ध्या भोक्ता विपरीतः असमर्थः, बाल इत्यर्थः ॥ ४३ ॥

**एत उध्दव ते प्रश्नाः सर्वे साधु निरूपिताः ॥ ४४ ॥**
**किं वर्णितेन बहुना लक्षणं गुणदोषयोः ।**
**गुणदोषदृशिर्दोषो गुणस्तूभयवर्जनम् ॥ ४५ ॥**

**॥ इति श्रीमद्भागवते एकादशस्कन्धे एकोनविंशोऽध्यायः ॥**

**प्रश्नाः** प्रश्नविषयाः, **बहुना** विविधेन गुणेन दोषेण वा वर्णितेन **किं** वा ज्ञातव्योर्थः । न कोपि । किन्तु अवश्यज्ञातव्यं वदामीत्याह- **लक्षणमिति** । गुणदोषलक्षणयोः **लक्षणं** स्वरूपविभागज्ञापकं वदामि । गुणदोषयोः दृष्टिः= विपरीतज्ञानं, विष्णुप्रीतिकरे गुणे दोषत्वज्ञानं **दोषः** । दोषे काम्यकर्मणि हिंसायां गुणत्वज्ञानं **दोषः** । उभयोः= गुणदोषविपरीतज्ञानयोः वर्जनं येन गुणदोषव्यवस्थया यथार्थज्ञानेन तत् **उभयवर्जनम्** । विपरीतज्ञानराहित्येन यथार्थज्ञानं गुणशब्दमुख्यार्थः ॥ ४७ ॥

॥ इति श्रीयादवेन्द्रयतिविरचिते एकादशस्कन्धव्याख्याने एकोनविंशोऽध्यायः ॥

# 20 | विंशोऽध्यायः

'गुणस्तूभयवर्जनम्' इत्यस्य, 'गुणदोष...' इत्यस्य च विवक्षितार्थं प्रकटयितुं शङ्कते- **विधिश्चेति** ।

**उद्धव उवाच-**

**विधिश्च प्रतिषेधश्च निगमो हीश्वरस्य ते ।**

**अपेक्षतेऽरविन्दाक्ष गुणदोषं च कर्मणाम् ॥ १ ॥**

**ईश्वरस्य** सर्वसामर्थ्योपेतस्य ते **निगमः** त्वदुत्कर्षप्रतिपादको वेदः विधिरूपः प्रतिषेधरूपश्च वर्णाश्रमकालादिशब्दरूपश्च । सः वेदः **कर्मणां गुणमपेक्षते** विषयीकरोति प्रतिपादयतीत्यर्थः । विधिरूपस्य कर्मणि गुणप्रतिपादनपुरस्सरं प्रवर्तकत्वादितिभावः । **कर्मणां दोषमपेक्षते** विषयीकरोति प्रतिपादयति । निषेधरूपस्य कस्मिंश्चित् कर्मणि दोषप्रतिपादनपुरस्सरं निवर्तकत्वादिति भावः ॥ १ ॥

**वर्णाश्रमविकल्पं च प्रतिलोमानुलोमजम् ।**

**द्रव्यदेशवयःकालान् स्वर्गं नरकमेव च ॥ २ ॥**

स वेदः प्रतिलोमजं= त्रैवर्णातिरिक्तप्राप्तम् **अनुलोमजं** त्रैवर्णिकप्राप्तं वर्णाश्रमलक्षणं **विकल्पं** भेदम् अधिकारिभेदम् अपेक्षते विषयीकरोति प्रतिपादयति साधयतीति भावः । कर्मनिष्पत्त्यर्थं द्रव्यादीनि प्रतिपादयति । स्वर्गादिफलमपि प्रतिपादयति । विकल्पं भेदं प्रतिलोमजम् अनधिकारम् अनुलोमजम् अधिकारम् अपेक्षते । प्रवृत्त्याद्यर्थं एवंविधवेदवचः ॥ २ ॥

**गुणदोषभिदादृष्टिम् अन्तरेण वचस्तव ।**

**निःश्रेयसं कथं नु स्यान्निषेधविधिलक्षणम् ॥ ३ ॥**

एवं विधं 'गुणदोषदृशिर्दोषः' इति वचः निषेधविधिलक्षणं अधर्मनिवर्तकधर्मप्रवर्तकरूपं **यन्निःश्रेयसं** अनिष्टनिवृत्तीष्टप्राप्तिरूपं फलं तदुद्दिश्य **कथं नु** स्यात्? कथं प्रवर्तकं स्यात् **नु** वेदविरोधकम् इति भावः । **निषेधविधिलक्षणं** निषेधविधिवचनाभ्यां प्रतिपाद्यमिति वा ॥ ३ ॥

वेदवचनं परित्यज्य मद्वचनम् ग्राह्यं इत्याशंक्याह- **पितृदेवेति ।**

**पितृदेवमनुष्याणां वेदश्चक्षुस्तवेश्वर ।**

**श्रेयस्त्वनुपलब्धेऽर्थे साध्यसाधनयोरपि ॥ ४ ॥**

तव प्रतिपादको **वेदः अनुपलब्धे** चक्षुराद्यगोचरे **अर्थे** धर्मादौ साधने= कर्मादिस्वरूपे मनुष्यादीनां चक्षुः न ज्ञानजनकम् । अतः श्रेयांश्च वेदः अत्युपादेयश्च इत्यर्थः ॥ ४ ॥

**गुणदोषभिदादृष्टिर्नियमात् तेन हि स्वतः ।**

**नियमेनापवादश्च भिदाया इति हि भ्रमः ॥ ५ ॥**

अतः स्वतःप्रमाणेन **तेन** वेदेन **नियमात् गुणदोषभिदादृष्टिः** ज्ञानं जायते । त्वद्वचनेन तु **भिदायाः** गुणदोषभेदस्य **अपवादः** अभावः नियमेन प्रतिपाद्यते । इति वचनद्वये विरोधाभावात् निमित्तात् मम **भ्रमः** अव्यवस्थितकोटिविषयकः संशयः । वचनस्य अर्थविशेषाज्ञानादिति भावः ॥ ५ ॥

निःश्रेयसं प्रति श्रीनारायणप्रसादः चरमसाधनम् । स च परमभक्त्या भवति । अतः प्रसादसंपादको गुणः, तदन्यो दोषः । वेदोऽपि प्रसादसाधकातिरिक्तं गुणतया न प्रतिपादयति इत्याशयेनोपोद्घातमाह- **योगास्त्रय** इति ।

**श्रीभगवानुवाच-**

**येगास्त्रयो मया प्रोक्ता नृणां श्रेयोविधित्सया ।**

**ज्ञानं कर्म च भक्तिश्च नोपायोऽन्योऽस्ति कुत्रचित् ॥ ६ ॥**

**ज्ञानं, कर्म** निवृत्तधर्मः, भक्तिश्चेति **त्रयो योगा** उपायाः । एतदन्यः परमप्रसादं प्रति उपायो नास्ति ॥ ६ ॥

परमप्रसादं प्रति अधिकारिणो दर्शयति- **निर्विण्णानां** इति ।

**निर्विण्णानां ज्ञानयोगो न्यासिनामिह कर्मसु ।**

**तेष्वनिर्विण्णचित्तानां कर्मयोगस्तु कर्मिणाम् ॥ ७ ॥**

**कर्मसु** ज्योतिष्टोमादिषु **निर्विण्णानां** विरक्तानां **न्यासिनां** ज्ञानलक्षणो वेदः परमप्रसादं प्रति भक्तिसहितः उपायः । **तेषु** कर्मसु **अनिर्विण्णचित्तानाम्** आसक्तानां **कर्मिणां** विधिनियतानां मनुष्योत्तमानां कर्मलक्षणः यज्ञादिलक्षण उपायः भक्तिसहितः प्रसादं प्रति उपायः ॥ ७ ॥

**यदृच्छया मत्कथादौ जातश्रद्धस्तु यः पुमान् ।**

**न निर्विण्णो नातिसक्तो भक्तियोगोऽस्य सिद्धिदः ॥ ८ ॥**

**यदृच्छया** ईशेच्छया कर्मसु **न निर्विण्णः** यज्ञादिकर्मकर्ता । **नातिसक्तः** मनुष्यवत् कर्मबद्धो न भवति इत्यर्थः । **मत्कथादौ जातश्रद्धः** स्वतः प्राप्तश्रद्धः यः देवेशः

अस्य देवेशस्य भक्तियोगः **सिद्धिदः** परमप्रसादसम्पादकः । मनुष्याः कर्मबद्धाः कर्मयोगिन इत्युच्यन्ते । मनुष्येभ्यो ज्ञानाधिकाः ज्ञानयोगिन इत्युच्यन्ते । तेभ्यः भक्त्या अधिका भक्तियोगिनः । एवमादि श्रीतात्पर्ये ज्ञेयम् ॥ ८ ॥

मनुष्योत्तमानां प्रथमं ज्ञानोदयः कथम् ? इति जिज्ञासायामाह- **तावत् कर्माणीति ।**

**तावत् कर्माणि कुर्वीत न निर्विद्येत यावता ।**

**मत्कथाश्रवणादौ वा श्रद्धा यावन्न जायते ॥ ९ ॥**

**कर्माणि** फलकामनाविरहितानि कर्माणीत्यर्थः । **यावता** कालेन न **निर्विद्येत** चित्तशुद्धिपुरस्सरं विरागं न प्राप्नुयात् तावत्पर्यन्तं **कर्माणि कुर्वीत ।** श्रवणादौ वा सक्तश्चेत् कर्मसंकोचः अनुमत इति भावः ॥ ९ ॥

ननु कर्म न कर्तव्यम् कर्मणो बन्धकत्वात्, इत्यत आह- **स्वधर्मस्थ** इति ।

**स्वधर्मस्थो यजन् यज्ञैरनाशीर्मां स उद्धव ।**

**न याति स्वर्गनरकौ यद्यन्यन्न समाचरेत् ॥ १० ॥**

**स्वधर्मस्थः** मनुष्यस्य कर्मवर्जनमपि नरकसंपादकमिति भावः । **यदि अन्यत् पापं न समाचरेत्** तदा **निराशीः** फलकामनारहितः यः स **यज्ञैः मां** मत्प्रीतिमुद्दिश्य **यजन् स्वर्गनरकौ न याति** स्वर्गात् पतनेन प्राप्तं दुःखं न याति इत्यर्थः ॥ १० ॥

ज्ञानविशेषोदये प्रथमकारणमाह- **अस्मिंल्लोक** इति ।

**अस्मिंल्लोके वर्तमानः स्वधर्मस्थोऽनघः शुचिः ।**

**ज्ञानं विशुद्धमाप्नोति मद्भक्तिं वा यदृच्छया ॥ ११ ॥**

**यदृच्छया** ईशेच्छया **अस्मिन् लोके** ब्राह्मणादिदेहे **वर्तमानः** चेतनः ईशेच्छया स्वधर्मफलोद्देशं विना धर्मकर्ता सन् **अनघः** ज्ञानप्रतिबन्धकपापरहितो भवति । **शुचिः** ज्ञानोपयुक्तचित्तशुद्धिमान् भवति । **यदृच्छया** विशुद्धम् अन्यथाज्ञानविलक्षणं सम्यग्ज्ञानं वा । तथा विशुद्धां मद्भक्तिमाप्नोति ॥ ११ ॥

ईश्वरसेवासाधनं नृदेहं स्तौति- **स्वर्गिणोपीति ।**

**स्वर्गिणोऽप्येतमिच्छन्ति लोकं निरयिणस्तथा ।**
**साधकं ज्ञानभक्तिभ्यामुभयं तदसाधकम् ॥ १२ ॥**

एवम् ईश्वरसेवासाधनं **लोकं** नृदेहं इच्छन्ति । स्वर्गस्थदेहापेक्षया देहस्य को विशेषः ? इति जिज्ञासायामाह- **साधकमिति । उभयं** स्वर्गस्थः तदन्यत्र स्थितः देहश्च उभयं यत् यादृशनिःश्रेयसं प्रति असाधकं तत् तादृशनिःश्रेयसं प्रति शरीरं ज्ञानभक्तिभ्यां सहितं सत् **साधकम् ।** प्रथमं कर्मभुवि नृदेहे स्वधर्मज्ञानोदय इति भावः ॥ १२ ॥

अथापि अस्मिन् देहे आसक्तिर्नकार्येत्याह- **न नर** इति ।

**न नरः स्वर्गतिं काङ्क्षेन्नारकांश्च विचक्षणः ।**
**नेमं लोकं च काङ्क्षेत देहावेशात् प्रमाद्यति ॥ १३ ॥**

**नारकांश्च** यातनादेहानिवेत्यर्थः । **इमं लोकं** मनुष्यदेहं च न **काङ्क्षेत ।** देहापेक्षा कुतो न कार्या ? इत्यत आह- देहे आवेशात् = अहंकारममकारलक्षणभ्रमात् **प्रमाद्यति** कदाचिद् ईश्वरे महापराधं कृत्वा बहुदुःखान्यनुभवतीत्यर्थः । मनुष्यदेह-

स्वभावः विज्ञानाच्छादकः तादृशस्वभावविजयलक्षणशौर्ये कदाचित् अनवधानता प्राप्तेति भावः ॥ १३ ॥

**एवं विद्वान् पुरा मृत्योरभवाय[1] घटेत सः ।**
**अप्रमत्त इदं ज्ञात्वा मर्त्यमप्यर्थसिद्धिदम् ॥ १४ ॥**

**अर्थसिद्धिदं** श्रवणादिपुरस्सरं नित्यपुरुषार्थप्रदं मनुष्यशरीरम् **एवं विद्वान्** प्रमाद-कारणं मनुष्यशरीरं इति विद्वान् । ईश्वरेच्छया सम्यक् ज्ञानप्रदं, **मर्त्यं** स्वेच्छया अवस्थानरहितं इति **ज्ञात्वा** स दैवानुकूल्योपेतः **अप्रमत्तः** सन् **मृत्योः पुरा** देहावस्थान-समये शीघ्रमिति भावः । **अभवाय** भवः उत्पत्तिः दुःखतत्साधनकर्मबन्धादिपरिहाराय **घटेत** यतेत इत्यर्थः ॥ १४ ॥

विवेकिनः व्यापारमाह- **छिद्यमानमिति ।**

**छिद्यमानं कालावयवैः कृतनीळं वनस्पतिम् ।**
**खगः स्वदेहमुत्सृज्य क्षेमं याति ह्यलम्पटः ॥ १५ ॥**

कालेन छेदकेन **अवयवैः छिद्यमानं** विक्षेपं प्राप्यमाणं, **कृतनीडं** सम्पन्नपक्षि-निकेतनोपेतं स्वकेतं स्वस्य आश्रयं **खगः उत्सृज्य क्षेमं** यथा **याति** तथा **अलंपटः** विषयविरक्तः चेतनः क्लृप्तायुः गतेन कालव्यवहितमासादिना **छिद्यमानं स्वदेहं उत्सृज्य** देहे अभिमानं परित्यज्येत्यर्थः । सम्यङ्ज्ञानपाटवादिति भावः । **क्षेमं** ईश्वरापरोक्षात् **याति ।** खगः खैः इन्द्रियैः गच्छति जानाति । खगः जीवः इति वा ॥ १५ ॥

ज्ञानपाटववतः निःश्रेयससम्पादने त्वरामाह- **अहोरात्रैरिति ।**

---

[1] 'मृत्योरभावाय' इति पाठान्तरम् ।

**अहोरात्रैश्छिद्यमानं बुद्ध्वाऽयुर्भयवेपथुः ।**
**मुक्तसङ्गः परं बुद्ध्वा निरीह उपशाम्यति ॥ १६ ॥**

**आयुः** देहावस्थानस्य क्लृप्तवत्सरान् **अहोरात्रैः** गच्छद्भिः इति भावः । **छिद्यमानं** विनशत् **बुद्ध्वा जातवेपथुः** एवं देहकम्पकारणभयवान् इत्यर्थः । **निरीहः** मनसाऽपि विषयतिरस्कारकर्ता सन् । **मुक्तसङ्गः** मुक्तः राजसतामसबुद्धिविनिर्मुक्तः इति ध्यान-पाटवोपेत इति भावः । तैः प्राप्तसंगः परमात्मभक्तिविशेषः ध्यानक्रमेणेति भावः । **परं** संपूर्णकल्याणगुणं बुद्ध्वा तस्य अपरोक्षं लब्ध्वा **उपशाम्यति** सर्वदुःखराहित्येन श्रमवान् न भवति ॥

यः ज्ञानभक्त्यादिपुरुषार्थसाधनेन देहेन धर्मज्ञानादिकमसम्पाद्य तिष्ठति तस्य महादुःखं भवतीत्याह- **नृ देहमिति ।**

**नृदेहमासाद्य सुदुर्लभं यः प्लवं सुकल्यं गुरुकर्णधारम् ।**
**मयाऽनुकूलेन नभस्वतेरितं पुमान् भवाब्धिं न तरेत् स मार्गणः ॥ १७ ॥**

**सुकल्यं** अत्यन्तं दृढं यौवनसंपन्नत्वादिति भावः । गुरुः= धर्मज्ञानाद्युपदेष्टैव कर्णधारः= नौपालकः यस्य तम् । **अनुकूलेन** ज्ञानादिसम्पादने प्रेरणाकर्त्रा । नभस्वान् तत्वदेवता मुख्यवायुः । तेन ईरितं **प्लवं** नृदेहलक्षणं प्लवं नावं **सुदुर्लभमपि** मया **आसाद्य** यदृच्छया प्राप्य यः **पुमान् भवाब्धिं** भवः संभवः दुःखसन्ततिसंभव एव अब्धिः तं यदि **न तरेत्** सः मार्गणवत् इषुरिव, इषुः यथा वेगेन ऊर्ध्वं गच्छन् वेगापगमे गौरवात् अधःपतति तथा चेतनः ज्ञानविशेषेण ऊर्ध्वलोकप्राप्तौ देहलक्षण-पुष्कळकारणवानपि विषयभोगप्राप्तज्ञानतिरोधानेन विकर्मणा देहनाशे अधःपतति इत्यर्थः । अतः विषयस्मरणमपि परिहृत्य ज्ञानभक्तिसंपादनमेव कर्तव्यमिति भावः ॥ १७ ॥

त्वदानुकूल्येन श्रवणासक्तस्यापि चञ्चलमनसा ध्यानादितिरोधानं भवतीत्याशङ्क्याह- **यदारंभेष्विति** ।

**यदाऽऽरम्भेषु निर्विण्णो विरक्तः संयतेन्द्रियः ।**
**अभ्यासेनात्मनो योगी धारयेदचलं मनः ॥ १८ ॥**

**विरक्तः** विषयभोगेषु विरक्तः, **संयतेन्द्रियः** रसनादिजयवान् **आरम्भेषु** कृष्यारामादौ **निर्विण्णः** दुःखानुभवपुरस्सरं विरागवान् यदा तदा **आत्मनः** मनसः **अभ्यासेन** विषयेभ्यः आकर्षणाभ्यासेन वा ध्यानाभ्यासेन **योगी** भविष्यन् **मनः अचलं** सम्पाद्य **धारयेत्** अनायासेन परमात्मानं ध्यायेदित्यर्थः ॥ १८ ॥

मनश्चापलपरिहारे प्रयत्नवता जागरूकेण भाव्यमित्याह- **धार्यमाणमिति** ।

**धार्यमाणं मनो यर्हि भ्राम्यदाश्वनवस्थितम् ।**
**अतन्द्रितोऽनुरोधेन मार्गेणात्मवशं नयेत् ॥ १९ ॥**

परमात्मनि **धार्यमाणं मनः** यदा **भ्राम्यत्** विषयेषु गच्छत् सत् परमात्मनि **अनवस्थितम्** तदा **अतन्द्रितः** मनोनिवर्तने सावधानः प्राणायामादिमनोनिग्रहोपायेन तल्लक्षण**मार्गेण आत्मवशं नयेत्** ॥ १९ ॥

उक्तं विवृणोति- **मनोगतिमिति** ।

**मनोऽगतिं न विसृजेज्जितप्राणो जितेन्द्रियः ।**
**सत्वसम्पन्नया बुद्ध्या मन आत्मवशं नयेत् ॥ २० ॥**

विषयगतिं प्रति उपेक्षया मनो **न विसृजेत्** । सत्वेन= गुणेन संपन्नया= राजस-तामसबुद्धिभिन्नया **बुद्ध्या** ध्यानेन महासौख्यसंपत्तिर्भवति इति बुद्ध्या, **मनः आत्मवशं नयेत्** ॥ २० ॥

परमात्मनि मनोनियमनं स्तौति- **एष वै परम इति** ।

**एष वै परमो योगो मनसः सङ्ग्रहः स्मृतः ।**
**हृदयज्ञत्वमन्विच्छन् दमश्चैवेच्छतो मुहुः ॥ २१ ॥**

परमात्मध्यानं **इच्छत एषः** दमसहितः सर्वेन्द्रियनिग्रहसहितः, तन्द्रीं विना मुहुः **मनसः सङ्ग्रह एव** । यः **हृदयज्ञत्वं** हृदयं= विष्णुः तज्ज्ञत्वम् अपरोक्षम् **अन्विच्छन्** यतते तस्य योगिनः परमयोगिनः उपायोत्तमः **वै** तथा योगिषु प्रसिद्धः ॥ २१ ॥

मनोवशीकरणे उपायानाह- **साङ्ख्यनेति** ।

**साङ्ख्येन सर्वभावानां प्रतिलोमानुलोमतः ।**
**भवाप्ययावनुध्यायेन्मनो यावत् प्रसीदति ॥ २२ ॥**

**सर्वभावानां** चेतनाचेतनानां सर्ववस्तूनां भोग्यानामिति भावः । **साङ्ख्येन** गुणदोष-ज्ञानेनेत्यर्थः । **सर्वभावानां** ब्रह्मादिसर्ववस्तूनां **प्रतिलोमानुलोमाभ्यां** क्रमव्युत्क्रमाभ्याम् ।

ईश्वरात् **भवाप्ययौ** सृष्टिलयौ भवतः इति च **साङ्ख्येन** अनित्यत्वज्ञानेन ईश्वर-स्वातन्त्र्यज्ञानेनेति भावः । **अनुध्यायेत्** गुरुदेवतादौ हितकर्तृत्वं राजसतामसेषु चेतनेषु विषयेषु च दुःखकारणत्वं च पुनः स्मरेदित्यर्थः । अनन्तरं दृढविरागः गुरुदेवतयोः यथोचितं भक्तिदार्ढ्येनेति भावः । **मनः यावत्** पर्यन्तं ध्याने स्वतो न प्रवृत्तं तावत्

पर्यन्तं तं **अनुध्यायेत्** । एवं विरागज्ञानसंपादनपुरस्सरं अन्तर्यामिणं ध्यायेत् । ध्यानेन प्रयत्नवान् इत्यर्थः । एवं ध्यानाभ्यासफलमाह- **प्रसीदतीति** । मनः प्रयत्नं विना स्वतः ध्याने प्रवर्तत इत्यर्थः । परमात्मप्रसादादिति भावः । अथवा साङ्ख्यानुध्यानयोः फलमाह । मनः यावत् साकल्येन प्रसीदति तावत् कालपर्यन्तमिति वा ॥ २२ ॥

ननु अनादिविषयवासनारागादिकलुषितं मनः कथमिदानीं तत्वज्ञानादिना प्रसीदति इति जिज्ञासायामाह- **निर्विण्णस्येति** ।

**निर्विण्णस्य विरक्तस्य पुरुषस्यात्मवेदिनः ।**
**मनस्त्यजति दौरात्म्यं चिन्तितस्यानुचिन्तया ॥ २३ ॥**

**निर्विण्णस्य** पश्चात्तापातिशययुक्तस्य इत्यर्थः । **आत्मवेदिनः** अनन्तानन्तकल्याणगुणतत्वज्ञानवतः । **अनुचिन्तया** निरन्तरं परमात्मध्यानेन । **चिन्तितस्य** ध्यानेन अभीष्टप्रदस्येत्यर्थः । तस्य सकाशात् **मनः दौरात्म्यं** रागादिसंपादकानादिविषयवासनालक्षणदोषं **त्यजति** ॥ २४ ॥

प्रथमं रागादिदोषपरिहारे उपायानाह- **यमादिभिरिति** ।

**यमादिभिर्योगपथैरान्वीक्षिक्या च विद्यया ।**
**ममार्चोपासनाभिर्वा नान्यैर्योगं स्मरेन्मनः ॥ २४ ॥**

**यदि कुर्यात् प्रमादेन योगी कर्म विगर्हितम् ।**
**योगेनैव दहेदंहो नान्यं यत्नं कदाचन ॥ २५ ॥**

**आन्वीक्षिक्या** 'व्यापारादिभिः विकर्म, तेन च बन्धः' इति कार्यकारणभावग्राहकब्रह्मतर्केण, **विद्यया** स्वतन्त्रास्वतन्त्रसर्वतत्वज्ञानेन, **अर्चा** चलप्रतिमा अचल-

प्रतिमा च तस्याः **उपासनाभिः** निरन्तरं कालत्रये वा पूजया एवंविधैः ध्याने उपायमार्गैः मनः मामेव स्मरेत् । **अन्यैः** उक्तेभ्यः अन्यैः उपायैः पापप्रायश्चित्तादिभिः **योगं** मनःप्रसादलक्षणं ध्याने उपायं **न स्मरेत्** । उपायत्वेन स्मरणमपि न कुर्यादित्यर्थः । यदि **प्रमादेन** ज्ञानतिरोधानात् प्रारब्धकर्मणेति भावः । **अंहः** विगर्हितं कर्म, **योगेन** ध्यानमध्यगतापरोक्षेण ध्यानेन वा **दहेत्** । अन्यैः उपायैः क्षेत्रदर्शनादिभिः तादृशपापनिवृत्त्यर्थं **यत्नम्** उत्साहं न कुर्यात् । तेषां उपायान्तराणां उक्तिः किमर्था इति जिज्ञासायामाह- **कदाचनेति** । कदाचन ज्ञानपाटवात् पूर्वं पापपरिहाराय ते उपायाः इत्यर्थः । अतः विष्णुप्रीतिमुद्दिश्य कर्म ज्ञानिनो गुणः, न फलकामना गुण इति भावः ॥ २५ ॥

कृष्णवचनवेदवचनयोः विरोधभ्रमं परिहर्तुं मन्दाधिकारिणमवलम्ब्य (अधिकारिभेदमवलम्ब्य) वेदार्थमाह- **स्वे स्वेऽधिकार** इति ।

**स्वेस्वेऽधिकारे या निष्ठा स गुणः परिकीर्तितः ।**
**विपर्ययस्तु दोषः स्यादुभयोरेष निर्णयः ॥ २६ ॥**

**स्वेस्वेऽधिकारे** वर्णाश्रमलक्षणे अधिकारे स्थितस्य **या निष्ठा** निषिद्धत्यागधर्माचरणलक्षणनिष्ठा व्यवस्थितिः । सत्वगुण इत्युच्यते वेदेन इति भावः । **यः विपर्ययः** स दोषः यथा पशुसोमादिः गृहस्थानां गुणः, संन्यासिनां दोषः । **उभयोः एषः** अज्ञजनविवक्षया स्वर्गादिफलसम्बन्धित्वं वेदेन भवति । वेदपरममुख्यार्थावधारणरहितानामिति भावः ॥ २६ ॥

प्रसादादिफलकानां कर्मणां स्वर्गादिफलकत्वेन किमर्थमुच्यते इति जिज्ञासायामाह- **कर्मणामिति** ।

**कर्मणां जात्यशुद्धानामनेन नियमः कृतः ।**
**गुणदोषविधानेन त्वंहसां त्याजनेच्छया ॥ २७ ॥**

जात्या= पशुसोमयागत्वादिना अशुद्धानाम्= विष्णुप्रीत्यर्थम् अकरणे हिंसारूपत्वादिना शुद्धिरहितानाम् । **अनेन** स्वर्गादिजनकत्वलक्षणगुणदोषविधानेन प्रवृत्तिनिवृत्तिनियमः **कृतः** वेदेन सम्पादितः । ज्ञानसम्पादने कौशलरहितानां बालानामिति भावः । नियमनकरणस्य प्रयोजनमाह- **अंहसामिति । अंहसां** स्वेच्छया व्यर्थहिंसाकरणानां **त्याजनेच्छया नियमः कृतः ।** कर्मणाम् अशुद्धत्वेपि बालानां विध्यनुसरणं श्रुतं च[1] । तस्मात् ज्ञानकुशलान् प्रति विष्णुप्रीतिसम्पादकत्वं यागादिकर्मणि गुणः तदसम्पादकत्वं दोष इति वेदः प्रतिपादयति । अतो न विरोध इति भावः ॥ २७ ॥

आस्तिककामुकस्य कथं ज्ञानादिदार्ढ्यम्? इति जिज्ञासायामाह- **जातश्रद्ध** इति ।

**जातश्रद्धो मत्कथासु निर्विण्णः सर्वकर्मसु ।**
**वेद दुःखात्मकान् कामान् परित्यागेऽप्यनीश्वरः ॥ २८ ॥**

**ततो भजेत मां प्रीतः श्रद्धालुर्दृढनिश्चयः ।**
**जुषमाणश्च तान् कामान् दुःखोदर्कांश्च गर्हयन् ॥ २९ ॥**

**प्रोक्तेन भक्तियोगेन भजतो माऽसकृन्मुनेः ।**
**कामा हृदिस्था नश्यन्ति सर्वे मयि हृदि स्थिते ॥ ३० ॥**

[1] 'विध्यनुसरणं गुणः' इति पाठः सम्भाव्यते ।

**सर्वकर्मसु** कृष्यारामादिषु **निर्विण्णः** । पश्चात्तापकृतविकारयुक्तः अथवा देवानां विध्यनियतत्वात् कर्मणि निर्वेदः आसक्त्यभावः । **कृतनिश्चयः** ज्ञानतत्साध्यफलयोः विश्वासवान् । **असकृत्** सदा, **मां भजतः कामाः** रागादयः **नश्यन्ति** ॥ ३० ॥

ततो ज्ञानभक्तिदाढर्येन उपासनस्य फलमाह- **भिद्यत** इति ।

**भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः ।**
**क्षीयन्ते चास्य कर्माणि मयि दृष्टेऽखिलात्मनि ॥ ३१ ॥**

हृदयस्य ग्रन्थिः= अन्तःकरणाख्यो बन्धः । रजस्तमोभागौ इत्यर्थः । ध्यानोत्कर्षेण **अखिलात्मनि** चेतनदेहाद्यन्तर्यामिणि दृष्टे सत्येव । **क्षीयन्ते** सर्वाणि अनभिमतकर्माणि अश्लेषादिलक्षणं क्षयं यान्ति इत्यर्थः । उक्तं च 'उपमर्दं च' (ब्र.सू.३-४-१६) इति ॥ ३१ ॥

अवतारापरोक्षस्य असुराणां सत्त्वात् तेषां चापक्षयः कस्मान्न भवति ? इति जिज्ञासायामाह- **तस्मान्मद्भक्तीति** ।

**तस्मान्मद्भक्तियुक्तस्य योगिनो वै मदात्मनः ।**
**न ज्ञानान्न च वैराग्यात् प्रायः श्रेयो भवेदिह ॥ ३२ ॥**

**मदात्मनः मां** ध्यायतः **वैराग्यात्** भक्तिप्राप्तात्, भक्तिप्राप्तादपरोक्षाच्च **श्रेयः** कर्मक्षयादिनिःश्रेयसं **इह** मनुष्यदेहे भवेत् । **प्रायः** प्रारब्धलक्षणप्रतिबन्धाभावे इत्यर्थः । उक्तं च- 'ऐहिकमप्रस्तुतप्रतिबन्धे तद्दर्शनात्' इति (ब्र.सू.३-४-५०) । भक्तिरहितात् ख्यातिलाभपूजाद्यर्थं संपादितात् वैराग्यात् ज्ञानाच्च श्रेयो न भवेदित्यर्थः । तस्मात् साधनेषु भक्तिः प्रधानमिति भावः ॥

भक्तेः सर्वाभीष्टसाधनत्वमाह- **यत्कर्मभिरिति** ।

**यत् कर्मभिर्यत् तपसा ज्ञानवैराग्यतश्च यत् ।**
**योगेन दानधर्मेण श्रेयोभिरितरैरपि ॥ ३३ ॥**

**योगेन** गरुडादिध्यानेन वा **अपरैः श्रेयोभिः** श्रेयस्साधनैः वरादिभिः यत् अभीष्टं भवति ॥ ३३ ॥

**सर्वं मद्भक्तियोगेन मद्भक्तो लभतेऽञ्जसा ।**
**स्वर्गापवर्गं मद्धाम कथञ्चिद् यदि वाञ्छति ॥ ३४ ॥**

एकान्तिन अन्यो भक्तः यदि कदाचित्, **कथञ्चित्** लज्जापुरस्सरं, भक्तस्य पुरुषार्थापेक्षा लज्जाकारणमिति भावः । मद्धाम स्वर्गं **अञ्जसा** प्रतिहतिं विना **लभते** । अपवर्गादिकं वाञ्छति तत् सर्वं 'पुरुषार्थोतः शब्दादिति बादरायणः' (ब्र.सू.३-४-१) इति ॥ ३५ ॥

बिंबापरोक्षात् आनन्दादिगुणाभिव्यक्तिम् उक्त्वा, भक्तिविशेषाणां स्वभावमाह- **न किञ्चित् साधव** इति ।

**न किञ्चित् साधवो धीरा भक्त्या ह्येकान्तिनो मम ।**
**वाञ्छन्त्यपि मया दत्तं कैवल्यमपुनर्भवम् ॥ ३५ ॥**

एकः= परमात्मैव मम परमाभीष्टमिति अन्तः= निर्णयः येषां ते **एकान्तिनस्तु किञ्चिदपि** अभीष्टं, दुःखचिन्तादेः **पुनः** नाशानन्तरं भवमुत्पत्तिः तद्रहितं अपुनर्भवं (मोक्षं) न वाञ्छन्ति । कुतो वाञ्छा न? इति जिज्ञासायामाह- **भक्त्येति** । तेषां परमात्मनि परमादरेण पुरुषार्थे उपेक्षेति भावः । यद्यपि न वाञ्छन्ति । अथापि

मया दत्तं कैवल्यं गृह्णन्ति, मयि गौरवादितिभावः । यद्यपि देवा रागिणो दृष्टाः, स्वर्गाद्यर्थम् असुरनिग्रहे यत्नदर्शनात् । तथापि तेषां विषयराग ईश्वरसेवारूप इति भावः ॥ ३५ ॥

कैवल्यसौख्येऽपि तारतम्यमस्तीत्याह- **नैरपेक्ष्यमिति ।**

**नैरपेक्ष्यं परं प्राहुर्निःश्रेयसमकल्मषम् ।**
**तस्मान्निराशिषो भक्तिर्निरपेक्षस्य मे भवेत् ॥ ३६ ॥**

**तस्मात्** अधिकारविशेषात् **निराशिषः** कैवल्यसुखमप्यनपेक्षमाणस्य भक्तिः परमासक्तिः भवेत् । तस्मात् भक्तिविशेषात् **नैरपेक्ष्यम्** स्वत एव सदा प्राप्तम् **निःश्रेयसम्** श्रेयस्सु श्रेष्ठम् **अकल्मषं** सत्यलोकसुखवत् प्रारब्धासहचरितं **परं** सम्पूर्णं[1] सुखं भवति इति प्राहुः ॥ ३६ ॥

ननु देवादीनां सदसद्विषयभोक्तृत्वात् कथमेकान्तभक्तत्वम् ? इति जिज्ञासायामाह- **न मय्येकान्तेति ।**

**न मय्येकान्तभक्तानां गुणदोषोद्भवा गुणाः ।**
**साधूनां समचित्तानां बुद्धेः परमुपेयुषाम्[2] ॥ ३७ ॥**

गुणेभ्यः= सात्विकविषयेभ्यः दोषेभ्यः राजसतामसविषयेभ्यः उद्भवाः **गुणा** हर्षशोकादयः मय्येकान्तभक्तानां न सन्ति । अत्र निमित्तमाह- **बुद्धेः** प्राकृतान्तःकरणात् **परं** विलक्षणं स्वरूपम् **उपेयुषां** साक्षात्कुर्वतां **समचित्तानां** समे= गुणदोषानुभवादौ कारणे, समे= सर्वत्र एकरूपे मयि इति वा चित्तं= आसक्तिः येषान्ते तेषाम् । विधिबन्धरहितानां दोषा नेति भावः ॥ ३७ ॥

---

[1] 'सम्पूर्णगुणम्' इति मूलपुस्तके पाठः, स च प्रामादिक इति भाति । [2] 'पारमुपेयुषाम्' इति पाठान्तरम् ।

**एवमेतान् मयाऽऽदिष्टाननुतिष्ठन्ति मे पथः ।**
**क्षेमं विन्दन्ति मत्स्थानं यद् ब्रह्म परमं विदुः ॥ ३८ ॥**

**॥ इति श्रीमद्भागवते एकादशस्कन्धे विंशोऽध्यायः ॥**

**मे पथः** मत्प्राप्तिकारणानि **एतान्** उपायान् **अनुतिष्ठन्ति यत् परमं ब्रह्म** तद् **विदुः** अपरोक्षीकुर्वन्ति । अनन्तरं **क्षेमं** भयरहितं मम स्थानं विष्णुलोकं **विन्दन्ति** प्राप्नुवन्ति ॥ ३८ ॥

॥ इति श्रीयादवेन्द्रयतिविरचिते एकादशस्कन्धव्याख्याने विंशोऽध्यायः ॥

# 21 | एकविंशोऽध्यायः

मुक्त्ययोग्यानां भगवत्कथादीनां श्रवणाद्यकरणापराधात् दुःखानुबन्धो[1] भवतीत्याह- **य एतां मत्कथामिति ।**

**श्रीभगवानुवाच-**

**य एतां मत्कथां हित्वा भक्तिज्ञानक्रियात्मिकाम् ।**

**क्षुद्रान् कामान् खलैः प्राणैर्जुषन्तः संसरन्ति ते ॥ १ ॥**

क्रियाः= श्रीहरिपुजा यज्ञादिलक्षणाश्च । तेषामात्मिकां= स्वरूपां प्रतिपाद्यप्रतिपादकयोरभेदोक्तिः । अथवा भक्तिज्ञानक्रियाणां आत्मा स्वरूपाणि प्रतिपाद्यानि यया सा तां **हित्वा खलैः** विषयासक्तिलक्षणदोषयुक्तैः **प्राणैः** इन्द्रियैः **जुषन्तः** विषयान् अनुभवन्तः ॥ १ ॥

कर्मणां विष्णुप्रीतियुक्तत्वेन यथा गुणत्वं, तदप्रियत्वेन यथा दोषत्वम्, तथा द्रव्याणामपि श्रीहरिसान्निध्यविशेषात् प्रियत्वं तदप्राप्त्या अप्रियत्वमित्याह- **स्वेस्वेऽधिकार** इति ।

**स्वेस्वेऽधिकारे या निष्ठा स गुणः परिकार्तितः ।**

**विपर्ययस्तु दोषः स्यादुभयोरेष निश्चयः ॥ २ ॥**

**निष्ठा** तत्वेन गृहीतः स गुणः परिकीर्तित इत्यादि । यथा एवं वस्तुषु द्रव्येषु शुध्यशुद्धी विधीयेत इति सम्बन्धः ॥ २ ॥

---

[1] 'मुक्तियोग्यानाम्' इति, 'सुखानुबन्धः' इति च मूलपुस्तके पठ्येते ।

किमर्थं वस्तुषु शुद्ध्यशुद्धिलक्षणगुणदोषविधानम् ? इत्याशङ्क्य शुद्ध्यशुद्धिज्ञापनार्थं शुद्ध्यशुद्धिलक्षणगुणदोषौ विधीयेते इत्याह- **शुद्ध्यशुद्धीति** ।

**शुद्ध्यशुद्धी विधीयेते समानेष्वपि वस्तुषु ।**
**द्रव्यस्य विचिकित्सार्थं गुणदोषौ शुभाशुभौ ॥ ३ ॥**

**समानेषु** पञ्चभूतात्मकत्वेन शुद्धत्वेन धर्मेण अशुद्धत्वेन धर्मेण समानेषु एकविधेष्वपि वस्तुषु यागोपयुक्तेषु । शुभाशुभसंज्ञोपेते **शुद्ध्यशुद्धी** ईश्वरसान्निध्यलक्षणौ[1] गुणदोषौ विधीयेते । श्रुत्या स्मृत्या च इत्यर्थः । किमर्थं एतद्विधानम् ? इति जिज्ञासायामाह- **द्रव्यस्य** यागीयद्रव्यादेः **विचिकित्सार्थ** म् उपादेयत्वानुपादेयत्वयोः ज्ञानार्थम् । ज्ञात्वाऽनुष्ठाने फलाधिक्यादिति भावः ॥ ३ ॥

वस्तुज्ञानस्य प्रयोजनान्तरमाह- **धर्मार्थमिति** ।

**धर्मार्थं व्यवहारार्थं यात्रार्थमिति चानघ ।**
**दर्शितोऽयं मयाऽऽचारो धर्म्यमुद्वहता धुरम् ॥ ४ ॥**

**धर्मार्थं** श्रौतस्मार्तादिधर्मकरणार्थं, 'इदं शुद्धं इदं शुद्धं न' इति हानोपादानादि**व्यवहारार्थं, यात्रार्थं** देहरक्षणार्थं सात्विकान्नभोजनादिति भावः । हे **अनघ !** उद्धव ! धर्माधर्मसंस्थापनलक्षणं **धुरं** भारम् **उद्वहता मया अयम्** एवं गुणद्रव्यादिविशिष्टाचारः धर्मो दर्शितः ॥ ४ ॥

केषां वस्तूनां परमात्मसान्निध्यलक्षणं शुद्धत्वम् इति जिज्ञासायामाह- **भूमीति** ।

**भूम्यम्ब्वग्न्यनिलाकाशा भूतानां पञ्च धातवः ।**
**आब्रह्मस्थावरादीनां शरीरा आत्मसंयुताः ॥ ५ ॥**

---

[1] 'ईश्वरसान्निध्यविशेषतदभावलक्षणौ' इति स्यात् ।

**भूम्यम्ब्वग्न्यनिलाकाशा** इति एवं सज्ञोपेता **भूतानां ये पञ्च धातवः** कार्यभागाः ते आब्रह्म= ब्रह्मपर्यन्तं ये स्थावरादिजीवा तेषां ये **शरीरा** देहकारणभावाः[1] ते च सर्वे चेतनाः तत्सम्बन्धिनश्च **आत्मसंयुताः** परमात्मसंयुताः ॥ ५ ॥

एवं चेत् सर्ववस्तु सर्वैरुपादेयं प्रसज्येत ? इत्याशङ्क्याह- **धातुशुद्ध्य** इति ।

**भेदेन नामरूपाणि विषमाणि समेष्वपि ।**
**धातुशुद्ध्या विकल्प्यन्त एतेषां स्वार्थसिद्धये ॥ ६ ॥**

धातुः= परमेश्वरः । तेन प्राप्तया शुद्ध्या । नामानि= दधि मधु घृतम् आपो धान्यं तण्डुल इत्यादीनि, रूपाणि= आकृतयः विषमाणि स्वरूपाणि च **भेदेन विकल्प्यन्ते** प्रतिपाद्यन्ते । एवं भेदवर्णनस्य प्रयोजनमाह- **एतेषां** ब्रह्मादीनां स्वार्थाः= श्रौतस्मार्तादिधर्माः तेषां सिद्धये ॥ ६ ॥

धर्मभेदसिद्धिश्च देशकालादीनां भावानां वस्तूनां शुद्धिभेदेन भवति इत्याह- **देशकालेति ।**

**देशकालादिभावानां वचनान्मम सत्तम ।**
**गुणदोषौ विधीयेते नियमार्थं हि कर्मणाम् ॥ ७ ॥**

**कर्मणां नियमार्थं** शुद्धाशुद्धस्य व्यवच्छेदार्थं स्वरूपभेदसिद्ध्यर्थं वा **मम वचनात्** वेदेन **गुणदोषौ विधीयेत** 'अयं कालादिः कर्मयोग्यः' 'अन्यस्त्वयोग्यः'इति विधीयेते ॥ ७ ॥

देशे शुद्धौ श्रीहरिसान्निध्ये कारणान्तरं च आह- **कृष्णसार** इति ।

---

[1] 'देहाः' इति स्यादिति भाति ।

**कृष्णसारोऽथ देशानां ब्राह्मणानां शुचिर्भवेत् ।**
**कृष्णसारोऽप्यसौवीरकीकटासंस्कृतेरिणः ॥ ८ ॥**

**देशानां** नद्यादिरहितानां देशानां मध्ये कृष्णसारमृगेण अध्युषितः देशः शुद्धः । कृष्णसाराध्युषितोऽपि वक्ष्यमाणदेशभिन्न एव शुचिः न सर्व इत्याह- **असौवीरेति ।** ऊषरप्रचुरः ईरिणः । लावणिक उपद्वीपो वा । सौवीरदेशः कीकटदेशः असंस्कृतदेशः ईरिणदेशश्च एतद्भिन्नः **असौवीरकीकटासंस्कृतेरिणः ।** कृष्णसारेण संस्थितो देशः **शुचिः** प्रशस्तः शुद्ध इत्यर्थः ॥ ८ ॥

**कर्मण्यो गुणवान् कालो द्रव्यतः स्वत एव वा ।**
**यतो निवर्तते कर्म सदोषोऽकर्मकः स्मृतः ॥ ९ ॥**[1]

**द्रव्यस्य शुद्ध्यशुद्धी च द्रव्येण वचनेन वा ।**
**संस्कारेणाथ कालेन महत्त्वाल्पतयाऽथ वा ॥ १० ॥**

**शक्त्याऽशक्त्या च वाग्बुद्ध्या समृद्ध्या च तथाऽऽत्मनः ।**
**अन्ये शुद्ध्यन्ति हि तथा देशावस्थानुसारतः ॥ ११ ॥**

**स्वत** इति । स्वतःप्राप्तः दर्शकालादित्वेन **गुणवान्** प्रशस्तः । **द्रव्यतः** वसन्ता-घृतुप्राप्तक्षणेन वचनेन वा दार्वादीनां मखादिसोमपात्राणां[2] **द्रव्येण** तोयेन । अन्नादीनां एकादश्यादिहरिवासरेण । अशुद्धस्य शुना स्पृष्टस्य अन्नस्य महत्वे[3] शुद्धिः स्पृष्टांश-त्यागेनेति भावः । अन्नादेः अल्पस्य शुना स्पृष्टस्य अशुद्धिः । गुणवत्वं द्वेधा इत्याह-

---

[1] इदमस्य श्लोकस्य सुधीन्द्रतीर्थीयं व्याख्यानम् - 'देशं निरूप्य कर्मयोग्यं कालमाह- कर्मण्य इति । कर्मण्यः सत्कर्मयोग्यः । स क इत्यत आह गुणवानिति । गुणवान् आवृत्तिमान् प्रशस्तो वा । स च प्रशस्तः कालो द्विविधः द्रव्यतः स्वतश्चेति । एवशब्देन तृतीयो नास्तीति वाशब्देन द्वावपि योग्याविति वक्ति । द्रव्यतः वसन्तादिऋतुप्राप्तद्रव्ययोगेन गुणवान् प्रशस्तः । स्वतः कर्मण्यः सन्ध्यादिलक्षणः । अप्रशस्तं कालमाह यत इति । यतः कालात् कर्म निवर्तते । यस्मिन् काले कर्म न कर्तव्यमिति श्रुत्यादिकं दृष्ट्वा कर्मनिषिद्धोऽयं काल इति मत्वा कर्म ना करोतीत्यधिकारी स काल इत्यर्थः । स अकर्मकः कर्मायोग्यः कालः सदोषः दोषसहितः, अप्रशस्त इत्यर्थः ' इति । [2] अयं सम्भावितः पाठः । 'मखादिसोमपक्षानन्तरम्' इति प्रामादिकः पाठः मूलपुस्तके । [3] अत्र 'सहस्रसङ्ख्याकत्वात्' इत्यधिकं मूलपुस्तके । सम्पातायातमिति भाति ।

**शक्त्या** इति द्रव्यशक्त्या प्रायश्चित्तादिपुरस्सरं शुद्धिः । तीर्थयात्राशक्त्या वा तीर्थाटनात् शुद्धिः । **बुद्ध्या** पश्चात्तापेन वा देहादेः शुद्धिः । **आत्मनः** मनसः **समृद्ध्या** विषयेषु अलं बुद्ध्या शुद्धिः । विषयारागाद् अशुद्धिः इति भावः । **समृद्ध्या** सर्वसंपत्समृद्ध्या हिरण्यादिदानैः शुद्धिः इति भावः । **अन्ये** क्रियाविशेषाः शूद्रोदकस्नानादिः पक्वक्रमुक-पक्वधानादि(भक्षणादिकं) देशभेदेन शुद्ध्यन्ति[1] ॥ ११ ॥

वार्धक्याद्यवस्थाभेदेन च द्रव्याणि तत् शुद्धिकारणानि च विभज्याह- **धान्य** इति ।

**धान्यदार्वस्थितन्तूनां रसतैजसचर्मणाम् ।**
**कालवाय्वग्निमृत्तोयैः पार्थिवानां युतायुतैः ॥ १२ ॥**

धान्यादीनां कालवायुभ्यां मिलिताभ्यां शुद्धिः । दारुपात्राणां अस्थीनां गजदन्तानां शङ्खानां वा युतैः मिलितैः मृज्जलैः शुद्धिः । तन्तूनां **अयुतैः** मेलनरहितैः तोयैः शुद्धिः । चर्मणाम् अयुतैः तैलैः मृत्तोयैर्वा शुद्धिः । रसानां घृतादीनां कांस्यादीनां च अयुतेन एकेन अग्निना ॥ १२ ॥

धर्माचरणार्थं देहशुद्धिकारणमाह- **अमेध्यलिप्तमिति** ।

**अमेध्यलिप्तं यद् येन गन्धलेपं व्यपोहति ।**
**भजते प्रकृतिं तस्य तच्छौचमुपदिश्यते ॥ १३ ॥**

**येन** युतेन मिलितेन मृत्तोयेन कायलिप्तं सत् **गन्धलेपं** दुर्गन्धसम्बन्धं **व्यपोहति** त्यजति । स्वस्य **प्रकृतिं** शुद्धत्वं च भजते । **यत्** गुदादि तस्य शुद्धिकारणं शौचमिति उपदिश्यते ॥ १३ ॥

---

[1] 'शूद्रोदकचर्मोदकस्नानादिक्रिया विन्ध्यस्योत्तरदेश अशुद्ध्यापादका न भवन्ति । तथा दाक्षिणात्यानां पुरातनभक्षणम्' इति सुधीन्द्रतीर्थीयम् ।

श्रौतस्मार्तधर्माचरणे अन्यानि शुद्धिकारणान्याह- **स्नानं दानं** इति ।

**स्नानदानतपोवस्थावीर्यसंस्कारकर्मभिः ।**
**मदभ्यासान्मनःशौचं कृत्वा कर्माचरेद् बुधः ॥ १४ ॥**

यथाशक्ति नित्यदानं **तपः** स्वात्मात्मीयानां स्वतन्त्राधीनत्वानुसन्धानं, तपः अन्नादि नियमो वा । **अवस्था** जनसङ्गं विना स्थितिः । **वीर्यं** जामितादिपरिहारे शक्तिः, वीर्यं विषयसङ्गात् मनोनिग्रहशक्तिर्वा, **संस्कारः** ऊर्ध्वपुण्ड्रधारणम्[1] आचमन-प्राणायामौ कर्म । एभिः प्राप्तात् **मदभ्यासात्** ध्यानात् मनसः **शौचं** शुद्धिं कृत्वा कर्म आचारेत् ॥ १४ ॥

**मन्त्रस्य च परिज्ञानं कर्मशुद्धिर्मदर्पणम् ।**
**धर्मः सम्पाद्यते सद्भिरधर्मस्तु विपर्ययैः ॥ १५ ॥**

**मन्त्रस्य** कर्माङ्गमन्त्रस्य प्रथमं[2] **परिज्ञानं** ऋषिदेवतादिपरिज्ञानं कर्तव्यम् । कर्मणां= पशुसोमादिकर्मणां शुद्धिः मदर्पणात् भवति । उक्तं च 'अशुद्धमिति चेन्न शब्दात्' (ब्र.सू.३-१-२७) इति । **सद्भिः** भक्तैः कृतः हिंसारूपोऽपि **धर्मः सम्पद्यते ।** **विपर्ययैः** असद्भिः कृतः विधिप्राप्तोऽपि **अधर्मः सम्पद्यत** ॥ १५ ॥

एकत्रापि द्रव्यादौ गुणदोषव्यवस्था देशकालवर्णाश्रमादिव्यवस्था वा ईश्वर-सान्निध्यविशेषभावाभावाभ्यां ज्ञातव्येत्याह- **क्वचिद्गुणोपीति ।**

**क्वचिद् गुणोपि दोषः स्याद् दोषोऽपि विधिना गुणः ।**
**गुणदोषार्थनियमस्तद्भिदामेव बाधते ॥ १६ ॥**

---

[1] अयं सुधीन्द्रतीर्थीयानुसारी सम्भावितः पाठः । मूलपुस्तके तु 'संस्कारः कर्म प्रायश्चित्तं' इति पठ्यते । [2] अत्र 'मन्त्रस्य वा' इत्यधिकं पठ्यते मूलपुस्तके । सम्पातायातं स्यात् ।

**गुणोऽपि** गुणत्वेन सम्मतोऽपि इत्यर्थः । अविधिना आश्रमाद्यनुसारिविधिं विना दोषो भवति । 'परधर्मो भयावहः' इति भावः । दोषोऽपि दोषत्वेन सम्मतोऽपि विधिना गुणः । एवं गुणदोषयोः अर्थेषु द्रव्येषु च नियमः **तद्विदां** आश्रमादिव्यवस्थया परमात्मसान्निध्यविशेषभावाभावविदां भवति । तद्वित्त्वं[1] तु गुणमपि बाधते । अतः 'मूर्खाणां गुणः अदोषः' इति नेत्यर्थः । अथवा गुणादिनियमः तद्विदां मनुष्याणाम् । कर्मणि षष्टी । मनुष्यान् बाधते । ज्ञानायोग्यान् पशून् न बाधत इत्यर्थः । अतः कर्मादिस्वरूपविशेषाज्ञानं निषिद्धकरणादपि महान् दोष इति भावः ॥ १६ ॥

एतदेव उदाहरणेन सन्दर्शयति- **समानेति ।**

**समानकर्माचरणेऽपतितानां न पातकम् ।**
**औत्पत्तिको गुणैः सङ्गो न शयानः पतत्यधः ॥ १७ ॥**

समानकर्माचरण इत्यस्यावृत्तिः समानं स्ववर्णाश्रमोचितं कर्म तस्य आचरणे सति पूर्वम् अपतितानां प्रमादेन प्राप्तं पातकं न भवति । कुत ? इत्यत आह- **समान कर्माचरण** इति । समानस्य तत्पापनिवर्तने समर्थस्य, कर्मणः प्रबलप्रायश्चित्तस्य आचरणे सति पातकं न भवतीत्यर्थः । ब्राह्मणादिषु एवं श्रवणादिति भावः । ब्राह्मणादितरेण ब्राह्मणापेक्षया च निषिद्धकरणेऽपि न दोष इति एकस्यैव दोषत्वादोषत्वे दर्शयति- **औत्पत्तिकः** वर्णादिप्राप्तः लशुनभक्षणादिभिः **गुणैः सङ्गः ।** अतः शयानः अवैष्णवशूद्रः न पतति । लशुनभक्षणेन पापवान् न भवति इत्यर्थः । तस्मात् श्रीहरीच्छयैव गुणदोषव्यवस्थेति भावः ॥ १७ ॥

---

[1] 'तदवित्त्वं तु' इति पाठः सम्भाव्यते ।

सर्वतोऽप्यभिमानविमोकेन परमात्मेश्वरसमर्चनमेव दोषहानिदमित्याह- **यतो यत** इत्यादिना ।

**यतोयतो निवर्तेत विमुच्येत ततस्ततः ।**
**एष धर्मो नृणां क्षेमः शोकमोहभयापहः ॥ १८ ॥**

**यतः** यस्मिन् कर्मणि **निवर्तेत** 'अहमेव कर्ता' इत्यभिमानात् निवर्तेत । **ततः** कर्मणः **विमुच्येत ।** तत्तत्प्राप्तरागद्वेषादिभिः विमुच्येत । भगवति **एषः** अहङ्कारादित्यागः **नृणां** चेतनानां परमधर्मः । **क्षेमः** सौख्यसन्ततिकरः । अनिष्टनिवर्तकश्चेत्याह- **शोक-मोहेति ।** दुष्कर्मनिवर्तकेश्वरापरोक्षपुरस्सरं आत्यन्तिकक्षेमसम्पादकश्चेति भावः ॥ १८ ॥

अहंकारपरित्यागेण नित्यसौख्यं भवतीत्युक्त्वा तदपरित्यागप्राप्तरागद्वेषादिमहा-दुःखं भवतीत्याह- **विषयेष्विति ।**

**विषयेषु गुणध्यानात् पुंसः सङ्गस्ततो भवेत् ।**
**सङ्गादेव भवेत् कामः कामादेव कलिर्नृणाम् ॥ १९ ॥**

**गुणध्यानात्** सुखसाधनत्वानुसन्धानात्, **ततः** अहङ्कारादितः । **सङ्गः** विषयसुखा-सक्तिः । **कामः** विषयसंग्रहेच्छा । **कलिः** विषयविघटनादिना ॥ १९ ॥

**कलेर्दुर्विषहः क्रोधस्तमस्तदनुवर्तते ।**
**तमसा ग्रस्यते पुंसश्चेतना व्यापिनी ततः ॥ २० ॥**

**कलेः** संपर्कात् मर्मप्रहतवचनेभ्यः **दुर्विषहः** तूष्णीमवस्थानविघटक इत्यर्थः । **तदनु** सत्सु विषये क्रोधमनु **तमः** पञ्चपर्वाविद्याभागः **अनुवर्तते** अभिवृद्धं भवति ।

**तमसा चेतना** सुखानुभवशक्तिः **व्यापिनी** ज्ञानवत् व्याप्तिसंपन्नाऽपि **ग्रस्यते** प्रतिबध्यते । मणिना वह्निदाहकशक्तिवत् ॥ २० ॥

**तया च रहितः साधो जन्तुः शून्याय कल्पते ।**
**ततोऽस्य स्वार्थविभ्रंशो मूर्च्छितस्य मृतस्य च ॥ २१ ॥**

**हे साधो !** कल्याणगुण उद्धव ! **तया** सुखानुभवशक्त्या रहितः **जन्तुः** चेतनः **शून्याय** अनुभूयमानसुखराहित्याय **कल्प्यते** । सुखराहित्येन क्लृप्तो भवति इत्यर्थः । **ततः** चेतनाराहित्येन **अस्य** संसारिणः स्वार्थस्य= हरिध्यानादेः **विभ्रंशश्च** यदा ततः सुखानुभवशक्तिः प्राचुर्येण नश्यति । सदा **मूर्छितस्य** दुःखमग्नस्येत्यर्थः, मृतस्यापि तथैव । तस्मात् विवेकवता विषयविरागः महान् सम्पादनीय इति भावः ॥ २१ ॥

अन्येषां तु विषयासक्त्या महापातकसंपादनपुरस्सरं दुःखसन्ततिरनिवर्त्या भवतीत्याह- **विषयाभिनिवेशेनेति ।**

**विषयाभिनिवेशेन नात्मानं वेद नापरम् ।**
**वृक्षजीविकया जीवन् व्यर्थं ग्रस्तवयाः श्वसन् ॥ २२ ॥**

दुःखाख्यविषयावेशेन वृक्षजीविकयेव जीवन् तमसा **आत्मानम्** अन्तर्यामितया कदाऽपि **न वेद । अपरं** तद्भक्तान् न वेद । **व्यर्थं** ज्ञानादिसम्पादनं विना **ग्रस्तवयाः** दुःखग्रस्तायुः **श्वसन्** दुःखानुभवेन श्वासं विसृजन् वर्तते, भस्त्रेव कारुकस्य चर्मद्दतिवत् २२ ॥

ननु यदि विषयरागेण महान् दोषः तदा स्वर्गादिविषयोक्तिः कथम्? इति पुनः जिज्ञासायामाह- **फलश्रुतिरियमिति ।**

**फलश्रुतिरियं नृणां नः श्रेयोरोचनं परम् ।**

**श्रोतुर्विवक्षया प्रोक्तं यथा भैषज्यरोचनम् ॥ २३ ॥**

**नः** अस्मत् सकाशात् यच्छ्रेयो मोक्षाख्यं तदेव रोचयति । निश्रेयसं प्रति **रोचनं** प्रीतिजनिका । अन्तराळगतोऽपि स्वर्गः एवं विधः । किमु साक्षात् फलरूपो मोक्ष इति रोचकः वेदः ज्ञानसम्पादने जामितापरिहारार्थः इति भावः । ननु भक्तानां वेदादौ किमर्थमनाकाङ्क्षितनिश्रेयसाभिधानं इति जिज्ञासायामाह- **श्रोतुः** ईषदुत्तमस्य श्रवणादौ प्रवृत्तस्य मनुष्याधिकारिणः **विवक्षया** । तस्य विहितं कर्म कर्तव्यमिति रोचयितुं बालस्येव तस्य स्वर्गादिफलं दर्शनीयं इत्याह- **यथेति** । भैषज्ये= औषधदानकर्मणि रोचनं= औषधग्रहणे रुच्युत्पादकं इक्षुदण्डादिप्रदर्शनं यथा तथा स्वर्गादिफलोक्तिः ॥ २३ ॥

साधून् प्रति स्वर्गादिप्रवचनं न प्रवृत्तमित्याशयेनाह- **उत्पत्त्यैव हीति** ।

**उत्पत्त्यैव हि कामेषु प्राणेषु स्वजनेषु च ।**

**आसक्तमनसो मर्त्या आत्मनोऽनर्थहेतुषु ॥ २४ ॥**

**न तानविदुषः स्वार्थं भ्राम्यतो व्रजिनाध्वनि ।**

**कथं युञ्ज्यात् पुनस्तेषु यांस्तमो विशते बुधः ॥ २५ ॥**

**उत्पत्त्यैव** स्थूलदेहोत्पत्त्यैव **व्रजिनाध्वनि** पापमार्गे **भ्राम्यतः तान्** मनुष्योत्तमान् **अनर्थहेतुषु** स्वर्गादिविषयेषु **न युञ्ज्यात्** न प्रेरयेत् । **बुधः** विवेकी वेदः **यान्** स्वर्गादिकामान् भुञ्जन् **तमः विशते** श्रीहरिस्मरणरहितो भवति तेषु कामेषु त्वां सुजनं कथं युञ्ज्यात्? स्वप्रयोजनं परप्रयोजनं वा नास्तीति भावः ॥ २५ ॥

तामसानां वेदार्थनिश्चयमाह- **एवं व्यवसितमिति ।**

**एवं व्यवसितं केचिदविज्ञाय कुबुद्धयः ।**
**फलश्रुतिं कुसुमितामवेदज्ञा वदन्ति हि ॥ २६ ॥**

**कुबुद्धयः** कुत्सितस्वरूपज्ञानाः । **एवं व्यवसितं** स्वर्गशब्दस्य परमसुखमर्थः । न तु वैषयिकसुखे तात्पर्यमिति ज्ञानिनां निश्चयम् । **अविज्ञाय फलश्रुतिं** मोक्षविषयां श्रुतिम् । **कुसुमितां** अल्पत्वात् कुसुमसदृशं यत् स्वर्गादिफलं तद्विषयाम् । **अवेदज्ञाः** वेदार्थज्ञानरहिताः सन्तः वदन्ति ॥ २६ ॥

असुरादीनां सम्यग्ज्ञानप्रतिबन्धकस्वभावदोषमाह- **कामिन** इति ।

**कामिनः कृपणा लुब्धाः पुष्पेषु फलबुद्धयः ।**
**अग्निमुग्धा धूमतान्ताः स्वं लोकं न विदन्ति ते ॥ २७ ॥**

**कामिनः** विषयकामुकाः । **कृपणाः** विषयप्राप्तदैन्योपेताः । **पुष्पेषु** अनित्याल्पफलेषु । **फलबुद्धयः** महाफलबुद्धयः । अग्नौ= अग्निविषये मुग्धाः= अन्यथाज्ञानिनः अग्निः एव पूज्यः यागफलदातेति भ्रान्ता इत्यर्थः । देवतापलापिन इति भावः । **धूमतान्ताः** धूमेन म्लानाः । अजस्रं यागाचरणात् वृथा क्लेशोपेता इति भावः । **स्वं लोकं** मम स्थानं सकलनित्याभीष्टसंपन्नं **न विदन्ति** इति भावः ॥ २७ ॥

विष्णुरस्तीति केषाञ्चिदसुराणां ज्ञानोद्भवेऽपि मम माहात्म्यज्ञानं नास्तीत्याह- **न ते मामिति ।**

**न ते मामङ्ग जानन्ति हृदिस्थं य इदं यतः ।**
**उक्थशासो ह्यसुतृपो यथा नीहारचक्षुषः ॥ २८ ॥**

असुभिः= प्राणैः इन्द्रियैर्वा तृपः **असुतृपः ।** इन्द्रियसुखेनैव अलंबुद्ध्युपेता इत्यर्थः । अत एव **नीहारचक्षुषः ।** नीहारः हिमावरणमित्यर्थः स चक्षुषि येषां ते । यथा पर्वतादि न जानन्ति तथा **यः** गुणपूर्णः जगतः स्वरूपसत्तादिप्रदः । इदं जगत् **यतः** सृष्टं, संरक्षणादिकर्तारं तं तथाविधं **हृदिस्थं मां न जानन्ति । उक्थाशासः** उक्थेन= प्राणेन शासनं दुःखं येषां ते तथाविधा भवन्ति ॥ २८ ॥

ननु तामसत्वेऽपि विधिप्राप्तकर्मकर्तृत्वात् किमर्थं निन्दा ? इति जिज्ञासायामाह- **ते मे मतमिति ।**

**ते मे मतमविज्ञाय परोक्षविषयात्मकाः ।**
**हिंसायां यदि कामः स्याद् यज्ञ एव न चोदना ॥ २९ ॥**

**परोक्षविषयात्मकाः** परोक्षम् अन्धन्तमः इत्यर्थः, तस्य विषयः आत्मा स्वरूपं येषां ते । अन्धन्तमोयोग्या इत्यर्थः । **ते** तामसाः **मे मतं** मम निश्चितं 'निवृत्तकर्मणा ज्ञानपुरस्सरं निःश्रेयसं भवति' इति वेदार्थमविज्ञाय ये वर्तन्ते तेषाम् असुराणां यदा **हिंसायां कामः** तदा **यज्ञ एव** स्वेच्छया यज्ञे प्रवृत्तिरित्यर्थः । तेषां **न चोदना ।** विधिवचनस्य स्वेच्छया अर्थं परिकल्प्य प्रवर्तन्त इत्यर्थः ॥ २९ ॥

**हिंसाविहारा ह्यालब्धैः पशुभिः स्वसुखेच्छया ।**
**यजन्ते देवता यज्ञैः पितॄन् भूतपतीन् खलाः ॥ ३० ॥**

**स्वप्नोपममम्ं लोकमसन्तं श्रवणप्रियम् ।**
**आशिषो हृदि सङ्कल्प्य त्यजन्त्यर्थान् यथा वणिक् ॥ ३१ ॥**

ननु यज्ञे विष्णोरपि इज्यत्वात् कुतो निन्दा? इत्यत आह- **यजन्त** इति । **आशिषः** विविधभोग्यान् ॥ ३१ ॥

तामसानां प्रभेदमाह- **रजस्सत्वतमोनिष्ठा** इति ।

**रजःसत्वतमोनिष्ठा रजःसत्वतमोजुषः ।**
**उपासते इन्द्रमुख्यान् देवादीनयथैव माम् ॥ ३२ ॥**

ईषत्सात्विकतामसाः राजसतामसाः तामसतामसाः इति । तत्र ईषत्सात्विकतामसाः स्वर्गाभासप्राप्तियोग्याः । केवलं निरययोग्याः राजसतामसाः इत्यादि । ते सात्विका न भवन्ति इति ज्ञापनाय- **निष्ठा** इति । **निष्ठा** व्यवस्था । तेषां स्वरूपं तथा व्यवस्थितमित्यर्थः । **रजःसत्वतमो जुषः** राजसादिविषयान् भुञ्जते । यदि ते रजस्सत्त्वतमोनिष्ठाः मदुपासनं कुर्युः तदा **अयथैव** स्वभावमतिक्रम्य रुद्रादिसाम्येन **माम् उपासते** । अतस्तेषाम् अधःपात इति भावः ॥ ३२ ॥

आशिषो हृदि सङ्कल्प्येत्येतद्विवृणोति- **इष्ट्वेह देवता** इति ।

**इष्ट्वेह देवता यज्ञैर्गत्वा रंस्यामहे दिवि ।**
**तस्यान्त इह भूयास्म महाशाला महाकुलाः ॥ ३३ ॥**

तस्य= स्वर्गविषयाणां **अन्ते** अनुभवान्ते **इह** भुवि **महाकुलाः महाशालाः** महत्यः शालाः येषां ते महाशालाः= यज्वान **भूयास्म** इत्यर्थः ॥ ३३ ॥

**एवं पुष्पितया वाचा विक्षिप्तमनसां[1] नृणाम् ।**
**मानिनां चातिस्तब्धानां मद्वार्ताऽपि न रोचते ॥ ३४ ॥**

---

[1] 'व्यक्षिप्तमनसां' इति पाठान्तरम् ।

**पुष्पितया** अल्पस्वर्गादिविषयिण्या **वाचा** वेदवचोज्ञानात् **विक्षिप्तमनसां** ज्ञान-रहितमनसां इत्यर्थः । **विक्षिप्तमनसां** विषयासक्तमनसां इति वा । **मानिनाम्** अहङ्कारिणां **स्तब्धानां** सज्जनेषु अनम्राणां **मद्वार्ताऽपि** विष्णूत्कर्षवचनं **न रोचते** । भक्तिस्तु दूरे वर्तत इति भावः ॥ ३४ ॥

नित्यसंसार्यपेक्षया स्वर्गादिफलप्रापककर्मप्रतिपादका वेदा मोक्षयोग्यान् प्रति उत्तमाधिकारिणः प्रति वा किमर्थं न प्रतिपादयन्ति इति पुनर्जिज्ञासायामाह- **वेदा** इति ।

**वेदा ब्रह्मात्मविषयास्त्रिकाण्डविषया अपि ।**
**परोक्षवादो वेदोऽयं परोक्षं मम च प्रियम् ॥ ३५ ॥**

काण्डः भागः । त्रिकाण्डविषयाः ब्रह्म देवताकर्मलक्षणार्थत्रयप्रतिपादका अपि वेदाः । ब्रह्मात्मा= स्वत एव पूर्णो वासुदेवः तद्विषयाः । सर्वाणि वेदपदानि स्तुतिरूपेण श्रीनारायणं प्रतिपादयन्ति, सर्वे वेदाः महातात्पर्येण श्रीनारायणं प्रतिपादयन्ति इति वा । तर्हि वेदाः, स्पष्टं स्वार्थं प्रतिपादयन्तः संशयं कुतो न निवर्तयन्ति ? इत्यत आह- **परोक्षेति** । **अयं** अधिकारिभेदेन अर्थज्ञानजनकः वेदः । यतः **परोक्षं** अर्थे स्पष्टताराहित्यं राजसादीन् प्रति इति भावः । **मम प्रियं** अतः परोक्षवादः । परोक्ष अस्पष्ट इत्यर्थः । मां स्पष्टं न प्रतिपादयति ॥ ३५ ॥

ननु तव गुणानां आनन्त्यात् कथम् ऋगादिभेदेन चतुर्विधो वेदः ब्रह्मात्मप्रति-पादकः ? इति जिज्ञासायामाह- **शब्दब्रह्मेति** ।

**शब्दब्रह्म सुदुर्बोधं प्राणेन्द्रियमनोमयम् ।**
**अनन्तपारं गम्भीरं दुर्विगाह्यं समुद्रवत् ॥ ३६ ॥**

**शब्दब्रह्म** पदवर्णस्वराद्यात्मको वेदः । **अनन्तपारं** अन्तो विनाशः पारः परिमितिः । न विद्येते अन्तपारौ यस्य तत् । **सुदुर्बोधम्** उपदेशं विना ज्ञातुमशक्यमित्यर्थः । एतादृशवेदज्ञः कः इति जिज्ञासायामाह- **प्राणेन्द्रियेति** । प्राणादिदेवैः मीयते ज्ञायते इति प्राणेन्द्रियमनोमयम् । **गम्भीरं** अस्पष्टतात्पर्यम् । **दुर्विगाह्यं** समुद्रवदपारत्वादेव विरिञ्चेतरैः दुर्विगाह्यम् ॥ ३६ ॥

**मयोपबृंहितं भूम्ना ब्रह्मणाऽनन्तशक्तिना ।**
**भूतेषु घोषरूपेण बिसेषूर्णेव लक्ष्यते ॥ ३७ ॥**

**भूम्ना** ब्रह्मणा अतिमहापरिपूर्णेन, अत एव **अनन्तशक्तिना** अप्रतिबद्धसामर्थ्येन **मया उपबृंहितं** व्याप्तम् । पदादिशक्तिप्रेरकमूर्तिभिरिति भावः । प्रतिपाद्यमूर्तिभिर्व्याप्तम् । वेदे निरर्थकः शब्दो नास्तीति भावः । स वेदः सदा कुतो न श्रूयते ? इति जिज्ञासायामाह- **बिसेष्विति** । **बिसेषु** कमलनाळेषु **ऊर्णेव** तन्तुरिव तिरोहित इत्यर्थः । एतादृशवेदश्रवणं केनोपायेन ? इति जिज्ञासायामाह- **भूतेष्विति** । **भूतेषु** अध्यापकेषु **घोषरूपेण** ध्वन्यात्मकशब्दप्रभेदेन लक्ष्यते ॥ ३७ ॥

अविद्यावश्यानां शक्त्यभावात् कस्य घोषेण व्यज्यते ? इति जिज्ञासायामाह- **यथेति**

**यथोर्णनाभिर्हृदयादूर्णामुद्वमते मुखात् ।**
**आकाशाद् घोषवान् प्राणो मनसाऽऽस्पर्शरूपिणा ॥ ३८ ॥**

हृदयात्, विश्लिष्टां पूर्वं हृदये तिरोहितामिति भावः । ऊर्णां मुखात् उद्वमते व्यक्तं करोति इत्यर्थः । तथा **प्राणः** महाबलः **आकाशात्** हृदयाकाशात् **घोषवान्** व्यञ्जकविविधध्वनिसम्पन्नः । **आस्पर्शरूपिणा,** आ समन्तात् स्पर्शा भोगा अस्यैवे-

त्यास्पर्शः विष्णुः । तं रूपयति प्रकाशयतीति आस्पर्शरूपि प्राणस्य मनः । तेन मनसा ॥ ३८ ॥

प्राणस्य वेदव्यञ्जकत्वे निमित्तमाह- **छन्दोमय** इति ।

**छन्दोमयोऽमृतमयः सहस्रपदवीं प्रभुः ।**
**ओङ्कारे व्यञ्जितां[1] स्पर्शस्वरोष्मान्तस्थभूषिताम् ॥ ३९ ॥**

मीयन्ते ज्ञायन्ते छन्दांसि अनेनेति प्राणः **छन्दोमयः** । तस्य प्रथमं वेदद्रष्टृत्वादिति भावः । प्राणस्य वेदव्यञ्जकत्वे निमित्तान्तरमाह- **अमृतमय इति** । अमृतं निःश्रेयसं, तदुपायेषु प्रधान इत्यर्थः । उपदेशादिना वायोर्मोक्षदातृत्वादिति भावः । एतादृशः प्राणः प्रभुः ज्ञानाच्छादकासुरनिरसनसमर्थः सन् बृहतीं श्रुतिं सृजति । श्रुतिगुणविशेषानाह- **सहस्रपदवीमिति** । सहस्राणि अनन्तानि पद्यन्त इति पदानि रूपाणि अनया प्रतिपाद्यानि सन्तीति अनन्तपदवतीम् । अथवा सहस्राणां रूपविशेषाणां पदवीं प्रतिपादकत्वेन आश्रयभूताम् । ओङ्कारसन्निधावित्यर्थः । ओङ्कारोच्चारणं विना वेदोच्चारणं नास्तीति भावः । **व्यञ्जितां** व्यक्ताम् । **स्पर्शाः** कादयो मावसाना वर्णाः, **स्वरा** अचः । **ऊष्माणः** शषसहाः । **अन्तस्थाः** यरलवाः । एभिर्वर्णैः **भूषितां** यथोचितं सम्पन्नाम् ॥ ३९ ॥

**विचित्रभाषाविततां छन्दोभिश्चतुरुत्तरैः ।**
**अनन्तपारां बृहतीं सृजत्याक्षिपते स्वयम् ॥ ४० ॥**

**विचित्रभाषाभिः** समाधिभाषा-गुह्यभाषा-दर्शनभाषादिभिः भाषाभिः **विततां** युक्ताम् । **चतुरुत्तरैः** गायत्रीछन्दोऽपेक्षया चतुर्वर्णाधिकोष्णिगादिच्छन्दोभिः सहिताम् । जगत्यन्ता-

---

[1] 'ओङ्कारेष्वञ्चितां' इति पाठान्तरम् ।

नामेव चतुरुत्तरत्वनियम इति भावः । एतादृशीम् उच्चारणेन अभिव्यज्य **आक्षिपते** च तिरोहितं करोति ॥ ४० ॥

छन्दसां सञ्ज्ञां दर्शयति- **गायत्रीति** ।

**गायत्र्युष्णिगनुष्टुप् च बृहती पङ्क्तिरेव च ।**
**त्रिष्टुप् जगत्यतिच्छन्दो ह्यष्ट्यत्यष्टी जगद् विराट् ॥ ४१ ॥**

वेदस्य सुदुर्बोधितत्वं दुर्विगाह्यत्वं अर्थतोऽपीत्याह- **किं विधत्त** इति ।

**किं विधत्ते किमाचष्टे किमनूद्य विकल्पयेत् ।**
**इत्यस्या हृदयं लोके नान्यो मद् वेद कश्चन ॥ ४२ ॥**

किं वा विविधत्वेन कल्पयेत् प्रतिपादयेत् । **लोके** ज्ञानाधिकारिसमुदायमध्ये । मत्तः अन्यः **कश्चन** कोऽपि स्वत एव एवंविधान् विधानाभिधानादीन् **हृदयं** तात्पर्यं **च न वेद** ॥ ४२ ॥

एवं सति वेदज्ञानप्राप्तिः कथमित्यत आह- **मां विधत्त** इति ।

**मां विधत्तेऽभिधत्ते मां विकल्प्योऽपोह्य इत्यहम् ॥ ४३ ॥**

'स्वाध्यायोऽध्येतव्यः' इत्यादिविधिः मां विधत्ते । माम् उद्दिश्य अध्ययनमिष्टमिति प्रतिपादयति । इष्टे धर्मे प्रवर्त्यमिति भावः । इष्टसाधनत्वात् मुख्येष्टत्वात् वा अहमपीष्ट इत्यर्थः । 'सत्यं ज्ञानं' इत्यादिपदजातं मुक्तामुक्तनियामकत्वादिगुणसम्पन्नं **मां अभिधत्ते** महायोगेन प्रतिपादयति । **विकल्पः** वागिति अनुवादेन चत्वारीति विकल्पः । विविधत्वेन वासुदेवसङ्कर्षणादिरूपविशेषैः कल्पः वेदे समर्थनीयः प्रतिपादनीय इत्यार्थः । **अपोह्यः** न सुरां पिबेदित्यादिनिषेधवाक्येन असुराणां अनिष्टत्वेन

प्रतिपाद्यः । सुराणाम् ऐष्वर्यादिगुणानां पानं तेषां स्वस्मिन् आरोपः सुरापानं तन्न कुर्यात् कदाचन । वेदस्य एवमाद्यर्थम् अहं वेद ॥ ४३ ॥

वेदार्थः संग्रहेण वक्ष्यते इत्याह- **एतावान्** । अथ वा शब्दस्य परार्थत्वात् वेदस्य किं प्रयोजनम् ? इति जिज्ञासायामाह- **शब्द** इति ।

**एतावान् सर्ववेदार्थः शब्द आस्थाय माऽभिदाम् ।**
**मायामात्रमनूद्यान्ते प्रतिषिध्य प्रशाम्यति ॥ ४४ ॥**

**॥ इति श्रीमद्भागवते एकादशस्कन्धे एकविंशोऽध्यायः ॥**

**शब्दः** वेदः अभिदं= सर्वावतारेषु न्यूनातिरिक्तलक्षण वैलक्षण्यरहितं अं सर्वगुण-शक्तिभिः पूर्णं, अभिदश्चासावश्च तम् **अभिदां** माम् **आस्थाय** निर्दोषं पूर्णगुणं मां प्रतिपादयन् इत्यर्थः । **मायामात्रं** मदिच्छानिर्मितं पालितं च शरीरादिकम् । **अनूद्य** विकर्मणा दुःखकारणमिति बहुधा वर्णयित्वा, कल्याणगुणोपासनादिकं विधाय, **अन्ते** अपरोक्षतः कर्मपरिहारार्थं **प्रतिषिध्य** मुक्तिर्भवति इत्युक्त्वा । **प्रशाम्यति** विधिनिषेध-वचनव्यापारं परित्यज्य परमात्मस्तुतिमात्रव्यापारेण वर्तत इत्यर्थः । 'गुणपूर्णोपास्त्या निःश्रेयसं भवति' इत्येतावान् सर्ववेदार्थः । अथवा **सर्ववेदार्थः एतावान्** विष्णोः सर्वोत्तमत्त्वम् अन्यस्य तदुपजीवकत्वमित्येतावान् । अतः **अभिदाम् आस्थाय** अवलम्ब्य कोऽपि शब्दः नास्तीत्यर्थः ॥ ४४ ॥

॥ इति श्रीयादवेन्द्रयतिविरचिते एकादशस्कन्धव्याख्याने एकविंशोऽध्यायः ॥

# 22 | द्वाविंशोऽध्यायः

तत्त्वानां बहुविधसंख्यासु श्रीकृष्णाभिमतां संख्यां पृच्छति- **कानि** इति ।

**उद्धव उवाच-**

**कानि तत्वानि विश्वेश संख्यातान्यृषिभिः प्रभो ।**

**नवैकादश पञ्च त्रीण्यात्थ त्वमिह शुश्रुमः ॥ १ ॥**

तत्त्वानि किंसङ्ख्याकानि ज्ञातव्यानि ? बहुविधबहुसंख्यासु का वा सङ्ख्या आदरणीया इति भावः । स्वतन्त्रचेतनपरतन्त्रचेतनयोः बहिर्भावान्तर्भावविवक्षया सङ्ख्याभेदो ज्ञातव्यः ॥ १ ॥

**केचित् षड्विंशतिं प्राहुरपरे पञ्चविंशतिम् ।**

**सप्तैके नव षट् केचिच्चत्वार्येकादशापरे ।**

**केचित् सप्तदश प्राहुः षोडशैके त्रयोदश ॥ २ ॥**

**केचित् षड्विंशतिं प्राहुरिति** शुश्रुमः । गणनाविषयान् तत्त्वभेदांश्च उत्तरत्र वक्ष्यति ॥ २ ॥

**एतावत्त्वं हि सङ्ख्यानामृषयो यद्विवक्षया ।**

**गायन्ति पृथगायुष्मन्निदं नो वक्तुमर्हसि ॥ ३ ॥**

**यद्विवक्षया** कया विवक्षया **सङ्ख्यानाम् एतावत्त्वम्** उक्तम् इयत्तां **गायन्ति** उक्तसङ्ख्याप्रभेदान् **पृथक्** अधिकां सङ्ख्यां न वदन्ति इत्यर्थः । **इदं** तत्त्वं विविधसङ्ख्यास्वीकारे निमित्तं, अथवा इदं त्वदङ्गीकारविषयं मतं **वक्तुम् अर्हसि** ॥ ३ ॥

**श्रीभगवानुवाच-**

**युक्तयः सन्ति सर्वत्र भाषन्ते ब्राह्मणा यथा ।**

**मायां मदीयामुद्गृह्य वदतां किं नु दुर्घटम् ॥ ४ ॥**

**ब्राह्मणाः** ज्ञानिनः यथा यां यां तत्त्वसङ्ख्यां अवलम्ब्य भाषन्ते तत्र सर्वत्र युक्तयः सन्ति । पञ्चविंशत्यादिसङ्ख्याकानां तत्त्वानां कथं सप्तसङ्ख्यादिप्रभेदघटना इति जिज्ञासायाम् आह- **मदीयां मायां** विचित्रबहुविधकार्यानुकूलविचित्रसामर्थ्यानीत्यर्थः । **उद्गृह्य** अवलम्ब्य सामर्थ्यप्राप्तविविधविचित्रकार्याण्यवलम्ब्येत्यर्थः । तत्वभेदान् वदतां किं दुर्घटम् ? सर्वं सुशकमित्यर्थः ॥ ४ ॥

**नैतदेवं यदाऽऽत्थ त्वं यदहं वच्मि तत् तथा ।**

**एवं विवदतां हेतुः शक्तयो मे दुरत्ययाः ॥ ५ ॥**

**त्वं यदात्थ** 'इदं वक्तुमर्हसि'इति एतत्सङ्ख्यामतवैलक्षण्यं **एवं** मदङ्गीकारविषयं मतमेकं अपरं मतम् अनङ्गीकारविषयम् इति न । अहं **यद् वच्मि** विवक्षाभेदेन सर्वाणि मतानि युक्तानीति **तत्तथा** । तर्हि तत्त्वसंख्याविवादः कुतः ? इत्याशङ्क्य तत्र कारणमाह- **शक्तय** इति । **दुरत्ययाः** अप्रतिबद्धाः **मे शक्तयः** विविधकार्यानुकूलविचित्रशक्तयः विवादे मूलकारणम् ॥ ५ ॥

तत्त्वमुपपादयति- **यासां** इति ।

**यासां व्यतिकरादासीद् विकल्पो वदतां पदम् ।**
**प्राप्ते शमदमे व्येति वादस्तमनु शाम्यति ॥ ६ ॥**

**यासां** अपृथक्शक्तीनां सकाशात् जातात् **व्यतिकरात्** अव्यक्तादिकार्यात् तामसाहंकारात् **विकल्पः** मनोविकारः विविधभ्रम इत्यर्थः । ऋषीणां विवक्षाभेदान् अजानतामिति भावः । **पदं** विवादे निमित्तं आसीत् । भ्रमकारणमनसः कदा निरासः ? इति जिज्ञासायामाह- शमश्च दमश्च **शमदमे** तस्मिन् दमे विषयविरागे, शमे तत्प्राप्तपरमात्मध्याने च **प्राप्ते** सति **व्येति** मनसः तमोभागः नश्यति, भ्रमश्च नश्यति । **तमनु वादः** अविवेकिनां विवादः **शाम्यति** । विवक्षाभेदज्ञानादितिभावः ॥ ६ ॥

न्यूनसंख्याविवक्षायां निमित्तमाह- **परस्परानुप्रवेशादिति ।**

**परस्परानुप्रवेशात् तत्वानां पुरुषर्षभ ।**
**पौर्वापर्यप्रसंख्यानं यथा वक्तुर्विवक्षितम् ॥ ७ ॥**

**तत्त्वानां** साक्षात् तत्तत्प्रकृतिकार्याणां वा गुणमहदादीनां **परस्परं अनुप्रवेशात्** रजसि तमसोनुऽप्रवेशः, तमसि रजसोऽनुप्रवेशः, भूतानां च परस्परं अनुप्रवेशः । त्रिवृत्करणप्रक्रियया कारणानाम् उत्तरोत्तरं कार्यैश्च अभेदः, कारणतत्त्वेपि कार्यतत्त्वस्य अनुप्रवेश इति भावः । तस्मात् पौर्वापर्यं कारणनिष्ठं कार्यनिष्ठं प्रसङ्ख्यानमिति वा । पूर्वभावयुक्तम् अपरभावयुक्तं **प्रसंख्यानं** गणनम् । अधिकसङ्ख्यातः स्वल्पसंख्या पूर्वभावयुक्ता कार्यकारणाभेदविवक्षया प्राप्ता सप्तनवादिरूपा सङ्ख्या । अपरभावयुक्ता कार्यस्य कारणात् पृथग्भावविवक्षया प्राप्ता एकादशादिसङ्ख्या इति वा । एवं सङ्ख्याविभेदो वक्तुः ऋषेः **विवक्षितं** विवक्षा यथा तत्त्वनाम् अन्तर्भावविवक्षा बहिर्भावविवक्षा

वा यथा वर्तते तथा भवति । तत्त्वानां परस्परानुप्रवेशात् विवक्षाभेदश्च युज्यत इति भावः ॥ ७ ॥

तत्त्वानां परस्परानुप्रवेशे संशयो न कर्तव्य इत्याशयेनाह- **एकस्मिन्** इति ।

**एकस्मिन्नपि दृश्यन्ते प्रविष्टानीतराणि च ।**
**पूर्वस्मिन् वाऽपरस्मिन् वा तत्वे तत्वानि सर्वशः ॥ ८ ॥**

तत्त्वानि पूर्वस्मिन् कारणे वा परस्मिन् कार्ये वा इतराणि विलक्षणान्यपि प्रविष्टानि दृश्यन्ते ॥ ८ ॥

'नैतदेवं यदात्थ त्वं' इत्युक्तम् । तत्समर्थनाय सर्वेष्वपि मतेषु युक्तिसंभवात् सर्वाणि न्यूनाधिकसंख्यामतानि मम सम्मतानि इत्याह- **पौर्वापर्यमत** इति ।

**पौर्वापर्यमतोऽमीषां प्रसङ्ख्यानमपीच्छताम् ।**
**यथा विविक्तं यद् युक्तं गृह्णीमो युक्तिसम्भवात् ॥ ९ ॥**

**अमीषां** तत्त्वानाम् **अतः** परस्परानुप्रवेशात् निमित्तात् **यथा विविक्तं** यादृशं वैलक्षण्यं विवक्षितं तथा **पौर्वापर्यं** न्यूनमधिकं प्रसङ्ख्यानमिच्छातां पुरुषाणां मतेषु युक्तिसंभवात् **युक्तं यत्** तत् **गृह्णीमः** । अयुक्तं यत् निरीश्वरमतं तन्न गृह्णीम इति भावः ॥ ९ ॥

**अनाद्यविद्यायुक्तस्य पुरुषस्यात्मवेदनम् ।**
**स्वतो न सम्भवेद् यस्मात् तदन्यः पुरुषो भवेत् ॥ १० ॥**

ईश्वरराहित्येन तत्त्वसंख्यानं तामसानां रोचते । सात्विकानां तु ईश्वरापेक्षा सर्वदा वर्तत इत्याह- **तदन्यः पुरुषो भवेदिति** । स्वतन्त्रं अस्वतन्त्रं च द्विविधं

तत्त्वमिति भावः । एवं सति वेदेषु पुरुषेश्वरादिशब्दाः जीवातिरिक्तस्य बोधकाः इत्यत्र अन्यथानुपपत्तिं दर्शयति- **अविद्येति** । अनादिभूता या अविद्याप्रकृतिरूपा लिङ्गशरीरसंज्ञा तया युक्तस्य **पुरुषस्य** देहिनः आत्मनः वेदनं= स्वस्वभावस्य सुखादेः वेदनं ज्ञानं वा । **स्वतः** स्वशक्त्या **न संभवेत्** । प्रतिबद्धा दाहशक्तिः न हि काष्ठं दहतीति भावः । **यस्मात्** प्रतिबद्धज्ञानात् पुरुषात् अन्यः अप्रतिबद्धज्ञानाद्यैश्वर्यसंपन्नः **पुरुषः** देहे स्थितः जीवस्य ज्ञानदः **भवेत्** अपेक्षितः । स च पुरुषनामकोऽन्तर्यामीति भावः ॥ १० ॥

ननु देहसम्बन्धरहितस्य ईश्वरस्य ज्ञानदानशक्तिः भवतु । पुरुषस्य देहलक्षणाविद्यासंबन्धात् कथमप्रतिबद्धा शक्तिः इति जिज्ञासायामाह- **पुरुषेश्वरयोरिति** ।

**पुरुषेश्वरयोरत्र न वैलक्षण्यमण्वपि ।**
**तदन्यकल्पनाऽपार्था ज्ञानं च प्रकृतेर्गुणः ॥ ११ ॥**

**वैलक्षण्यं** प्रतिबद्दत्वाप्रतिबद्दत्वादि सामर्थ्यवैलक्षण्यं च **अण्वपि** ईषदपि **न** । परमात्मनि न्यूनाधिकज्ञानं अनिष्टसाधनमित्याह- **तदन्येति** । तयोर्देहस्थ बहिःस्थपुरुषेश्वरयोः **अन्यकल्पना** अन्यत्वकल्पना वैलक्षण्यकल्पना **अपार्था** सुखविरोधिनी दुःखकारणमिति । अतः सर्वावतारेषु गुणपूर्णः परमात्मा इति भावः । ननु ज्ञानदातृत्वं अन्तर्यामिणो वर्णितम् । तत्कथं ज्ञानस्वरूपे ज्ञानस्य अभूत्वाभावलक्षणोत्पत्तिः इत्यत आह- **ज्ञानं च** इति । ज्ञानं प्रकृतेः मनोरूपायाः गुणः कार्यरूपम् अज्ञाननिवर्तकं भवति । विष्णुसामर्थ्यात् उत्तेजकात् स्वरूपज्ञानस्यापि अभिव्यक्तिः भवतीति भावः ॥ ११ ॥

अन्यज्ञानस्य प्रकृतत्वं साधयति **गुणसाम्ये त्विति** ।

**प्रकृतेर्गुणसाम्ये तु प्रकृतेर्नात्मनो गुणाः ।**

**सत्वं रजस्तम इति स्थित्युत्पत्त्यन्तहेतवः ॥ १२ ॥**

स्थित्यादिहेतवः सत्वं इत्यादि संज्ञोपेताः **प्रकृतेः गुणाः न आत्मनः ।** जीव-विशिष्टसूक्ष्ममनसः उपचितत्वश्रवणात् कथं जीवविशिष्टमनोगुणा न भवन्ति ? इति जिज्ञासायामाह- **गुणसाम्येति ।** प्रकृतेः गुणस्य सत्वस्य साम्ये सति रजोगुणस्यानु-प्रवेशलक्षणगुणान्तरसाम्ये सति, प्रळये सति इत्यर्थः । रजोभागादिभिः जीवविशिष्ट-मनसः उपचयाभावात्, उपचितमनोजन्यं ज्ञानं सुतरां जीवस्य स्वभावगुणो न भवति । किन्तु प्राकृतमिति भावः ॥ १२ ॥

गुणवैषम्ये सति मनःप्रविष्टानां सत्वादीनां कार्याण्याह- **सत्त्वं ज्ञानमिति ।**

**सत्वं ज्ञानं रजः कर्म तमोऽज्ञानमिहोच्यते ।**

**गुणव्यतिकरः कालः स्वभावः सूत्रमेव च ॥ १३ ॥**

**इह** सृष्टौ **सत्त्वं ज्ञान** मित्युच्यते । कार्यकारणयोरभेदादिति भावः । **रजः** कर्मेत्युच्यते । **तमः अज्ञानं** अन्यथाज्ञानमित्युच्यते । अस्तु विज्ञानादितत्त्वं सत्त्वादि-गुणतः, प्रथमं स्वतो व्यापारसंपन्नं कारणं किमिति जिज्ञासायामाह- **काल** इति । **स्वभावः** स्वत एव भावः । स्वसामर्थ्येन सत्त्वप्रतीतिप्रवृत्त्यादिर्यस्य सः स्वतन्त्रः, ज्ञानादौ परानपेक्ष इत्यर्थः । गुणादीनां व्यतिकरः सृष्टिः येन स **कालः** साधूनाम् अभीष्टप्रदः, परमात्मा आदिकारणमित्यर्थः । स्वः परमात्मा तेनैव भावः सत्वादिः यस्याः सा महालक्ष्मीः अनन्तरकारणम् । **सूत्रं** वायुश्च अनन्तरकारणमिति भावः । अथवा सूत्रस्य वायोः प्रथमकारणत्वश्रवणात् कथं विष्णोः प्रथमकारणत्वमिति जिज्ञासायामाह- **सूत्रमिति ।** सूत्रशब्दार्थोपि परमात्मैव इत्यर्थः ॥ १३ ॥

ऋषिभिः विवक्षाभेदेन बहुधा संख्यातानि तत्त्वानि दर्शयति- **पुरुष** इति ।

**पुरुषः प्रकृतिर्व्यक्तमहङ्कारो नभोऽनिलः ।**
**ज्योतिरापः क्षितिरिति तत्वान्युक्तानि मे नव ॥ १४ ॥**

**पुरुषो** हिरण्यगर्भः । **प्रकृतिः** गायत्री । **व्यक्तं** रुद्रः । **अहङ्कारः** स्कन्धः । भूतानि पञ्च । एवं **नव** ॥ १४ ॥

**श्रोत्रं त्वग् दर्शनं घ्राणो जिह्वेति ज्ञानशक्तयः ।**
**वाक्पाण्युपस्थपाय्वङ्घ्रि कर्माण्यङ्गोभयं मनः ॥ १५ ॥**

एकादश श्रोत्रादीनि मनसा सह । **ज्ञानशक्तयः** ज्ञानजनिकाः शक्तयः येषां तानि ज्ञानेन्द्रियाणि इत्यर्थः । **हे अङ्ग** ! प्रेमास्पद उद्धव ! **कर्माणि** कर्मेन्द्रियाणीत्यर्थः । कार्यकारणयोरभेदादियमुक्तिः । **उभयं** सङ्कल्पविकल्पजनकं **मनः** ॥ १५ ॥

इन्द्रियविषयानाह- **शब्द** इति ।

**शब्दः स्पर्शो रसो गन्धो रूपं चेत्यर्थजातयः ।**
**गत्युक्त्युत्सर्गशिल्पानि कर्मायतनसिद्धयः ॥ १६ ॥**

**अर्थजातयः** अर्थः विषयत्वादिव्यञ्जकोद्भूतत्वादिजातयो येषान्ते । कर्मेन्द्रियविषयानाह- **गत्युक्त्युत्सर्गेति** । **उत्सर्गः** द्विविधत्वात् गुह्यद्वयकार्यम् । **शिल्पानि** कर्माणि हस्तविषयाः । कर्मायतनात्= कर्मेन्द्रियात् सिद्धिरुत्पत्तिः येषां ते । कर्मेन्द्रियार्थाः इत्यर्थः । एवं नवैकादश पञ्चपञ्च ज्ञेयाः ॥ १६ ॥

त्रीणीत्यस्यार्थः गुणा इति वक्तुं प्रकृति व्यापारमाह- **सर्गादाविति** ।

**सर्गादौ प्रकृतिर्ह्यस्य कार्यकारणरूपिणी ।**
**सत्वादिभिर्गुणैर्धत्ते पुरुषोऽव्यक्तमीक्षते ॥ १७ ॥**

'प्रागुक्तः अन्योन्यानुप्रवेशः कार्यकारणभावात् युज्यते' इति वक्तुं सृष्ट्यक्तिश्चेति भावः । अथवा यदा पुरुषः प्रकृतिम् ईक्षते तदा अस्य जगतः सत्वादिभिः सर्गादौ सति कारणनियामकत्वात् कारणेषु रूपवती चित्प्रकृतिः नियमनार्थं एव कार्येष्वपि रूपवती । जडप्रकृतिस्तु कार्यरूपा उपादानत्वेन कार्यभेदात् । एवंविधा **प्रकृतिः धत्ते** लोकपालनं करोति । ततः पुरुषः हिरण्यगर्भः अव्यक्तां= सरस्वतीं ईक्षते= प्रेरयति रुद्रादिसृष्ट्यर्थमिति भावः ॥ १७ ॥

प्रसङ्गात् अण्डसृष्टिमाह- **व्यक्तादय इति ।**

**व्यक्तादयो विकुर्वाणा धातवो पुरुषेच्छया ।**
**लब्धवीर्याः सृजन्त्यण्डं संहताः प्रकृतेर्बलात् ॥ १८ ॥**

**व्यक्तादयः** अहंकारादिनियामकाः रुद्रादयः । **प्रकृतेर्बलात् विकुर्वाणाः** विकारं प्राप्ताः कार्यरूपाः सन्तः । प्राप्तविशिष्टाकारा इति भावः । **धातवः** स्वयमपि विश्वकर्तारः विश्वधारणशीला इति भावः । **परमपुरुषेच्छया संहताः** समेताः । **लब्धवीर्याश्च** सङ्घे शक्त्युपेताश्च उभयविधप्रकृतेः सकाशात् **बलात्** बलं प्राप्य **अण्डं** सुवर्णकोशं **सृजन्ति ।** अतः तत्त्वानुप्रवेशवत् तात्त्विकदेवानामपि अन्योन्यानुप्रवेशोऽस्ति । अतः तत्त्वानां विवक्षाभेदेन न्यूनसंख्याऽपि युज्यते । तत्रानुक्तमन्यतो ग्राह्यम् । तथा हि- सत्त्वादीन् कर्मेन्द्रियविषयान् गत्यादीन् विना उक्तानि श्रीहरिणा सहितानि षड्विंशतितत्त्वानि ज्ञेयानि । महदहङ्कारपरमात्मभिः सहितानि पञ्चविंशतिः । व्यक्तं विना चतुर्विंशतिः ॥ १८ ॥

सप्तसंख्याकानि तत्त्वानि कथयति- **सप्तैवेति ।**

**सप्तैव धातव इति यत्रार्थाः पञ्च खादयः ।**
**ज्ञानमात्मोभयाधारस्ततो देहेन्द्रियासवः ॥ १९ ॥**

**खादयः धातवः** कार्यधारणसमर्थाः इन्द्रियादयः, **अर्थाः** विषयाः **यत्र** यस्यां विवक्षायां सर्वेऽपि एकत्वेन स्वीकृताः सन्तः **पञ्च** भवन्ति ते, ज्ञानं ब्रह्मा, **उभयाधारः** अभिमान्यभिमन्यमानयोः आधारः **आत्मा** परमात्मा च इति सप्त । नव तत्त्वान्याह- **ततो देहेति ।** इन्द्रियाण्येकत्वेन विवक्षितानि, **देहः, असवः** पञ्चप्राणाः, **ततः** ताभ्यां सह= ब्रह्मपरमात्मभ्यां सहिताः नव तत्त्वानि । अत्र देहशब्देन तदभिमानी दिवाकरो ग्राह्य इति भावः ॥ १९ ॥

षडिति पक्षसंश्रयेणाह- **षडित्यत्रेति ।**

**षडित्यत्रापि भूतानि पञ्च षष्ठः परः पुमान् ।**
**तैर्युक्त आत्मसम्भूतैः सृष्ट्वेदं समुपाविशत् ॥ २० ॥**

**अत्र** सङ्ख्यायाः षडिति विवक्षायाम् । **पञ्चभूतानि** तन्नियामकाश्च । महदादीनां कारणानां कार्यानुप्रवेशात् तदेकत्वविवक्षयेति भावः । **परः पुमान् षष्ठः ।** न सप्त, न त्रयोदश इति विवक्षाभेदेन केषाञ्चित् कार्याणां कारणैः अन्तरङ्गैक्येन अनुप्रवेशेन वा प्रवृत्तिः इति भावः । परमपुरुषस्य व्यापारमाह- **तैर्युक्त** इति । भूतैः **इदं** ब्रह्माण्डं **सृष्ट्वा** तदन्तः स्वयं **समुपाविशत्** विष्णुरूपेणेति भावः ॥ २० ॥

**चत्वार्येवेति तत्रापि तेज आपोऽन्नमात्मनः ।**
**जातानि तैरिदं जातं जन्मावयविनः खलु ॥ २१ ॥**

**चत्वारि** तत्त्वानि इति पक्षः । **तत्रापि** *तस्मिन्नपि पक्षे* **तेजः, आपः,** *अन्नं*, पृथिवी इत्यर्थः । परमात्मा एवं चत्वारि । आत्मनः सकाशात् तेजःप्रभृतीनि जातानि । तैः तेजःप्रभृतिभिः इदं ब्रह्माण्डं जातम् । तत्र अन्तः अवयविनः चतुर्मुखादेः जन्म खलु ॥ २१ ॥

**सङ्ख्याने सप्तदशके भूतमात्रेन्द्रियाणि च ।**
**पञ्चपञ्चैकमनसा आत्मा सप्तदशः स्मृतः ॥ २२ ॥**

**सप्तदशके** सप्तदशसङ्ख्यासम्बन्धिनि **संख्याने** गणने कर्तव्ये पञ्चभूतानि, **मात्राः** शब्दस्पर्शादयः पञ्च, **इन्द्रियाणि** पञ्च । **एकमनसा** बुद्ध्यादिभिः एकतापन्नेन मनसा युक्तानि षोडशसप्तदशसंख्यापूरक **आत्मा स्मृतः ।** एवं कापि तत्त्वसंख्या ज्ञातव्या ॥ २२ ॥

**तद्वत् षोडशसङ्ख्यानि आत्मना मन उच्यते ।**
**भूतेन्द्रियाणि पञ्चैव मन आत्मा त्रयोदश ॥ २३ ॥**

**तद्वत्** पूर्वसङ्ख्यानवत् भूतानि पञ्च, मात्राः पञ्च, बाह्येन्द्रियाणि पञ्च, आत्मसन्निधौ स्थितस्य मनसः अन्तस्थत्वेन आत्मना एकत्वविवक्षया आत्मना गृहीतेन मनश्च संगृहीतमित्युच्यते । अतः आत्मना सहैव मन उच्यते । एवं **षोडशसंख्यानि** तत्त्वानि । मन आत्मेति यौ ताभ्यां हिरण्यगर्भेण च सह इन्द्रियाणि भूतानि पञ्च पञ्च । त्रयोदश इति ज्ञेयाः ॥ २३ ॥

ननु तत्वानां बहुविधानां अङ्गीकारः कथं युक्तः? इति जिज्ञासायामाह- **सर्वमिति ।**

**इति नानाप्रसङ्ख्यानं तत्वानामृषिभिः कृतम् ।**
**सर्वं न्याय्यं युक्तिमत्त्वाद् विदुषां किमशोभनम् ॥ २४ ॥**

**युक्तिमत्त्वात्** तत्त्वसंख्याविवक्षाभेदसाधकयुक्तीनां सत्त्वात् सर्वं तत्वानां विविध-सङ्ख्यानं सङ्ख्यानानि न्यायादनपेतं **न्याय्यम** ङ्गीकर्तुमुचितमित्यर्थः । अतः **विदुषां** तत्वानां अन्तर्भावबहिर्भावसाधकपरिज्ञानयुक्तानां **अशोभनमयुक्तं** किं ? तेषां अयुक्तवचनं किमपि नास्तीत्यर्थः ॥ २४ ॥

प्रकृत्यपेक्षया पुरुषस्य सर्वगुणैरुत्तमत्त्वं प्रकटयितुं पृच्छति- **प्रकृतिरिति ।**

**उद्धव उवाच-**
**प्रकृतिः पुरुषश्चोभौ यद्यप्यात्मविलक्षणौ ।**
**अन्योन्यापाश्रयात् कृष्ण दृश्यते न भिदा तयोः ॥ २५ ॥**

**प्रकृतौ लक्ष्यते ह्यात्मा प्रकृतिश्च तथाऽऽत्मनि ।**
**एतन्मे पुण्डरीकाक्ष महान्तं संशयं हृदि ।**
**छेत्तुमर्हसि पद्मेश वचोभिस्तत्वनैपुणैः ॥ २६ ॥**

**यद्यपि प्रकृतिः पुरुषः** परमात्मा चेत्येतौ आत्मना= स्वभावतः **विलक्षणौ** भिन्नौ । अथापि **प्रकृतौ** आधारे **आत्मा लक्ष्यते प्रकृतिः आत्मनि लक्ष्यते । एवमन्यो-न्याश्रयात्** तयोः प्रकृतिपुरुषयोः **भिदा** परमस्यान्याधारत्वेन आधारमनपेक्ष्य प्रकृत्या-धारत्वं, प्रकृतेः परमात्मानाधारत्वं चेति या **भिदा** वैलक्षण्यं सा मन्दानां **न दृश्यते ।** कुत इति भावः । एवंप्रकारकं प्रकृतौ परमात्माधारत्वविषयकं **संशयं** हे **पद्मेश !** लक्ष्मीश ! परिहर्तुमर्हसि ॥ २६ ॥

ज्ञानप्रदत्वादीनि तवलक्षणानि इति स्तौति- **त्वत्त** इति ।

**त्वत्तोज्ञानं हि जीवानां प्रमोषस्तनुशक्तितः**[1] **।**

**त्वमेव ह्यात्ममायाया**[2] **गतिं वेत्थ नचापरः ॥ २७ ॥**

ज्ञातव्यार्थप्रमोषः अज्ञानं त्वत्तो भवति, ननु ज्ञानरूपस्य जीवस्य कथमज्ञानमिति जिज्ञासायामाह **ते शक्तितः ।** ज्ञानतिरोधानं च भवति इत्यर्थः । अघटितघटनाशक्तीनां अव्यक्तत्वं स्तौति- **आत्मशक्तीनां** स्वभावसिद्धसामर्थ्यानां **गतिं** व्यापारं तत्र कार्य-सम्पादकत्वमेव **वेत्थ** ॥ २७ ॥

आधारत्वलक्षणभेदज्ञानाभावे प्रकृतौ पुरुषाश्रयत्वभ्रमे च कारणन्तरमाह- **प्रकृतिः पुरुष** इति ।

**श्रीभगवानुवाच-**

**प्रकृतिः पुरुषश्चेति विकल्पः पुरुषर्षभ ।**

**एष वैकारिकः सर्गो गुणव्यतिकरात्मकः ॥ २८ ॥**

**प्रकृतिः पुरुषश्च** उभौ इति एवं प्रकारकौ । अन्योन्यविलक्षणावेवेत्यर्थः । एवमपि **एष** वैलक्षण्यदर्शनसहितं प्रकृतौ पुरुषाधारत्वज्ञानं **विकल्पः ।** विरुद्धकल्पनं विकल्पः । भ्रम इत्यर्थः । अस्मिन् भ्रमे कारणं विविच्य वक्तुं सृष्टिभेदमाह- **सर्ग** इति । **गुणव्यतिकरात्मकः** गुणवैषम्यरूपः **सर्गः वैकारिकः** विकारनिमित्तः । गुणविकारप्राप्तः । अतो भ्रमः तमःप्राप्त इत्यर्थः ॥ २८ ॥

भ्रमकारणानि विविच्याह- **ममाङ्गेति ।**

---

[1] 'प्रमोषस्ते नु शक्तितः' इति पाठेन भाव्यमिति भाति । [2] 'ह्यात्मशक्तीनां' इति पाठेन भाव्यमिति भाति ।

**ममाङ्ग माया गुणमय्यनेकधा विकल्पबुद्धिं च गुणैर्विधत्ते ।**
**वैकारिकस्त्रिविधोऽध्यात्ममेकमथाधिदैवमधिभूतमन्यत् ॥ २९ ॥**

**हे अङ्ग !** प्रिय उद्धव ! **गुणमयी** गुणादिभ्यः प्रधाना **मम माया** अघटितघटनासामर्थ्यादिरूपाः शक्तयः **विकल्पबुद्धिं** अन्यथाज्ञानं **अनेकधा** विविधप्रकारोपेततया **गुणैः** अप्रधानैः तमोविकारैः **विधत्ते** करोति । स च भ्रमहेतुर्गुणव्यतिकरः गुणविकारः त्रिविध इत्याह- **वैकारिकः इति ।** प्रकृतिगुणविकारप्राप्तः त्रिविधोऽहंकार इत्यर्थः । एतद्भ्रमकारणं विवृणोति- **अध्यात्ममिति ।** देहे विद्यमानानि इन्द्रियाणि अध्यात्मशब्दार्थः । एतानि तैजसाहंकारजन्यान्यपि अहङ्कारलाभेन भ्रमकारणानि इति भावः । **अधिदैवं** वैकारिकं सूर्यादिषु विद्यमानं तेजः । मरुमरीचिकादेः भ्रमहेतुत्वदर्शनादिति भावः । तामसाहंकारजन्यं **अधिभूतं** भूतविकारः । अयमपि सादृश्याद् भ्रमहेतुरिति भावः ॥ २९ ॥

अध्यात्मिकीं विविच्याह- **दृग्रूपमिति ।**

**दृग् रूपमर्कश्च परत्र रन्ध्रे परस्परं सिध्यति न स्वतोऽसौ ।**
**आत्मा यदेषामुपराम आद्यः स्वयाऽनुभूत्याऽखिलसिद्ध्यसिध्दिः ॥ ३० ॥**

**रन्ध्रे** देहगतगोळके विद्यमाना दृक्चक्षुरादीन्द्रियम् अध्यात्ममिति भावः । इन्द्रियप्रयोजनमाह- **यदा एषाम्** इन्द्रियाणाम् । **आत्मा** अहङ्काराख्यं मनः सहकारि तदा परस्परमिन्द्रियमनसोरन्योन्यसहायेन अर्थः सिद्ध्यति इत्यर्थः । विषयज्ञानं भवतीत्यर्थः । **असौ** वृत्तिज्ञानतद्विषयसमुदायः **न स्वतः** सिद्ध्यति । किन्तु परतो जायते । अधिदैवमाह- **परत्र** देहादन्यत्र स्थितः **अर्कः** अधिदैवम् । अधिभूतमाह- **रूपमिति । रूपं** देहादिकार्यरूपेण विकृतं पृथिव्यादि अधिभूतमित्यर्थः । वृत्तिज्ञानस्य स्वतः

सिद्ध्यभावे कस्य स्वतःसिद्धिरित्यत आह- **एषाम्** इति । एषाम् आत्मेत्यनयोरावृत्तिः । **एषां** प्राकृतेन्द्रियाणां उपरम एव **उपरामः ।** उपरतावित्यर्थः । **आत्मा** चेतनः **स्वतः सिद्ध्यति** स्वप्रकाशज्ञानविषयो भवति, ईश्वरसामर्थ्येनेति भावः । परमात्मनः ज्ञानादि-व्यापारे सर्वोत्कर्षमाह- **आद्य** इति । अखिलानां= चेतनाचेतनानां सिद्धिः= ज्ञानं असिद्धिः= अज्ञानं जन्मस्थित्यादि च येन भवन्ति **सोऽखिलसिद्ध्यसिद्धिः । आद्यस्तु** आदौ विद्यमानः, सर्वमूलकारणमित्यर्थः, परमात्मा तु **स्वया** स्वतन्त्रया स्वविषयिण्या इति वा **अनुभूत्या सिद्ध्यति** ज्ञानविषयो भवति ॥ ३० ॥

यथा चक्षुरहंकारसहितं सत् भ्रमजनकं एवं त्वगिन्द्रियादिकमपि अहंकारसहितं भ्रमजनकमित्याह- **एवं त्वगादीति ।**

**एवं त्वगादि श्रवणादि चक्षुर्जिह्वादिना सादि च चित्तयुक्तम् ॥ ३१ ॥**

आदिशब्दैः त्वगिन्द्रियादीनां सहकारिणो गृह्यन्ते । त्वगादिविशेषादर्शनं रागश्च उक्तभ्रमहेतुरिति भावः । तत्तदधिष्ठानसन्निकर्षस्यापि भ्रमकारणत्वात् तत्संग्रहाय आदि-शब्दस्य बहुधोक्तिरिति भावः । **त्वगादि** चित्तयुक्तं सत् **एवं** चक्षुर्वद् भ्रमकारणम् इत्यर्थः । चक्षुरिति पुनर्वचनं अवधारणार्थम् ॥ ३१ ॥ भ्रमहेतुत्वेन पूर्वं प्रसक्तस्य अहंकारस्य उपादानमाह- **योऽसाविति ।**

**योऽसौ गुणक्षोभकृतो विकारः प्रधानमूलो जगतः प्रसूतिः ।**
**अहं त्रिवृन्मोहविकल्पहेतुर्वैकारिकस्तामस ऐन्द्रियश्च ॥ ३२ ॥**

**यः असौ** भ्रमकारणत्वेन प्राप्तः **विकारः** कार्यं तामसाहंकारः सः **गुणक्षोभेण** कार्येण महदहङ्काराभ्यां कृतः । अहंकारस्य कारणान्तरमाह- **प्रधानमूल** इति । अहंकारस्य प्रकृतिः मूलकारणमित्यर्थः । अहङ्कारकार्यमाह- **जगत** इति । प्रसूयते

अनेनेति प्रसूतिः जनकः इत्यर्थः । **अहं** अहङ्कारः मोहहेतुः, तथा विकल्पस्य= संशयस्य च हेतुः । सः अहङ्कारः **त्रिवृत्** त्रिरूप इत्यर्थः । त्रैविध्यं दर्शयति- **वैकारिक** इति । **ऐन्द्रिय** इन्द्रियजनकः तैजस इत्यर्थः ॥ ३२ ॥

परमात्मनि जीवादिवैलक्षण्यमाह- **आत्मेति ।**

**आत्मा परिज्ञानमयो विवादो ह्यस्तीति नास्तीति भिदाऽर्थनिष्ठः ।**
**व्यर्थोऽपि नैवोपरमेत पुंसां मत्तः परावृत्तधियां स्वलोकात् ॥ ३३ ॥**

**आत्मा** तु परिज्ञानस्वरूपो न गुणक्षोभकृत इत्यर्थः । एवंविधभ्रान्त्या विविधवादिनां विविधा विवादा भवन्तीत्याह- **नास्तीति । भिदा** विपर्ययेण सदसद्भ्रमेण इत्यर्थः । सत इदं नास्ति, असत इदं अस्ति इति विवादः **अर्थनिष्ठः** अर्थे ईश्वरे निष्ठा यस्य सः प्रवर्तते । एवं स्वभ्रान्त्या ईश्वरापलापं कुबुद्धयः कुर्वन्ति इत्यर्थः । एवं विवादादिमुख्यकारणं अहमेवेत्याह- **व्यर्थोऽपीति ।** अथवा तद्भ्रान्तिपरिहारः कुत इत्यत आह- **व्यर्थोऽपीति । स्वलोकात्** सर्वाश्रयात् स्वतन्त्रप्रकाशरूपात् इति वा **मत्तः** श्रीकृष्णात् परावृत्ता= निवृत्ता धीः येषाम्, मम माहात्म्यज्ञानरहितानां इत्यर्थः । भ्रान्तिः मत्तः भवति । अथवा यदृच्छया प्राप्ता भ्रान्तिः सफलप्रवृत्तिजनिका इयन्तु भ्रान्तिः व्यर्था । अथवा लौकिकी भ्रान्तिः नरकादिदुःखजनिका न भवति । आश्रयादिनिरपेक्षे परमात्मनि विषये जायमाना अन्याश्रितत्वादिभ्रान्तिः **व्यर्थोऽपि** विरुद्धार्थोऽपि नरकादि दुःखहेतुरपि, **नैवोपरमेत** विवेकाभावात् न निवर्तते । मद्भक्तियुक्तानां तु निवर्तत इत्यर्थः ॥ ३३ ॥

ज्ञानरूपस्य जीवस्य अज्ञानविकर्मभिः संसारः कथं घटत इति पृच्छति- **त्वत्तः परावृत्तेति ।**

**उद्धव उवाच-**

**त्वत्तः परावृत्तधियः स्वकृतैः कर्मभिः प्रभो ।**

**उच्चावचान् यथा देहान् गृह्णन्ति विसृजन्ति च ॥ ३४ ॥**

**त्वत्तः** त्वद्विषये परावृत्ता धीर्यस्य सः तस्य । अज्ञस्येति भावः ॥ ३४ ॥

**तन्ममाख्याहि गोविन्द दुर्विभाव्यमनात्मभिः ।**

**न ह्येतत् प्रायशो लोके विद्वांसोऽञ्चन्ति वञ्चिताः ॥ ३५ ॥**

**तत्** देहसंबन्धकारणम् **अनात्मभिः** परमात्मविरोधिभिः तत्प्रसादरहितैः इति भावः । **दुर्विभाव्यम्** अज्ञेयम् । दुर्विभाव्यत्वं देहबन्धस्य उपपादयति- **नह्येतदिति ।** **विद्वांसोऽपि** ज्ञानिनोऽपि **वञ्चिताः** विषयाकृष्टा **एतद्** जीवस्य देहबन्धकारणं **नाञ्चन्ति** न जानन्ति इत्यर्थः ॥ ३५ ॥

ज्ञानाद् दुर्बलमप्यज्ञानं मानसविषये दुराशातिशयात् प्रबलं सत् विकर्मपुरस्सरं बन्धकमित्याशयेनाह- **मनः कर्ममयमिति ।**

**श्रीभगवानुवाच-**

**मनः कर्ममयं नृणामिन्द्रियैः पञ्चभिर्युतम् ।**

**लोकाल्लोकं प्रयात्यन्यमात्मा तदनुवर्तते ॥ ३६ ॥**

**कर्ममयं** कर्मप्रधानं पूर्वकर्माधीनमित्यर्थः । **पञ्चभिः** इन्द्रियैः । **लोकात्** लोक्यत इति लोको भोग्यं तस्मात् **अन्यं लोकं** विषयान्तरं **प्रयाति** विषयीकरोति, **आत्मा** जीवः **तदनुवर्तते** मनोऽनुसारी भवतीत्यर्थः ॥ ३६ ॥

जीवस्य मनोनुसारित्वे सति विपरीतं फलमित्याह- **ध्यायन्निति ।**

**ध्यायन्मनो हि विषयान् दृष्टान् वाऽनुश्रुतानथ ।**
**उद्यत् सीदत् कर्मतन्त्रं स्मृतिस्तदनु शाम्यति ॥ ३७ ॥**

**कर्मतन्त्रं** पूर्वकर्माधीनं सत् । **मनः विषयान् ध्यायन उद्यत्** विषयसम्पादने उत्साहोपेतम्, **सीदत्** विषयालाभे चिन्ताग्रस्तं यदा तदा **स्मृतिः** परमात्मस्मरणं **शाम्यति** तिरोहितं भवति, विषयध्यानाधिक्ये सति ज्ञानं अत्यन्तं नश्यति इत्यर्थः ॥ ३७ ॥

श्रीहरिस्मरणस्य आत्यन्तमभावे महद्दुःखं स्यादित्याशयेनाह- **विषयाभिनिवेशेनेति ।**

**विषयाभिनिवेशेन नात्मानं यत् स्मरेन्मनः ।**
**जन्तोर्वै कस्यचिद्धेतोर्मृत्युरत्यन्तविस्मृतिः ॥ ३८ ॥**

उत्तरदेहाभिनिवेशेन तदभिमानदार्ढ्येन **आत्मानं** पूर्वदेहं **मनः न स्मरेत्** । पूर्वं अनुभूतस्य विविच्य स्मरणं कुतो नास्ति ? इत्याशङ्क्याह- **कस्यचिदिति । कस्यचित्** लोकविलक्षणस्य श्रीहरेः अधीनात् **हेतोः** विकर्मादिलक्षणकारणात् **जन्तोः** तामस-जीवस्य **अत्यन्तं** पूर्वदेहादेः **विस्मृतिः** यत् तत् **मृत्युः** अत्यन्तं दुःखकारणमित्यर्थः ॥ ३८ ॥

अन्तर्यामिस्मरणाभावेन देहाभिमानः तेन च जन्मपरम्परा भवतीत्याह- **जन्म त्वात्मतयेति ।**

**जन्म त्वात्मतया पुंसः सर्वभावेन भूरिद ।**
**विषयस्वीकृतिं प्राहुर्यथा स्वप्नमनोरथः ॥ ३९ ॥**

**पुंसः** चेतनस्य **आत्मतया** सर्ववस्तुषु स्वीयत्वबुध्या इत्यर्थः । **सर्वभावेन** सर्व-कर्मभिरित्यर्थः । प्राप्तं **विषयस्वीकृतिं** देहाभिमानं **जन्म प्राहुः,** देहसम्बन्धमात्रं न जन्मेति । देहाभिमानस्य अनिष्टसंपादकत्वं कथम् ? इति जिज्ञासायामाह- **यथा स्वप्न** इति । स्वप्नः यथा जाग्रद्स्पर्शार्थाभेदविषयकः चिन्तादिकारणं, **मनोरथः** स्वप्नेन अनुसन्धीयमानः अर्थः यथा सङ्कल्पादिहेतुः एवमित्यर्थः । तस्मात् देहाभिमानः परित्याज्य इति भावः ॥ ३९ ॥

'विषयाभिनिवेशेन आत्मानं मनो न स्मरेत्'इत्युक्तम् । तद्विवृणोति- **स्वप्नमिति ।**

**स्वप्नं मनोरथं चार्थं प्राक्तनं न स्मरत्यसौ ।**
**तत्र पूर्वमिवात्मानमपूर्वं चानुपश्यति ॥ ४० ॥**

**प्राक्तनं** पूर्वजन्मनि प्राप्तं स्वप्नादिकं **अर्थं** विषयांश्च **असौ** स्वप्नार्थभोक्ता यथा न स्मरति, एवं तत्र देहान्तरस्थितः **अपूर्वं** उत्तरत्र प्राप्तं देहम् **अनुपश्यति** पुनः पुनः तत्र अभिमानवान् भवति च यस्मात् तस्मात् **पूर्वं** स्थितम् **आत्मानं** देहं **न स्मरति इव ।** कदाचित् पूर्वदेहं ईषत् स्मरतीत्यर्थः ॥ ४० ॥

अभिमानस्य निवर्तकं देहस्य अनित्यत्वेन जीवस्य नित्यत्वेन भेदज्ञानं स्पष्टं भवतीत्याह- **ईदृशेति ।**

**ईदृशायास विज्ञाय त्रैविध्यं भाति वस्तुनि ।**
**बहिरन्तर्भिदाहेतुर्जनोऽसज्जनकृद् यथा ॥ ४१ ॥**

**ईदृशं** वर्तमानम् । **आयः** एष्यत् । यकारे दीर्घलोपः । **सः** अतीतः इति **त्रैविध्यं** त्रिकालसंबन्धित्वं **विज्ञाय** विचारे कृते सति **वस्तुनि** जीवे **भाति ।** तत्

त्रिकालसंबन्धित्वं बहिर्विद्यमानाद् देहात् अन्तर्विद्यमानस्य जीवस्य स्पष्टं भेदज्ञानजनने हेतुः । भेदज्ञानं भवतीत्यत्र निदर्शनमाह- **जन** इति । **जनः** पितृजनः असाधुः प्रायः असज्जनपुत्रकृत् । बाल्यकौमारयौवनादिना देहभेदेऽपि जीवस्य स्थायित्वानुभवः इति भावः । यथा सज्जनाद्भिन्नो ज्ञायते असज्जन इति ज्ञायते एवं देहभेदज्ञानस्य स्पष्टतासंपादकं चेतननित्यत्वज्ञानमित्यर्थः । देहानित्यताज्ञानात् देहे नित्यचेतनभेदः स्पष्टं ज्ञायते इति वा अर्थः । तस्मात् देहाभिमानः 'स्थूलोऽहम्' इत्यादिर्वा भ्रम इति भावः ॥ ४१ ॥

देहादेः प्रतिदिनं चासौ भवति इत्याह- **नित्यदेति** ।

**नित्यदा ह्यङ्ग भूतानि भवन्ति न भवन्ति च ।**
**कालेनालक्ष्यवेगेन सूक्ष्मत्वात् तन्न दृश्यते ॥ ४२ ॥**

हे **अङ्ग** ! **भूतानि** देहादिकमित्यर्थः । **न भवन्ति** नश्यन्ति । विद्यमानानामपि देहादीनामवयवोपचयः उत्पत्तिः अवयवापचयः नाश इत्यर्थः । उत्पत्तिनाशकालयोः **सूक्ष्मत्वात्** अत्यणुत्वात् **तत्** सूक्ष्मकाले प्राप्यमाणं उत्पत्त्यादिकं न **दृश्यते** चक्षुषा ज्ञानमुशक्यम् ॥ ४२ ॥

अत्र असंभावनापरिहाराय निदर्शनमाह- **यथाऽर्चिषामिति** ।

**यथाऽर्चिषां स्रोतसां च फलानां वा वनस्पतेः ।**
**तथैव सर्वभूतानां वयोऽवस्था च तत्कृता ॥ ४३ ॥**

**तत्कृता** सूक्ष्मकालकृता । **तथा** देहादीनामपि उत्पत्तिनाशौ ॥ ४३ ॥

एवं सति देहभेदः प्राप्तः, अतः सोऽयं देह इति प्रत्यभिज्ञानं भ्रमः स्यादित्याशङ्क्याह- **सोयं दीपोऽर्चिषामिति ।**

**सोऽयं दीपोऽर्चिषां यद्वत् स्रोतसां तदिदं जलम् ।**
**सोऽयं पुमानिति नृणां न मृषागीर्मृषायुषाम् ॥ ४४ ॥**

**दीपोऽर्चिषां** दीपेन भिन्नानामपि 'सोऽयं दीप' इति ज्वालाविशिष्टेन विशेष्यस्य अभेदप्रत्यभिज्ञानं यथा, गतागतजलयोर्भेदेऽपि **तदिदं जलम्** इति प्रत्यभिज्ञानम् । एवं **सोऽयं पुमान्** इति देहेन पूर्वदेहस्य अभेदप्रत्यभिज्ञानं **न मृषा । मृषायुषां** विशेष्यदेहस्थैर्योपेतानां नृणाम् । **मृषा** अल्पमिति वा । अल्पायुषां इत्यर्थः । **गीः** अभेदव्यवहारश्च **न मृषा ।** परिणताद्विशिष्टाद् विशेष्ये भेदाभेदयोः सत्त्वादिति भावः । 'स एवायम्' इति तु प्रत्यभिज्ञा भ्रान्तिरिति भावः । 'मृषा गीर्न मृषायुषां' इति क्वचित् पाठः ॥ ४४ ॥

स्वरूपेण उत्पत्तिनाशाभाववतो जीवस्य देहाद् उत्पत्त्यादिमत्वेऽपि वैलक्षण्यमाह- **आद्य** इति ।

**आद्यः स्वकर्मबीजेन जायते सोऽव्ययः पुमान् ।**
**म्रियते चामरो भ्रान्त्या यथाऽग्निर्दारुसंयुतः ॥ ४५ ॥**

**आद्यः** देहापेक्षया पूर्वभावी । **अव्ययः** स्वरूपेण उत्पत्तिनाशरहितः **पुमान्** चेतनः **जायते म्रियते** च । ननु नित्यस्य कथमुत्पत्तिनाशौ ? इति जिज्ञासायामाह- **भ्रान्त्येति । अमरोऽपि** निजदेहवियोगरहितोऽपि **भ्रान्त्या** भौतिकदेहाभिमानेन तत्प्राप्तकर्मबीजेन कर्मलक्षणकारणेन **जायते** देहसंबन्धेन प्राप्तदुःखेन नीचतादिविकारवान् भवति । **म्रियते** देहसंबन्धप्राप्तविशिष्टाकारेण अभीष्टसाधनेन रहितो भवतीत्यर्थः ।

दारुसंयुक्तः अग्निः यथा दारुगतविशिष्टाकारेण उत्पत्तिनाशाभ्यां नाशवानिति व्यपदिश्यते सूक्ष्मरूपेण स्थायी च भवति तथेत्यर्थः ॥ ४५ ॥

नित्यस्य जीवे उत्पत्त्यादिकं सोपाधिकं न स्वाभाविकमित्याह- **निषेकेति** ।

**निषेकगर्भजन्मानि बाल्यकौमारयौवनम् ।**
**वयोमध्यं जरा मृत्युरित्यवस्थास्तनोर्नव ॥ ४६ ॥**

**निषेकः** रेतस उदरे आधानम् । **गर्भः** उदरे शकन्ध्वादिरूपेण रेतसः परिणामः । **जन्म** भूमौ जननम् ॥ ४६ ॥

चेतनस्य अघविशिष्टाकारप्राप्तौ कारणान्तरमाह- **एता** इति ।

**एता मनोरथमयीर्ह्यन्यस्योच्चावचास्तनूः ।**
**गुणसङ्गादुपादत्ते क्वचित् काश्चिज्जहाति च ॥ ४७ ॥**

**अन्यस्य** संसारिणाऽन्यस्य, अल्पचेतनादन्यस्य इति वा । श्रीहरेः अधीनो गुणः रजस्तमोरूपः तत्सम्बन्धात् **मनोरथमयीः** जीवस्य संकल्पप्रचुराः तेन प्राप्ता इत्यर्थः । **उच्चाः** तिमिङ्गिलगजादिरूपाः **अवचाः** दंशमशकादिरूपाः, ब्राह्मणादिरूपाः वर्णान्तररूपा वा **क्वचित्** सृष्टिकाले **तनूः उपादत्त, क्वचित्** कर्मक्षये **जहाति** ॥ ४७ ॥

श्रुत्यादिसिद्धे देहोत्पत्त्यादौ अनुमानं च आह- **आत्मन** इति ।

**आत्मनः पितृपुत्राभ्यामनुमेयौ भवाप्ययौ ।**
**भवाप्ययौ हि वस्तूनामभिज्ञाद्वयलक्षणौ ॥ ४८ ॥**

सदेहस्य **भवः** उत्पत्तिः **अप्ययः** लयः । एतौ **आत्मनः** स्वस्य पुत्रेण जातेन दृष्टान्तेन, स्वस्य पितुः अप्ययेन च अनुमातुं शक्यावित्यर्थः । अतः सामान्यतः श्रुत्यादिप्राप्ते स्वदेहोत्पत्त्यादौ स्वेन अदृष्टत्वादेव अविश्वासो न कर्तव्य इति भावः । देहगताः भवाप्ययादयः देहविलक्षणस्य जीवस्य कथं भवन्ति ? इति शङ्कापरिहारं द्रढयितुम् उक्तं मूलकारणं स्मारयति **प्रभवाप्ययाविति** । अभिज्ञाद्वयं देहादौ अहङ्कार-ममकारलक्षणं स्वरूपं ययोस्तौ देहाभिमानप्राप्तावित्यर्थः ॥ ४८ ॥

देहात्मनोः स्पष्टतरविवेकज्ञानाय निदर्शनान्तरमाह- **तरोरिवेति** ।

**तरोर्बीजविकाराभ्यां यो विद्वान् जन्मसंयमौ ।**
**तरोर्विलक्षणो दृष्ट एवं द्रष्टा तनोः पृथक् ॥ ४९ ॥**

तरुः बीजेन जन्म प्राप्नोति, विकारेण अवयवापचयेन च्छेदादिना संयमं= नाशं प्राप्नोति इति भावः । इत्येवं विद्वान् यः स चेतनः तरोः= **विलक्षणः** इति स्वेन **दृष्टः** । एवं दर्शनेन **तनोः** स्वदेहस्य पुत्रादिदृष्टान्तेन **जन्मसंयमौ विद्वान्** पूर्वोक्तरीत्या स्वनित्यत्वज्ञानी देहात् **पृथक्** 'अहं भिन्न' इति स्वयं स्पष्टं जानीयात् इत्यर्थः । एवं तनोः सकाशात् **द्रष्टा** च तनौ स्थित्वा सर्वसाक्षी परमात्मा च पृथगेव ज्ञात इत्यर्थः । तनुभेदस्पष्टतरज्ञानं देहाभिमानपरित्यागविशेषगतिः एवं व्यक्तिभेदेन देहाभिमानपरित्यागविशेषस्य देहभेदज्ञानविशेषस्य च अन्योन्यं कार्यकारणभाव इति भावः । जीवस्वरूपं च ज्ञानसुखाद्यभिन्नं श्रुत्यादिविमर्शेन ज्ञातव्यमिति भावः ॥ ४९ ॥

अन्तःकरणादिसंघातरूपाद्देहात् जीवे अतिस्पष्टं दृढतरभेदज्ञानाभावे संसारदुःखं न निवर्तत इत्याह- **प्रकृतेरिति** ।

**प्रकृतेरेवमात्मानमविविच्याबुधः पुमान् ।**
**तत्वेन स्पर्शसम्मुग्धः संसारं प्रतिपद्यते ॥ ५० ॥**

**प्रकृतेः** सम्बन्धलिङ्गशरीरादितः **आत्मानं** चेतनं **अविविच्य** स्पष्टतरं भिन्नतया अज्ञात्वा । अबुधः बन्धमोक्षकारणज्ञानरहितः स्पर्शेन= विषयप्रबन्धेन सम्मुग्धः । अत्यन्तदेहाद्यभिमानसम्पन्न इत्यर्थः । **तत्त्वेन** स्वतन्त्रतत्त्वेन परमात्मना **तत्त्वेन** याथार्थ्येन वा तत्त्वारोपेणेति भावः । संसारं स्थूलदेहसंबन्धप्राप्तदुःखं तत्कृतनीचता-विकारं **प्रतिपद्यत ॥** ५० ॥

संसारोऽपि सात्विककर्मादिकारणभेदेन बहुधा इत्याह- **सत्त्वसङ्गादिति ।**

**सत्वसङ्गाद् ऋषीन् देवान् रजसाऽऽसुरमानुषान् ।**
**तमसा भूततिर्यक्त्वं भ्रामितो याति कर्मभिः ॥ ५१ ॥**

**सत्वसङ्गाद्** सात्विकज्ञानकर्मसङ्गादित्यर्थः । **रजसा** राजसकर्मणा **तमसा** तामस-कर्मणा एवंविधकर्मभिः एतादृशयोनिषु **भ्रामितः** पुनःपुनः अधः **याति** दुःखं प्राप्नोति ॥ ५१ ॥

विषयापेक्षाविनिर्मुक्तस्वभावस्य साधुचेतनस्य स्पर्शसंमुग्धता कथम् ? इति जिज्ञा-सायामाह- **नृत्यत** इति ।

**नृत्यतो गायतः पश्यन् यथैवानुकरोति तान् ।**
**एवं बुद्धिगुणान् पश्यन्ननीहोऽप्यनुकार्यते ॥ ५२ ॥**

**तान्** नृत्यादिकर्तॄन् **अनुकरोति** तद्वत् नर्तनादौ प्रवर्तते यथा तथा **अनीहोऽपि** स्वभावतः विषयेच्छारहितोऽपि **अनुकार्यते** विषयेषु प्रवर्तते । अन्तःकरणरूपेणेति भावः । अन्तःकरणदुःखस्य स्वगतत्वबुद्ध्येति भावः ॥

दुःखविशिष्टान्तःकरणसम्बन्धात् चेतने दुःखतादात्म्यस्य आरोपितत्वं पुनः दृष्टान्तोक्त्या द्रढयति- **यथा अम्भसेति ।**

**यथाऽम्भसा प्रचलता तरवोऽपि चला इव ।**
**चक्षुषा भ्राम्यमाणेन दृश्यते भ्रमतीव भूः ॥ ५३ ॥**

तरवः तीरस्थाः ॥ ५३ ॥

**यथा मनोरथधियो विषयानुभवो मृषा ।**
**स्वप्नदृष्टश्च दाशार्ह तथा संसार आत्मनः ॥ ५४ ॥**

**मनोरथधियः** पुरुषप्रयत्नजन्यवासनारूपविकृतविषयाणां धीः यस्य तस्य चेतनस्य । स्वप्ने दृष्टः **विषयानुभवः** बाह्यविषयाभेदज्ञानं जाग्रत्पदार्थात् । यथा मृषा अर्थरहितः आरोपः, तथा **आत्मनः** आत्मनि प्रतीयमानः **संसारः** चेतने दुःखतत्तादात्म्यप्रतीतिः **मृषा ।** अथवा रजतभ्रमवत् रज्जुसर्पबुद्धिवत् मृषा वृथा । तत्काले अल्पहर्षादिजनिका एता बुद्धयः इत्यर्थः । अथवा **संसारः** दुःखसम्बन्धः जीवे स्वत एव भवति इति बुद्धिः मृषा । दुःखादेरौपाधिकत्वात् इति भावः[1] । अतः चेतनैः प्राकृतान्तःकरणसंबन्धराहित्यं संपाद्यमिति भावः ॥ ५४ ॥

---

[1] अत्र 'दुःखमेवासह्यं, तत्तादात्म्यारोपः नावश्यक इति भावः' इत्यधिकं पठ्यते मूलपुस्तके, सम्पातायातं स्यात् ।

ननु यथा प्रतिबिम्बतरुचलनेन बिंबतरुलनादिभ्रमः विशेषदर्शनेन निवर्तते एवं भ्रमरूपः संसारोऽपि विशेषदर्शनेन निवृत्तो भवेत् तदर्थं ईश्वरप्रसादसम्पादनं किमर्थमिति जिज्ञासायामाह- **अर्थे हीति** ।

**अर्थे ह्यविद्यमानेऽपि संसृतिर्न निवर्तते ।**
**ध्यायतो विषयान् पुंसः स्वप्नेऽप्यर्थागमो यथा ॥ ५५ ॥**

**अर्थे** चेतने दुःखतादात्म्यलक्षणे विषये **अविद्यमानेऽपि** चेतने दुःखतादात्म्यज्ञानस्य भ्रमत्वेऽपि इत्यर्थः, **संसृतिः** भ्रमप्राप्तः चेतने नीचताविकारः **न निवर्तते** विशेषदर्शनेऽपि भ्रमानिवृत्तौ कारणमाह- **ध्यायत** इति । **विषयान् ध्यायतः** पुनः विषयध्यानं पुनः भ्रमोत्पत्तौ कारणमिति भावः । **पुंसः स्वप्ने** पुनः स्वप्नप्रापकात् **अनर्थागमः** अनिष्टदर्शनेन प्राप्तः दुःखादिर्यथा तथा सोपाधिकभ्रमवत् **न निवर्तत** इति भावः ॥ ५५ ॥

तस्मात् ईश्वरप्रसादसंपादनार्थं च अत्यन्तं विषयपरित्यागः कर्तव्य इत्याह- **तस्मात् उद्धवेति** ।

**तस्मादुद्धव मा भुङ्क्ष्व विषयानसदिन्द्रियैः ।**
**आत्माग्रहणनिष्पन्नं पश्यन् वैकल्पिकं भ्रमम् ॥ ५६ ॥**

**वैकल्पिकम्** अहङ्करोमि इति सङ्कल्पादिभ्रमं परमात्मनः अग्रहणेन= अनपरोक्षेण तत्प्रसादानुदयेनेत्यर्थः । **निष्पन्नं पश्यन्** स्वस्वबन्धनिवृत्त्यर्थं प्रसादं सम्पादयेदित्यर्थः ॥ ५६ ॥

जनेषु कामक्रोधादिकारणे सत्यपि पापहेतुः क्रोधादिः न कार्यः, ईश्वरानुग्रह-विरोधित्वादित्याशयेनाह- **क्षिप्त** इति ।

**क्षिप्तोऽवमानितोऽसद्भिः प्रलब्धः शापितोपि वा ।**
**ताडितः सन्निरुद्धो वा वृत्त्या वा परिहापितः ॥ ५७ ॥**

**विष्ठितो मूत्रितो वाऽज्ञैर्बहुधैवं प्रकम्पितः ।**
**श्रेयस्कामः कृच्छ्रगत आत्मनाऽऽत्मानमुद्धरेत् ॥ ५८ ॥**

**क्षिप्तः** गेहान्निस्सारितः, **अवमानितः**, प्रसक्तबहुमानान्निवारितः, **प्रलब्धः** अयथार्थ-वचनादिना वञ्चितः, **सन्निरुद्धः** शृङ्खलादिना बन्धितः, **वृत्त्या** जीवनोपयेन **परिहापितः** धनधान्याद्यपहारयुक्तः, **प्रकम्पितः** चालितोऽपि, **कृच्छ्रगतः** एवं मनःखेदं प्राप्तोऽपि **आत्मना** सहनशक्त्या **आत्मानं** क्रोधादिपापादु**द्धरेत्** । ततः प्रतिक्रियां न कुर्यात् इत्यर्थः ॥ ५८ ॥

एवमादिसहनशक्त्युपायं पृच्छति- **यथैवमिति** ।

**उद्धव उवाच-**
**यथैवमनुबुध्येयं वद नो वदतां वर ।**
**सुदुःसहमहं मन्ये आत्मन्यसदतिक्रमम् ॥ ५९ ॥**

**आत्मनि** देहोपश्लिष्टे जीवे असदतिक्रमं असद्भ्यः प्राप्तम् अतिक्रमम् अवमानादिकं **सुदुस्सहं मन्ये** सहने अशक्यं मन्ये । अतः एवमवमानादिसहनोपायरूपं **यथा अनुबुध्येयं** तथा **वदतां** उपायो- उपदेशकानां वरमुपायं **वद** ॥ ५९ ॥

अवमानादिप्राप्तक्रोधादि कुतो न सोढुं शक्यम् ? इत्याशङ्क्याह- **विदुषामपीति** ।

**विदुषामपि विश्वात्मन् प्रकृतिर्हि बलीयसी ।**
**ऋते त्वद्धर्मनिरतान् शान्तांस्ते चरणालयान् ॥ ६० ॥**

**॥ इति श्रीमद्भागवते एकादशस्कन्धे द्वाविंशोऽध्यायः ॥**

**विश्वात्मन् !** सर्वान्तर्यामिन् ते **चरणालयान्** तव चरणाश्रयं प्राप्तान् त्वद्धर्मे= निवृत्तधर्मे यजनश्रवणादौ **निरतान् शान्तान्** अहङ्कारादिमनोदोषरहितान् त्वयि समर्पित-चित्तानिति वा । योगिनः **ऋते विदुषामपि** धर्मज्ञानवतामपि दुस्सहं मन्ये । तत्र निमित्तमाह- **बलीयसीति । प्रकृतिः** अहंकारादिरूपा बलवती, कामक्रोधादिजनने अतिसमर्था । अतः एतद् वद उपायं वदेत्यर्थः ॥ ६० ॥

॥ इति श्रीयादवेन्द्रयतिविरचिते एकादशस्कन्धव्याख्याने द्वाविंशोऽध्यायः ॥

# 23 | त्रयोविंशोऽध्यायः

**श्रीशुक उवाच-**

**स एवमाशंसित उद्धवेन भागवतमुख्येन दशार्हवर्यः ।**

**सभाजयन् भृत्यवचो मुकुन्दस्तमाबभाषे श्रवणीयवीर्यः ॥ १ ॥**

**आशंसितः** स्तुतः पृष्टः । श्रवणीयानि वीर्याणि= सृष्ट्यादिविषयसामर्थ्यानि । श्रवणेन सर्वाभीष्टप्रदानि यस्य सः श्रीकृष्णः **तमाबभाषे** ॥ १ ॥

मद्भक्त एव असतां दुरुक्त्यादिसहने शक्त इत्याह- **बाह्येति** ।

**श्रीभगवानुवाच-**

**बाह्यान्तर्भजनो ह्यत्र साधुर्वै दुर्जनेरितैः ।**

**दुरुक्तैर्भिन्नमात्मानं यः समाधातुमीश्वरः ॥ २ ॥**

**अत्र** विविधजनेषु **साधुः** सात्विकस्वभावः, बाह्येषु= चलाचलाधिष्ठानेषु विद्यमाने, अन्तः= हृदयादिषु च विद्यमाने परमात्मनि भजनं सेवा भक्तिर्वा यस्य सः । **दुरुक्तैः** निष्ठुरवचनैः **भिन्नं** क्षुब्धं **आत्मानं** मनः समाधातुं प्रसन्नं कर्तुम् **ईश्वरः** समर्थो भवति, नान्यः । बाह्यान्तःशत्रुशोषकर इति वा ॥ २ ॥

यद्यपि परुषवचनानि व्यथयन्ति । अथापि इत्याशयेनाह- **न तथेति** ।

**न तथा तप्यते विद्धः पुमान् बाणैर्हि मर्मगैः ।**

**यथा तुदन्ति मर्मस्था असतां परुषेषवः ॥ ३ ॥**

अत्रोक्तार्थे दृढज्ञानवतः सर्वसहनशक्तिर्भवतीत्याशयेनाह- **कथयन्तीति** ।

**कथयन्ति महापुण्यम् इतिहासमिहोद्धव ।**
**तमहं वर्णयिष्यामि निबोध सुसमाहितः ॥ ४ ॥**

**इह** सहनशक्तिसम्पत्त्यर्थं वृद्धाः शिष्यान् प्रति **कथयन्ति तम्** ॥ ४ ॥

इतिहासस्य प्रथमं प्रवर्तकमाह- **केनचिदिति** ।

**केनचिद् भिक्षुणा गीतं परिभूतेन दुर्जनैः ।**
**स्मरता धृतियुक्तेन विपाकं निजकर्मणः ॥ ५ ॥**

**परिभूतेन** तिरस्कृतेन । परिभवप्राप्तक्रोधकलहादिकं विना तत्त्वार्थानुसन्धाने तद्गाने च किं कारणम् इति जिज्ञासायामाह- **स्मरतेति** । **निजकर्मणः** स्वकृतपापस्य **विपाकं** फलभोगप्राप्तपाकत्वावस्थांन **स्मरता,** अत एव **धृतियुक्तेन** धैर्यसंपन्नेन **भिक्षुणा गीतं** वर्णितं त्वत्प्रश्ने वर्णयिष्यामि ॥ ५ ॥

भिक्षुः प्रथमं कीदृशवृत्तिः इति जिज्ञासायामाह- **अवन्तीष्विति** ।

**अवन्तीषु द्विजः कश्चिद् आसीदाढ्यतमः श्रिया ।**
**वार्तावृत्तिः कदर्यस्तु कामी लुब्धोऽतिकोपनः ॥ ६ ॥**

**ज्ञातयोऽतिथयस्तस्य वाङ्मात्रेणापि नार्चिताः ।**
**शून्यावसथ आत्माऽपि काले कामैरनर्चितः ॥ ७ ॥**

**अवन्तीषु** अवन्तीदेशे **श्रिया** धनधान्यादिना **आढ्यतमः** समृद्धः **आसीत्** । वार्ता= कुसीदादिवैश्यकर्म वृत्तिः= जीवनं यस्य सः । मूलं धनं न भुङ्क्ते इति भावः । **कदर्यः** दरिद्र इव असन्तृप्त इत्यर्थः । **कामी** कामवित्तैषणवान् **लुब्धः** भोगधर्माद्यर्थं

द्रविणव्ययविधुरः **अतिकोपनः** द्रविणादियाचकेषु कोपकर्ता, अत एव **वाङ्मात्रेणापि** मृदुवचनेनापि । गृहेष्वपि अयं अतिमन्द इत्याह- **शून्येति ।** भोग्यवस्तुभिः हीने स्वगेहे **आत्माऽपि** अन्तर्यामी स्वयमपि **काले** क्षुत्पिपासा समये **कामैः** भोज्यैः **अनर्चितः ॥ ७ ॥**

**दुःशीलस्य कदर्यस्य द्रुह्यतः पुत्रबान्धवान् ।**
**दारा दुहितरो भृत्या विषण्णा नाचरन् प्रियम् ॥ ८ ॥**

एवं **दुश्शीलस्य** स्वधर्मरहितस्य निषिद्धव्यापारकर्तुर्वा । **कदर्यस्य** दरिद्रवत् प्रवृत्तस्य, **द्रुह्यतः** पुत्रादीन् प्रति समये अन्नाद्यदानेन द्रोहं कुर्वतः, गृहस्थस्य द्रविणे सत्यपि विहितकुटुम्बपोषणं विना खेदनमेव द्रोह इति भावः । तस्य लुब्धस्य दारादयः **विषण्णाः** मनोव्यथायुक्ताः **प्रियं नाचरन् ॥** ८ ॥

**तस्यैवं यक्षवित्तस्य च्युतस्योभयलोकतः ।**
**धर्मकामविहीनस्य चुक्रुधुः पञ्चभागिनः ॥ ९ ॥**

**यक्षवित्तस्य** यक्षवित्तवत् वित्तं यस्य सः । दानस्वभोगानुपयुक्तवित्तरक्षकस्ये-त्यर्थः । **तस्य एवम** अतिथिपूजाराहित्येन **उभयलोकतः** इहपराभ्याम् । **च्युतस्य** भ्रष्टस्य **धर्मकामविहीनस्य पञ्चभागिनः** पञ्चमहायज्ञभोक्तारः देवादयः **चुक्रुधुः ॥** ९ ॥

देवताकोपप्राप्तं अनिष्टमाह- **तदवध्यानेति ।**

**तदवध्यानविस्रस्तपुण्यस्कन्धस्य भूरिद ।**
**अर्थोऽप्यगच्छन्निधनं बह्वायासपरिश्रमात् ॥ १० ॥**

तस्य= अतिथिपुत्रादिषु स्थितस्य अन्तर्यामिणः अवध्यानेन= अपराधेन विस्रस्तानि = विनष्टाः, पुण्यान्येव स्कन्धः= ग्रीवामूलभागो यस्य, स्कन्धे शाखा वा यस्य तस्य, हे **भूरिद !** बहुप्रद ! उद्धव ! अर्थविनाशस्य अतिदुःखकरत्वमाह- **बह्विति ।** बह्वायासैः परिभ्रमणैः प्राप्त इत्यर्थः । ब्रह्मबन्धोः **अर्थः निधनं** नाशं **अगच्छत् ॥** १० ॥

अर्थनाशप्रकारमाह- **ज्ञातय** इति ।

**ज्ञातयो जगृहुः किञ्चित् किञ्चिद् दस्यव उद्धव ।**
**दैवतः कालतः किञ्चिद् ब्रह्मबन्धोर्नृपार्थिवात् ॥ ११ ॥**

**स एवं द्रविणे नष्टे धर्मकामविवर्जितः ।**
**उपेक्षितश्च स्वजनैश्चिन्तामाप दुरत्ययाम् ॥ १२ ॥**

**दैवतः** दोषेण युक्तात् कालात् अनावृष्ट्यादिनेति भावः । ऋणगृहीतॄणां दारिद्र्य-प्राप्तमूलद्रव्यलयो वा कालतो भवति । नृभिः राजवल्लभैः किंचित् अपहृतम् । यतः धर्मेण कामेन स्वजनैः सह द्रविणोपभोगेन विवर्जितः, अतः स ब्रह्मबन्धुः **चिन्तामाप ।** 'मम दुःखपरिहारः देहावस्थानं च कथं भवेत्' इति **चिन्तामाप ॥** १२ ॥

**तस्यैवं ध्यायतो दीर्घमगादायुस्तपस्विनः ।**
**खिद्यतो बाष्पकण्ठस्य निर्वेदः सुमहानभूत् ॥ १३ ॥**

**एवं** दुःखेन 'देहधारणा कथं स्यात्' इति **ध्यायतः ।** पूर्वजन्मनि **तपस्विनः** भविष्यतो वा । **आयुः दीर्घं** बहुदिन**मगात्** गतानि । **बाष्पयुक्तस्य** गद्गदकण्ठस्य

बन्धुभिरुपेक्षितत्वात् इति भावः । एवं **खिद्यतः** मनोव्यथां प्राप्तस्य **निर्वेदः** वित्तार्जनोपायादौ विरागः ॥ १३ ॥

**स चाहेदमहो कष्टं वृथाऽऽत्मा मेऽनुतापितः ।**
**न धर्माय न कामाय तस्यार्थायास ईदृशः ॥ १४ ॥**

**स** निर्वेदवान्, विरक्तजनं प्रति वा आह- किमिति ? **म आत्मा** मनः अनुतापितः दुःखयुक्तं कृतम्, आत्मा जीवो वा । तद्वचनं दर्शयति- **तस्य** लुब्धस्य **अर्थायासः** अर्थासक्तिः **ईदृशः ।** कीदृशः ? **न धर्माय** धर्मसम्पादनार्थं न प्रवर्तते । **कामाय** कुटुम्बेन सह भोक्तुं **न** प्रवर्तते ॥ १४ ॥

तस्माद् अर्थासक्तिं निन्दते- **कदर्याणामिति ।**

**प्रायेणार्थः कदर्याणां न सुखाय कदाचन ।**
**इह चात्मोपतापाय मृतस्य नरकाय च ॥ १५ ॥**

**कदर्याणां** दरिद्र इवाचरताम् । **अर्थः नरकाय,** वित्तेन धर्माकरणात् निषिद्धकरणाच्चेति भावः ॥ १५ ॥

**यशो यशस्विनां शुभ्रं श्लाघ्ये[1] गुणिनां गुणाः ।**
**लोभः स्वल्पोऽपि तान् हन्ति श्वित्रो रूपमिवेप्सितम् ॥ १६ ॥**

**शुभ्रं** दोषासहचरितं **गुणाश्च** दयादाक्षिण्यधार्मिकत्वादिगुणाश्च **श्लाघ्ये** स्तौमि । अर्थलोभं निन्दते- **तान्** गुणान् **हन्ति** न प्रापयति । **श्वित्रः** श्वेतकुष्टः **ईप्सितम्** अपेक्षणीयं **रूपं** देहकान्तिं इव यथा नाशयति तथा इत्यर्थः ॥ १६ ॥

---

[1] 'श्लाघ्या ये' इति पाठान्तरम् ।

विवेकिनां सौख्यसम्पादकोऽप्यर्थः अविवेकिनां दुःखादिबहुदोषसम्पादक इत्याह- **अर्थस्य साधन** इति ।

**अर्थस्य साधने सिद्ध उत्कर्षे रक्षणे व्यये ।**
**नाशोपभोग आयासस्त्रासश्चिन्ता भ्रमो नृणाम् ॥ १७ ॥**

**नृणां अर्थस्य साधने** सङ्ग्रहे कर्तव्ये आयासादिर्भवति । अर्थस्य सिद्धौ चोरादिभ्यः भयादिः भवति । **उत्कर्षे** आधिक्ये सति 'अर्थमिदं रक्षणीयम्'इति चिन्तादिः भवति । **रक्षणे** कर्तव्ये भ्रमादिः विश्वसनीये अविश्वासादिः भवति । उपभोगादौ चिन्तादिः चित्तह्रासं प्राप्नोति । **व्यये** वेतनप्रदानादौ । एवं दुःखकारणम् अर्थ इति भावः ॥ १७ ॥

किञ्च लुब्धानां वित्तं इह परत्र दुःखकारणसम्पादकमित्याह- **स्तेयमिति ।**

**स्तेयं हिंसाऽनृतं डम्भः कामः क्रोधः स्मयो मदः ।**
**भेदो वैरमविश्वासः संस्पर्धा व्यसनानि च ॥ १८ ॥**

**एते त्रयोदशानर्था ह्यर्थमूला मता नृणाम् ।**
**तस्मादनर्थमर्थाख्यं श्रेयोऽर्थी दूरतस्त्यजेत् ॥ १९ ॥**

अर्थस्य **स्तेयं** चौर्यं वञ्चनया अर्थग्रहणम् । **हिंसा** विक्रयणे अधिकार्थलाभार्थं अजादीनां हिंसा, अर्थग्रहणार्थम् अर्थवतः विषादिना वा हिंसा । **अनृतम्** अर्थलाभार्थं किञ्चिदनृतवचनम् । अर्थवतः वञ्चनया अर्थग्रहणार्थं डम्बाचारादिः । स्वस्मिन् अविद्यमानोत्कर्षप्रदर्शनं डम्बः । **कामः** सदा अर्थरागः । **क्रोधः** अर्थलाभविघटनेन क्रोधो भवति । **स्मयः** अर्थलाभे सति 'मत्सदृशः कः' इति अहङ्कारः । **मदः** मनसः दर्पः ।

द्रविणार्थं चिन्तादिभिः **भेदः** विभागः विरोधो वा । **वैरम्** 'द्रविणं वञ्चत' इति पित्रादौ अविश्वासः, **संस्पर्धा** वाणिज्यादौ । **व्यसनानि** समये भोजनादि विना द्रविणार्थम् आतपादौ सञ्चारव्यसनादिः भवति । **एते त्रयोदश** बहवः **अनर्थाः** अर्थासक्तिजन्याः । **तस्मात्** अनर्थमूलकारणत्वादर्थस्य 'अर्थः' इति आख्या= व्यपदेशः यस्य तम् **अनर्थं** विवेकाभावे अनर्थकारणं **श्रेयोर्थी** नित्यसौख्यार्थी **दूरतः त्यजेत्** । 'अर्थो मे भूयात्' इति आदरेण न स्मरेदित्यर्थः ॥ १९ ॥

अर्थासक्त्या सर्वे भेदादयः अर्थदोषाः मया अनुभूता इत्याह- **भिद्यन्ते भ्रातरः** इति ।

**भिद्यन्ते भ्रातरो दाराः पितरः सुहृदस्तथा ।**
**एकयाऽर्थेहया[1] सद्यः सर्वे चाप्यरयः कृताः ॥ २० ॥**

**अर्थेहया** आसक्त्या **भिद्यन्ते** विरुद्धसङ्कल्पा भवन्ति इत्यर्थः । **सर्वे सद्यः** द्रविणासक्तिकाले **अरयः कृताः**, स्वस्वभागापेक्षयेति ॥ २० ॥

**अर्थेनाल्पीयसा ह्येते संरब्धा दीप्तमन्यवः ।**
**त्यजन्त्यसून् वृथा घ्नन्ति सहसोत्सृज्य सौहृदम् ॥ २१ ॥**

**एते** अर्थासक्ता जना **अर्थेन** अर्थलाभार्थं **संरब्धाः** क्रोधयुक्ता **दीप्तमन्यवः** निष्ठुरवचनादिना अभिवृद्धक्रोधाः स्वधर्मम् आश्रित्य **घ्नन्ति सौहृदम्** स्नेहम् **उत्सृज्य** स्पृधा= स्पर्धया **सहसा** शीघ्रम् इदम् अकार्यम् इत्यनालोच्य इति भावः ॥ २१ ॥

अभीष्टसाधनेन मनुष्यदेहेन द्रविणासक्त्या अनिष्टं न संपादनीयमित्याह- **लब्ध्वा** इति ।

---

[1] 'एकयाऽर्थेच्छया' इति पाठान्तरम् ।

**लब्ध्वाऽप्यमरप्रार्थ्यं**[1] **मानुष्यं तद् द्विजाग्र्यताम् ।**
**तदनादृत्य ये सर्वं घ्नन्ति यान्त्यशुभां गतिम् ॥ २२ ॥**

**अमरप्रार्थ्यम्** तत्वदेवतादिभिः प्रार्थ्यम् । पशुदेहापेक्षया स्वधर्मज्ञानसाधनत्वात् प्रार्थ्यमिति भावः । **तत्** तत्र मनुष्यदेहे **द्विजाग्र्यतां** उपनयनादि च लब्ध्वा **तत्** मद्धर्मज्ञानसाधनं मनुष्यदेहम् **अनादृत्य ये सर्वं** देहेन प्राप्यमाणम् अपवर्गसाधनं धर्मज्ञानादिकं **घ्नन्ति** न प्राप्नुवन्ति ॥ २२ ॥

द्रविणादिविषयापेक्षया ज्ञानोपयुक्तमनुष्यदेह एवापेक्षणीय इत्याह- **स्वर्गेति ।**

**स्वर्गापवर्गयोर्द्वारं प्राप्य लोकमिमं पुमान् ।**
**द्रविणे को विषज्जेत मर्त्योऽनर्थस्य धामनि ॥ २३ ॥**

स्वर्गस्य= नित्यसुखस्य अपवर्गस्य= दुःखसम्बन्धपरिहारस्य **द्वारं** प्रथमकारणं **इमं** 'लोक्यते श्रीहरिः अनेन' इति लोकः तं दृढकरणयुक्तदेहं **प्राप्य ।** तस्मात् मुमुक्षुणा द्रविणं परित्याज्यम् इति भावः ॥ २३ ॥

गृहस्थेन धर्मज्ञानार्थमेव धनं सम्पादनीयम् । अन्यथा नेत्याह- **देवर्षीति ।**

**देवर्षिपितृभूतानि ज्ञातीनन्यांश्च भागिनः ।**
**असंविभज्य चात्मानं यक्षवित्तः पतत्यधः ॥ २४ ॥**

देवर्षिपितॄन् प्रति **आत्मानं** प्रति च वित्तं **असंविभज्य** वित्तेन धर्मज्ञानदेहकरणादिकमकृत्वा यक्षस्येव भोगाद्यनर्हं वित्तं यस्य सः । **अधः पतति** धर्मलोपेन, पूर्वोक्तवित्तदोषैश्चेति भावः ॥ २४ ॥

---
[1] 'लब्ध्वा जन्मान्तरैः प्रार्थ्यं' इति पाठान्तरम् ।

यौवने स्वधर्माः कर्तव्याः । अर्थासक्त्या वृथा कालक्षेपो न कर्तव्य इत्याह- **व्यर्थयेति** ।

**व्यर्थयाऽर्थेहया वित्तं प्रमत्तस्य वयो बलम् ।**
**कुशलाय न सिध्यन्ति जरठः किन्नु साधयेत् ॥ २५ ॥**

**व्यर्थया** धर्मज्ञानादौ अनुपयुक्तया **अर्थेहया** धनाकाङ्क्षया प्राप्तं **वित्तं**, व्यर्थार्थाकाङ्क्षासहितं **बलं वयः** यौवनं **प्रमत्तस्य** अर्थप्राप्त्येति भावः । एतानि **कुशलाय, जरठः**[1] **किं** नु धर्मज्ञानादिकं **साधयेत्** । न किमपि साधयेदित्यर्थः । तस्मात् कौमारे स्वधर्मज्ञानादयः सुग्राह्या इति भावः ॥ २५ ॥

ननु अर्थासक्तौ सत्यां दुःखप्राप्तिं जानन्ति वा ? इति जिज्ञासायामाह- **तस्मादिति** ।

**तस्मात् संक्लिश्यते विद्वान् व्यर्थयाऽर्थेहयाऽसकृत् ।**
**कस्यचिन्मायया नूनं लोकोऽयं सुविमोहितः ॥ २६ ॥**

**विद्वान्** 'अर्थः दुःखादिदोषहेतुः' इति विद्वानपि **अयं लोकः** जनः **कस्यचित्** लोकविलक्षणस्य महापुरुषस्य **मायया** अघटितघटनाशक्त्या कर्मप्रेरकेच्छया वा **सुविमोहितः** सन् **असकृत्** पुनः **अर्थेहया संक्लिश्यते** अत्यन्तं दुःखवान् भवति ॥ २६ ॥

ऐहिकाकांक्षां परित्यज्य विरागज्ञानभक्तिसङ्ग्रहः कर्तव्य इत्याह- **किं धनैरिति** ।

**किं धनैर्धनदैर्वा किं कामैर्वा कामदैरुत ।**
**मृत्युना ग्रस्यमानस्य कर्मभिर्वेति जन्मभिः ॥ २७ ॥**

---

[1] अत्र 'वृद्ध्यादिरहितः' इत्यधिकं पठ्यते मूलपुस्तके । 'जरठः जरासङ्गतः' इति तु सुधीन्द्रतीर्थीये ।

**कामैः** विषयैः । काम्यकर्मभिः । श्रीहरिभक्तिहीनजन्मभिः । **किम्?** सर्वं विफलमिति भावः ॥ २७ ॥

स्वात्मानं श्लाघते- **नूनमिति** ।

**नूनं मे भगवांस्तुष्टः सर्वदेवमयो हरिः ।**
**येन नीतो दशामेतां निर्वेदश्चात्मनः प्लवः ॥ २८ ॥**

**येन** भगवता । **एतां दशां** धनमदापगमावस्थाम् । अहं **नीतः** ॥ २८ ॥

इष्टप्राप्तिश्च जाता इत्याह- **सोऽहमिति** ।

**सोऽहं कालावशेषेण शोषयिष्येऽङ्गमात्मनः ।**
**अप्रमत्तोऽखिलार्थेषु यदि स्यां सिद्ध आत्मनि ॥ २९ ॥**

**सोऽहम्** एतावत्पर्यन्तं स्वार्थे प्रमत्तोऽहम् । **कालावशेषेण** उर्वरितवयसा । **अखिलार्थेषु** स्वधर्मेषु । **अप्रमत्तः** सन् **आत्मनः अङ्गं** स्वदेहम् । **यदि शोषयिष्ये** व्रतैः शोषणं करिष्ये, तर्हि **आत्मनि** अन्तर्यामिणि । **सिद्धः स्यां** भक्तिज्ञानादिसिद्धो भविष्यामि । तस्मात् श्रवणादिव्रतानि मया कर्तव्यानि इति भावः ॥ २९ ॥

**तत्र मामनुमोदेरन् देवास्त्रिभुवनेश्वराः ।**
**मुहूर्तेन ब्रह्मलोकं खट्वाङ्गः समसाधयत् ॥ ३० ॥**

**तत्र** परमात्मसाधनकर्मणि **त्रिभुवनेश्वराः** तत्वदेवा **मां** प्रति **अनुमोदेरन्** प्रेरकाश्च भविष्यन्ति इति भावः । ननु वयसः स्वल्पत्वात् कथं महाफलसिद्धिः? इति आशङ्क्याह- **मुहूर्तेनेति** । **ब्रह्मलोकं** ब्रह्मापरोक्ष्यं विष्णुलोकमिति वा ॥ ३० ॥

**श्रीभगवानुवाच-**

**इत्यभिप्रेत्य मनसा ह्यावन्त्यो द्विजसत्तमः ।**

**उन्मुच्य हृदयग्रन्थिं शान्तो भिक्षुरभून्मुनिः ॥ ३१ ॥**

वर्णितं अर्थं **मनसा अभिप्रेत्य** अवधार्य । **हृदयग्रन्थिं** मनसः बहुविषयरागबन्धम् । **उन्मुच्य** अवधूय । **शान्तः** श्रीहरिन्यस्तचित्तः सन् **भिक्षुः** सन्यासी **अभूत्** । **मुनिश्च** श्रवणाद्यासक्तश्च अभूत् ॥ ३१ ॥

**स चचार महीमेतां संयतात्मेन्द्रियानिलः ।**

**भिक्षार्थं नगरग्रामानसङ्गोऽलक्षितोऽविशत् ॥ ३२ ॥**

**सः** भिक्षुः **चचार** बहुभिः गुरुभिः विविधज्ञानलाभार्थमिति भावः । **असङ्गः** मृष्टान्नाद्यपेक्षारहितः, **अलक्षितः** ज्ञानित्वेन अज्ञातः, स्वगुणगूहनेनेति भावः **अविशत्** ॥ ३२ ॥

**तं वै प्रवयसं भिक्षुमवधूतमसज्जनाः ।**

**दृष्ट्वा: पर्यभवन् भद्र बह्वीभिः परिभूतिभिः ॥ ३३ ॥**

**प्रवयसं भिक्षुम् अवधूतम्** अभ्यङ्गाद्यभावेन मलिनम् आश्रयादिरहितमिति भावः । हे **भद्र** ! उद्धव ! **बह्वीभिः** बहुभिः **परिभूतिभिः** तिरस्कारैः **पर्यभवन्** तं तिरश्चक्रुः ॥ ३३ ॥

विविधतिरस्कारानाह- **केचित् त्रिवेणुमिति** ।

**केचित् त्रिवेणुं जगृहुरेके पात्रं कमण्डलुम् ।**

**पीठं चैकेऽक्षसूत्रं च कन्थां चीराणि केचन ॥ ३४ ॥**

**प्रदाय च पुनस्तानि दर्शितान्याददुर्मुनेः ।**
**अन्नं च भैक्षसम्पन्नं भुञ्जानस्य सरित्तटे ॥ ३५ ॥**

**त्रिवेणुं** परमहंसव्यतिरिक्तस्य त्रिवेणुरस्तीति भावः । **पात्रं** देवस्य अर्घ्योदकपात्रम्, **कमण्डलुं** पानाद्यर्थं **पात्रं, अक्षसूत्रं** जपमालाम्, **चीराणि**[1] अन्यानि वस्तूनि । दण्डाद्यपहर्तॄणां चेष्टामाह- कन्थादीनि आदाय तिरोहितानि कृत्वा न दर्शितानि, **प्रदाय पुनः आददुः** ॥ ३५ ॥

**मूत्रयन्ति च पापिष्ठा निष्ठीवन्त्यस्य मूर्धनि ।**
**यतवाचं वाचयन्ति ताडयन्ति न वक्ति चेत् ॥ ३६ ॥**

**तर्जयन्त्यपरे वाग्भिः स्तेनोऽयमिति वादिनः ।**
**बध्नन्ति रज्ज्वा तं केचिद् बध्यतां वध्यतामिति ॥ ३७ ॥**

**क्षिपन्त्येकेऽवजानन्त एष धर्मध्वजः शठः ।**
**क्षीणवृत्तिरिमां[2] वृत्तिमगृहीत् स्वजनोज्झितः ॥ ३८ ॥**

**निष्ठीवन्ति** लालां क्षिपन्ति । **स्तेनः** द्रव्यचोरः 'बध्यताम्' इति वादिनः **बध्नन्ति** क्षिपन्ति निष्ठुरवचनैः तिरस्कुर्वन्ति, **अवजानन्तः** अवमानं कुर्वन्तः । **धर्मध्वजः** धर्मप्रदर्शकः **शठः** वञ्चकः **क्षीणवृत्तिः** न जीवनोपायो यस्य सः, एतादृशः सन् **इमां वृत्तिं** भिक्षया जीवनोपायं **अगृहीत्** ॥ ३८ ॥

**अहो एष महासारो धृतिमान् गिरिराडिव ।**
**मौनेन साधयत्यर्थं[3] बकवद् दृढनिश्चयः ॥ ३९ ॥**

---

[1] 'वृक्षस्य त्वचः' इत्यर्थः । [2] 'क्षीणवित्त इमां' इति पाठान्तरम् । [3] 'मौनेनोत्पादयत्यर्थं' इति पाठान्तरम् ।

**इत्येके विहसन्त्येनमेके दौर्वादयन्ति च ।**

**तं बबन्धुर्निरुरुधुर्यथा क्रीडनकं द्विजम् ॥ ४० ॥**

**धृतिमान्** स्वसङ्कल्पादचलः, मनःस्थैर्यसम्पन्नः, **महासारः** महाबुद्धिबलोपेतः द्विजस्य अवध्यत्वाद् एते मां किं करिष्यन्ति? इति दृढो निश्चयो यस्य, एवंविधः सन् **अर्थं** स्वकार्यं भिक्षादि **मौनेन** कलहादिकं विना **साधयति । बकवत्** बकस्य यथा मनश्चापलं विना वर्तनं एवंविधः **उत्पादयति** दर्शयति । **क्रीडनकं** लीलार्थम् आनीतं वनचरं यथा तथा **निरुरुधुः,** वारकाद्यभावात् ततः **तं बबन्धुः ॥** ४० ॥

एवमपि ज्ञानदार्ढ्यात् तस्य विकारो नोत्पन्न इत्याह- **एवं स** इति ।

**एवं स भौतिकं दुःखं दैविकं दैहिकं च यत् ।**

**भोक्तव्यमात्मनो दिष्टं प्राप्तं प्राप्तमबुध्यत ॥ ४१ ॥**

**भौतिकं** भौतिकप्राणिभिः प्राप्तं, **दैहिकं** कन्थापहारेण प्राप्तं शीतवायुप्राप्तं, **दैविकं** देवैः प्राप्तं दैहिकशिरोवेदनादिना अन्नाद्यपहारप्राप्तोपवासादिदुःखं वा प्राप्तं, पुनःपुनः प्राप्तं **दुःखम् आत्मनः भोक्तव्यं दिष्टं** पूर्वकर्मजन्यम् इति अमन्यत ॥ ४१ ॥

**परिभूत इमां गाथामगायत नराधमैः ।**

**पातयद्भिः स्वधर्मस्थो धृतिमास्थाय सात्विकीम् ॥ ४२ ॥**

**पातयद्भिः** स्वधर्मात् चालयद्भिः **परिभूतः** तिरस्कृतोऽपि **सात्विकीं** सत्वगुणप्रवृद्धां **धृतिं** मनस्थैर्यं **आस्थाय** दृढं प्राप्य **इमां** वक्ष्यमाणां **गाथां** संसारे दुःखकारणापादकं प्रबन्धं **अगायत ॥** ४२ ॥

**भिक्षुरुवाच-**

**नायं जनो मे सुखदुःखहेतुर्न देवताऽऽत्मा ग्रहकर्मकालाः ।**
**मनः परं कारणमामनन्ति संसारचक्रं परिवर्तयेद् यत् ॥ ४३ ॥**

चेतनस्य नीचताविकारहेतोः दुःखस्य मुख्यकारणं **मनः,** तदन्येऽपि परिदृश्यमाना जनादयः स्वेच्छया न दुःखकारणम्, सूर्यादिग्रहा अपि न दुःखकारणम् कर्म= अदृष्टम् अचेतनं न स्वतः व्यापारवत्, एवम् **आत्मा** देहोऽपि कालोऽप्येवं परतन्त्रः न स्वतः कारणम् । उक्तेषु जनादिषु मध्ये दुःखादे**र्मनः परं कारणं** प्रधानकारणम् । एतदुपपादयति- **यद्** मनः संसाराख्यं स्थूलदेहबन्धचक्रं **परिवर्तयेत्** इति आगमाः **आमनन्ति ॥** ४३ ॥

मनसः संसारसंपादकत्वं विवृणोति- **मनो गुणानिति ।**

**मनो गुणान् वै सृजते बलीयस्ततश्च कर्माणि विलक्षणानि ।**
**शुक्लनि कृष्णान्यथ लोहितानि तेभ्यः सवर्णा गतयो भवन्ति ॥ ४४ ॥**

**बलीयः** व्यापारे सक्तं देवतानुप्रवेशेनेति भावः । सूक्ष्मं **मनः गुणान्** प्राप्य **सृजते** स्वस्य सात्विकादिविशिष्टाकारान् करोति । **ततः** मनसो विशिष्टाकारैः **शुक्लानि** सात्विकानि **कृष्णानि** तामसानि **लोहितानि** राजसानि कर्माणि भवन्ति । अहङ्कारदिपुरःसरं विषयासक्त्या भवन्ति इति भावः । **तेभ्यः** द्विविधकर्मेभ्यः **सवर्णाः** सदृशाः **गतयः** सुरनरतिर्यगादयः देहाः प्राप्या भवन्ति इत्यर्थः ॥ ४४ ॥

परमात्मा सर्वदेहगतोऽपि जीववत् लेपो न भवति इत्याह- **अनीह** इति ।

**अनीह आत्मा मनसः समीहितं हिरण्मयो मत्सख उद्विचष्टे ।**
**मनः स्वलिङ्गं परिगृह्य कामान् जुषन् निबद्धो गुणसङ्गतोऽसौ ॥ ४५ ॥**

**स्वलिङ्गं** स्वस्य लिङ्गं= देहभूतं **मनः परिगृह्य** स्वीकृत्य ईश्वरानुग्रहं सम्पाद्य मनोनिरसनं अकृत्वा स्थित इति भावः । **असौ** स्थूलदेहोपेतः जीवः **गुणसङ्गतः** रजस्तमस्सम्बन्धात् मनस इति भावः । **गुणसङ्गतः** विषयासक्त्या **कामान्** विविध-विषयान् **जुषन्** निबद्धो भवति । विविधदुष्कर्मभिः बद्धो भवति । **मत्सखः** मम परमोपकारी, **आत्मा** जीवान्तर्यामी देहान्तर्यामी च **मनसः** गुणविकृतस्य **समीहितं** व्यापारं जीवस्य विषयासक्त्या संसारजनकत्वलक्षणम् **उद्विचष्टे** स्वत एव सम्यक् पश्यति । स्वयं **हिरण्मयः** पूर्णसुखः यतः अतः **अनीहः** विषयाभिलाषाहीनः नित्यमुक्त इति भावः ॥ ४५ ॥

मनसः संसारकारणेषु यथा प्राथम्यम् एवं मुक्तिकारणेष्वपि प्राधान्यमित्याह- **दानमिति ।**

**दानं स्वधर्मो नियमो यमश्च श्रुतानि कर्माणि च सद्व्रतानि ।**
**सर्वे मनोनिग्रहलक्षणान्ताः परो हि योगो मनसः समाधिः ॥ ४६ ॥**

**स्वधर्मः** वर्णाश्रमधर्मः **नियमः श्रुतानि** वेदादिश्रवणानि, **कर्माणि** यज्ञाः **सद्व्रतानि** एकादश्यादिवैष्णवव्रतानि एते धर्मादयः **सर्वे** मनोनिग्रहः एव परमात्मनि विन्यस्ततैव लक्षणं= स्वेषु साधनत्वज्ञापकमिति अन्तः= निर्णयो येषां ते तथाभूताः । मनोनिग्रहे सति धर्मादयः मुक्तिसाधनानीति निश्चयवन्तः । एतानि मुक्तिकारणानीति भावः ।

अतः **मनसः समाधिः** परमात्मनि अप्रमत्तेन स्थितिः । **परः** उत्तमः **योगः** मुक्त्युपायः, न श्रुतादय[1] इति भावः ॥ ४६ ॥

मनस्समाधेः प्राथम्यमुपपादयति- **समाहितमिति** ।

**समाहितं यस्य मनः प्रशान्तं दानादिभिः किं वद तस्य कृत्यम् ।**
**असंयतं यस्य मनो विनश्येद् दानादिभिश्चेदपरं किमेभिः ॥ ४७ ॥**

**यस्य** चेतनस्य **मनः समाहितं** विषयेभ्यो व्यावृत्तं सत् **प्रशान्तं** परमात्मन्येव अप्रयत्नेन स्थितं अथवा यस्य प्रशान्तं रागद्वेषादिविधुरं **मनः समाहितम्** परमात्मनि अप्रयत्नेन स्थितम् तस्य चेतनस्य **दानादिभिः** अपरं **कृत्यं** साध्यं **किं** ? न किमपि, दानादीनां स्वतो मुक्त्युपायत्वं नास्तीत्यर्थः । **यस्य मनः असंयतं** परमात्मन्यसक्तं **विनश्येच्चेत्** रागादिदोषकलुषितं चेत् **एभिः दानादिभिः किं** ? न किमपि **अपरं** कृत्यं मुक्तिलक्षणं नास्तीत्यर्थः ॥ ४७ ॥

दानाद्यचेतनविवक्षया मनसः प्राधान्यमुक्त्वा चेतनविवक्षयाऽपि मनोनियामक-देवस्य प्राधान्यमाह- **मनो वश** इति ।

**मनोवशेऽन्ये हि भवन्ति देवा मनो हि नान्यस्य वशं समेति ।**
**भीमो हि देवः सहसः सहीयान् नात्याविशत् तत् स हि देवदेवः ॥ ४८ ॥**

**अन्ये** विष्णु-श्री-ब्रह्म-सरस्वतीभ्यः अन्ये तत्त्व**देवाः मनो** नियामकरुद्र**वशे** भवन्ति । राजन् ! **भीमो देवः** सर्वभयङ्करः रुद्रः **नान्यस्य वशं समेति** । कुतः? इत्यत आह- **सहसः** सहनशक्त्युपेतात् **सहीयान्** सहनशक्तिमान् । **सः** सात्विकमनो-नियामको रुद्रः **देवदेवः** सर्वदेवोत्तमो हि । अतः तं मनोनियामकम् अन्यः न

[1] 'केवलश्रुतादयः' इति स्यात् ।

**अत्याविशत्** नातिक्रान्तवान् इत्यर्थः । तस्माद् आत्मज्ञानार्थं रुद्रानुग्रहः सम्पादनीय इति भावः ॥ ४८ ॥

यथा मनोनियामकस्य अनुग्रहः सम्पादनीयः एवं मनोनियामकस्य जयोऽपि सम्पादनीय इत्याह- **तं दुर्जयमिति** ।

**तं दुर्जयं शुत्रुमसह्यवेगमरुन्तुदं तं ह्यविजित्[1]य केचित् ।**
**कुर्वन्त्यसद्धिग्रहमत्र मर्त्यैर्मित्रैरुदासीनरिपुं विमूढाः ॥ ४९ ॥**

**असह्यवेगम्** अनिवार्यवेगशक्त्युपेतमित्यर्थः । अत एव **दुर्जयम्** विषयेभ्यः निवर्त्य वशीकर्तुम् अशक्यम् **अरुन्तुदम्** इव मर्मप्रदेशं विभिद्य दुःखजनकपुरुषमिव[2] बहुदुःखजनकविषयासक्तिप्राप्तदुष्कर्मपुरस्सरमिति भावः । **शत्रुं** शासितारं वा **तं** तादृशं मनोनियामकं तामसम् । ननु मनसो दुर्जयत्वे तामसत्वे वा कथं मुनीनाम् ईश्वरध्यानादि भवेत् ? इत्याशङ्क्याह- उदासीनाः= विषयासक्त्या ईश्वरध्यान उपेक्षकाः तेषामेव रिपुः, विषयविरक्तानां तु न । **केचिद्** रागिणः **विमूढाः** मनोदोषज्ञानरहिताः मनः **अविजित्य मर्त्यैः मित्रैवा** सह **असतः** स्वाधीनतया अविद्यमाने विषयजाते तत्सिद्ध्यर्थ-मित्यर्थः । विग्रहं= विरोधं कुर्वन्ति । पूर्वश्लोके 'देवः' इति अत्र 'शत्रुम्' इति व्यपदेशः सात्विकतामसमनोविवक्षया युज्यत इति भावः ॥ ४९ ॥

अहङ्काररूपमनसा प्राप्तं चेतनस्य अनिष्टमाह- **देहमिति** ।

**देहं मनोमात्रमिदं गृहीत्वा ममाहमित्यन्धधियो मनुष्याः ।**
**एषोऽहमन्योऽयमिति भ्रमेण दुरन्तपारे तमसि भ्रमान्ति ॥ ५० ॥**

---

[1] 'तत्र विजित्य' इति पाठान्तरम् । [2] अत्र 'दातुः' इत्यधिकं मूलपुस्तके ।

**मनोमात्रम्** अभिमानरूपमनसा निर्मितं कर्मपुरस्सरमिति भावः । **इदं** देहं **गृहीत्वा** प्राप्य 'एतद्धनादिकं ममैव, अहमेव सर्वव्यापारकर्ता' इति भ्रमेण **अन्धधियः** आवृतसम्यग्ज्ञानाः, 'सौन्दर्योपेतदेहः अहम्' इति अभेदभ्रमेण । सात्विकानां देहाभेद-भ्रमाभावेऽपि तामसानाम् एवं भ्रमोऽस्तीति भावः । पशुदेहाद्भिन्नदेहः अहमिति भ्रमेण तमज्ञात्वा ईश्वरतद्भक्तापराधं कृत्वा इति भावः । **भ्रमन्ति** अन्धे तमसि पतन्तीत्यर्थः । सात्विकानां तु देहे चेतनात् स्फुटतरविवेकग्रह इति भावः ॥ ५० ॥

ननु चेतनतद्देहव्यापाराभ्यां स्वस्मिन् दुःखोत्पत्तिदर्शनात् कथं तस्मिन् कोपाद्य-नुदयः ? इत्याशङ्क्याह- **कतमाय कुप्येदिति ।**

**जनोऽस्य हेतुः सुखदुःखयोश्चेत् किमात्मनश्चात्र हि भौमयोस्तत् ।**
**जिह्वां क्वचित् सन्दशति स्वदद्भिस्तद्वेदनायां कतमाय कुप्येत् ॥ ५१ ॥**

जन इत्यादिना **अस्य** देहाभिमानिनः **जनः** जीवः देहश्च दुःखादेः **हेतुश्चेत्,** अप्रधानकारणमिति पक्षेऽपि **अत्र** जडचेतनयोर्मध्ये तत् दुःखसुखादिकम् **भौमयोः** अन्नपरिणतयोः तामससात्विकमनसोः सतोरेव दुःखादि भवति । सूक्ष्ममनसि दुःखा-भावात् 'भौमयोः' इति व्यपदेशः । 'आत्मनः किम्' इत्याक्षेपः । देहाभिमानरहितस्य चेतनस्य दुःखसुखाभ्यां न विकार इत्यर्थः । मनसः सत्वभागतमोभागयोः कदाचित् पीड्यत्वं पीडकत्वं च पीड्यपीडकत्वेन प्रतीयमानयोः चेतनयोः मनःसम्बन्धे सत्येव पीड्यपीडकभावः, न केवलयोरिति भावः । अथापि अभिमानवतः स्यात् इत्याशङ्क्य तस्यापि अनुचितः कोप इत्याह- **जिह्वां** इति । स्वावयवे यथा कोपो न क्रियते तथा अभिमानवताऽपि जनेषु कोपो न कार्य इति भावः ॥ ५१ ॥

**दुःखस्य हेतुर्यदि देवताऽस्तु किमात्मनस्तत्र विकारयोस्तत् ।**
**यदङ्गमङ्गेन विहन्यते क्वचित् क्रुध्येत कस्मै पुरुषः स्वदेहे ॥ ५२ ॥**

**देवता** दुःखादेः **हेतुर्यदि** तर्हि अस्तु । अथापि विकारयोः सात्त्विकतामसमनोविकारयोः अभिमानिनोः देवतयोः सकाशात् जायमानं **तत्** सुखदुःखादिकं **तत्र** अभिमानितदन्ययोर्मध्ये **आत्मनः किं?** अभिमानरहितस्य न किमपि नीचतादि वैरूप्यम् इत्यर्थः । क्वचित् अनवधानसमये स्वदेहे संश्लिष्टं यदंशो तदन्येन अङ्गेन विहन्यते चेत् कस्मै क्रुध्येत? किमङ्गे क्रोधः? उत स्वस्मिन्? कस्मिंश्चिदपि न कोपः । एवं देवेऽपि भक्त्या भजनीये कोपो न कर्तव्य इति भावः ॥ ५२ ॥

यद्यपि मनः चेतनसहकृतं दुःखकारणम् तथापि तद्दुःखं चेतनस्य नास्तीत्याह- **आत्मा यदि स्यादिति ।**

**आत्मा यदि स्यात् सुखदुःखहेतुः किमन्यतस्तत्र निजः स्वभावः ।**
**न ह्यात्मनोऽन्यद् यदि तन्मृषैव[1] क्रुध्येत कस्मै न सुखं न दुःखम् ॥ ५३ ॥**

**आत्मा** मनः **आत्मा** मनोविशिष्टः चेतनो वा सुखदुःखहेतुः स्यात् इति **यदि** तदस्तु । तद्दुःखे **किमन्यतः** अन्यत् अभिमानलक्षणं किं हेतुः? **निजःस्वभावः** चेतनस्वभावः किं हेतुः? मनोमात्राद्दुःखस्य अनुत्पत्तेरिति भावः । तत्र अभिमानस्य दुःखकारणत्वपक्षे आत्मनः अभिमानरहितस्य हि दुःखेन विकारो न हि । 'निजस्वभावः दुःखकारणम्' इति च पक्षः न हि । सैव कुतः? इत्यत आह- **सुखमिति ।** अत्रस्थनकारस्य हीत्यनेन पूर्वेण सम्बन्धः । सुखस्वरूपः चेतनः सुखस्वभावे स्वस्मिन् दुःखविकारजनकत्वस्वभावः विरुद्ध इति भावः । ननु 'अहं

---

[1] 'तन्मृषा स्यात्' इति पाठान्तरम् ।

दुःखी' इति स्वस्मिन् दुःखप्राप्तविकारः अनुभूयते ? इत्याशङ्क्याह- **मृषेति । अन्यत्** अन्यस्य अभिमानविशिष्टाद्भिन्नस्य चेतनस्य यदीदं दुःखेन विकारः **मृषा** स्वाभाविको नास्तीत्यर्थः । अभिमानवतः सा प्रतीतिरिति भावः । अथवा **अन्यत्** स्वभावादन्यत् दुःखं मृषा चेतने नास्तीत्यर्थः ॥ ५३ ॥

अभिमानवतः दुःखेन विकारः, तद्रहितस्य न दुःखविकार इति दृढयितुं पुनश्चेतनस्य दुःखादिकं नास्तीत्याह- **ग्रहा** इति ।

**ग्रहा निमित्तं सुखदुःखयोश्चेत् किमात्मनो जस्य जनस्य ते वै ।**
**ग्रहैर्ग्रहस्यैव भवन्ति पीडाः क्रुध्येत कस्मै पुरुषस्ततोऽन्यः ॥ ५४ ॥**

गृह्यमाणत्वादभिमन्यमानत्वात् ग्रहो देहः, सुखादेर्निमित्तं चेत्, अस्तु । **जनस्य** न जायत इति जनः, वर्णविपर्ययः । तस्याविशिष्टस्य आत्मनः[1] सुखदुःखे किं ? इत्याक्षेपः, न स्त इत्यर्थः । किन्तु जस्येति पदविभागः, **जस्** य देहेन जातस्य अभिमानविशिष्टस्य भवतः इत्यर्थः । आत्मग्रहैः= देहैः **ग्रहस्य** देहग्रहणरूपस्य मनसः सत **एव पीडाः** दुःखादयः आत्मनि भवन्ति । **ततो** अभिमानविशिष्टादन्यः चेतनः दुःखेन विकाररहितः इति भावः । **कस्मै क्रुध्येत** स्वात्मानं प्रति सर्वस्यापि अकिञ्चित्करत्वादिति भावः ॥ ५४ ॥

अहङ्काराद्यभिमानरहितस्य दुःखेन विकारो नास्तीत्येतत् दृढयति- **कर्मास्तु** इति ।

**कर्मास्तु हेतुः सुखदुःखयोर्वै किमात्मनस्तद् हि जडेऽजडत्वे ।**
**देहे स्ववित् पुरुषोऽयं सुपर्णः क्रुध्येत कस्मै न हि कर्म मूलम् ॥ ५५ ॥**

---

[1] अत्र 'तेषु च' इत्यधिकं पठ्यते कोशे ।

**सुखदुःखयोः कर्म हेतुर्वै अस्तु ।** तथा दुःखं जडे मनसि सत्येव जायते । **आत्मनः** चेतनस्य अजडत्वे सति दुःखं किं भवेत्? न भवेदित्यर्थः । तत्र निमित्तं **स्वविदिति ।** देहे स्थित्वा **स्ववित्** स्वतन्त्रपरमात्मनिश्चयवान् सन् **सुपर्णः** स्वरूपसुखभोक्तृपुरुषः अभिमानरहित इति भावः । कस्मै क्रुध्येत? ननु कर्मप्रेरके कोपो भवेत्? इत्याशङ्क्याह- **न हि कर्मेति । कर्ममूलं** कर्मकर्ता स्वयं कोपविषयः इत्यर्थः । **कर्म** तु **न हि** कोपविषयो न इत्यर्थः ॥ ५५ ॥

अभिमानरहितचेतनापेक्षया अभिमानी कोपविषय इत्याह- **कालोस्मीति ।**

**कालोऽस्तु हेतुः सुखदुःखयोश्चेत् किमात्मनस्तत्र तदात्मनोऽसौ ।**
**नाग्नेर्हि तापो न हिमस्य तत् स्यात् क्रुध्येत कस्मै न परस्य बोद्धुः ॥ ५६ ॥**

**सुखदुःखयोः कालः** कारणं **चेदस्तु तत्र** देहदेहस्थयोर्मध्ये **तदात्मनः** कालाधीनस्य देहस्य **तत्** किं दुःखं भवेत्? न भवेदेव । जडत्वादिति भावः । तत्र दृष्टान्तः- अग्नेः सकाशात् **हिमस्य तापः** किं भवति? न भवति एवं देहस्यापि । **बोद्धुः** देहे जीवादेः स्वामिबोद्धुः **परस्य** अभिमानिभिन्नस्य **आत्मनः** चेतनस्य **तद् दुःखं न** स्यादेव तस्य निजसुखभोक्तृत्वादिति भावः । तस्मादभिमानं विहाय कस्मै क्रुध्येत? अभिमानिनः दुःखं भवति इति भावः । **परस्य** परमात्मनः तत्र देहस्थितस्य दुःखं न इति वा अर्थः ॥ ५६ ॥

यदि देहसंबन्धेन जीवस्य दुःखं तर्हि तत एव परमात्मनोऽन्तर्यामिणः दुःखं प्रसज्यते? इत्याशङ्क्याह- **केन चिदिति ।**

**न केनचित् क्वापि कथञ्चनास्य द्वन्द्वोपरागः परतः परस्य ।**
**यथाऽऽत्मनः संसृतिरूपिणः स्यादेवं प्रबुद्धो न बिभेति भूतैः ॥ ५७ ॥**

**परस्य** सर्वकल्याणगुणपूर्णस्य द्वन्द्वोपरागसहितदुःखसंबन्धः **परतः** करणाद्धर्मादेः सकाशात् **केनचित्** जनेन **क्वापि** कदापि **कथञ्चन** तपःसामर्थ्यप्राप्तशापादिना वा **न** स्यादेव । **द्वन्द्वोपरागः** दुःखादिसंबन्धप्राप्तविकारः **आत्मनः** मनसः सत्त्वे एव **संसृतिरूपिणः** देहाभिमानादिना बद्धस्य **आत्मनो** जीवस्य **यथा** भवति **परस्य** अभिमानि-विलक्षणस्यापि तथा न, मनसो अभावादिति भावः । एवम् उक्तप्रकारेण **प्रबुद्धः** जानन् **भूतैः न बिभेति** भिक्षुः ॥ ५७ ॥

अयं द्वन्द्वसहिष्णुः सन् विरागातिशयेन सहितया भक्त्या अभिमानरहितया "परमात्मा सर्वमेव करोति" इत्यवधारयतीत्याह- **एतां** इति ।

**एतां समास्थाय परमात्मनिष्ठामध्यासितां पूर्वतनैर्महर्षिभिः**[1] **।**
**अहं तरिष्यामि दुरन्तपारं तमो मुकुन्दाङ्घ्रिनिषेवयैव ॥ ५८ ॥**

**पूर्वतनैः** पूर्वं स्थितैः **महर्षिभिः** अणिमादिसंपन्नैः अपि **अध्यासिताम्** अत्युपादेय-तया स्वीकृतामित्यर्थः । आस्थितामिति वा । **एताम्** अभीष्टप्रदां **परमात्मनिष्ठां** परमात्मध्यानादिरूपां व्यवस्थाम् अथवा **एताम्** उक्तां परमात्मनो विषयिणीं स्वस्वामि-भावसम्बन्धावधृतिं **समास्थाय** स्थिरीकृत्वा **अहं** तया **मुकुन्दाङ्घ्रिनिषेवयैव** दुरन्तः= अज्ञातः पारः= इयत्ता यस्य तत् **तमः** बन्धपञ्चपर्वाविद्यां **तरिष्यामि** परिहरामीति ॥ ५८ ॥

विस्तरेणोक्तौ संसारप्राप्तिपरिहारौ सङ्ग्रहेणाह- **निर्विद्येति ।**

---

[1] 'परात्मनिष्ठामध्यासितां पूर्वतमैर्महर्षिभिः' इति पाठान्तरम् ।

**श्रीभगवानुवाच-**

**निर्विद्य नष्टद्रविणो गतक्लमः प्रव्रज्य गां पर्यटमान इत्थम् ।**

**निराकृतोऽसद्भिरपि स्वधर्मादकम्पितोऽसौ मुनिराह गाथाम् ॥ ५९ ॥**

**नष्टद्रविणः निर्विद्य** विषयासक्तिं परिहृत्य ज्ञानदार्ढ्येनेति भावः । **प्रव्रज्य** संन्यासं प्राप्य **गां पर्यटमानोऽपि गतक्लमः** शान्तः विकाररहितः अभिमानस्य शनैस्तिरोहितत्वा-दिति भावः । इत्थं ताडनभर्त्सनादिनिराकृतोऽपि **स्वधर्मात्** क्रोधादिपरित्यागात् **अकंपितः** चलनरहितः सन् **मुनिः** ज्ञाननिष्ठः **गाथां** प्रबन्धं संग्रहेण **आह ॥** ५९ ॥

तां गाथां दर्शयति- **सुखदुःखेति ।**

**सुखदुःखप्रदो नान्यः पुरुषस्यात्मविभ्रमः ।**

**मित्रोदासीनरिपवः संसारः स्वमनस्ततः ॥ ६० ॥**

स्वस्य दुःखादिप्राप्तविकारप्रदः **अन्यः न** प्रधानकारणं न भवति इत्यर्थः । **पुरुषस्य आत्मविभ्रमः** देहादिषु विविधः भ्रमः= अभिमानः **ततः मित्रोदासीनरिपवो** भवन्ति । रागादिपुरस्सरमिति भावः । एवं संसारदुःखबन्धः **स्वमनः** स्वसम्बद्धं मनः भजन् इत्यर्थः ॥ ६० ॥

उद्धवप्रश्ने उत्तरं तथाऽभिधाय उद्धवस्य कर्तव्यमाह- **तस्मादिति ।**

**तस्मात् सर्वात्मना तात निगृह्णीष्व मनो धिया ।**

**मय्यावेशितया युक्त एतावान् योगसङ्ग्रहः ॥ ६१ ॥**

**य एतां भिक्षुणा गीतां ब्रह्मनिष्ठां समाहितः ।**

**धारयन् श्रावयन् शृण्वन् द्वन्द्वैर्नैवाभिभूयते ॥ ६२ ॥**

**॥ इति श्रीमद्भागवते एकादशस्कन्धे त्रयोविंशोऽध्यायः ॥**

**सर्वात्मना** स्वभावेन बहुप्रयत्नेन सर्वोपायैर्वा **धिया** स्थैर्येण उक्तार्थे विश्वासेन वा **हे तात मय्यावेशितया धिया** बुद्ध्या **मनः निगृह्णीष्व,** विषयाभिलाषां परित्यज्य देहादौ अभिमानं च त्यज इत्यर्थः । **युक्तः** सदा मयि ध्यानवान् भव । **योगसङ्ग्रहः** दुःखतरणोपायसङ्ग्रहः **एतावान्** इतोऽधिकः नास्तीत्यर्थः । **ब्रह्मनिष्टां** रहस्यतत्त्व-प्रतिपादकं **द्वन्द्वैः** मानाभिमानशीतोष्णादिरूपैः **नाभिभूयते ॥** ६२ ॥

॥ इति श्रीयादवेन्द्रयतिविरचिते एकादशस्कन्धव्याख्याने त्रयोविंशोऽध्यायः ॥

# 24 | चतुर्विंशोऽध्यायः

जगतः स्वव्यापारादौ ईश्वराधीनत्वावधारणेन जीवस्य बन्धमोक्षकारणावधारणेन च अहङ्कारादिप्राप्तदुःखपरिहारो भवति । अतः सृष्ट्यादिकं वक्ष्यामीत्याह- **अथ त** इति ।

**भगवानुवाच-**

**अथ ते सम्प्रवक्ष्यामि साङ्ख्यं पूर्वविनिश्चितम् ।**

**यद् विज्ञाय पुमान् सद्यो जह्याद् वैकल्पिकं भ्रमम् ॥ १ ॥**

**यत्** साङ्ख्यशास्त्रार्थतत्त्वं **विज्ञाय वैकल्पिकं** विविधाहङ्काराभिमानः विकल्पः, विविधसंकल्पो वा, तत्प्राप्तः भ्रमः । स्वस्मिन् दुःखतादात्म्यारोपः चेतने नीचता-विकारहेतुः इति भावः । तं **जह्यात्** । **साङ्ख** यं ज्ञानजनकशास्त्रं, अथ त्वत्प्रश्ने उत्तरत्वेन **सम्प्रवक्ष्यामि** । एतच्छ्रवणेन अवमानादिसहनशक्तिश्च आधीयत इति भावः ॥ १ ॥

ज्ञानार्थनियामकदेवतासृष्टिं वक्तुं ज्ञानार्थस्वरूपे तावदाह- **आसीदिति** ।

**आसीज्ज्ञानमयो ह्यर्थश्चैक एवाविकल्पितम् ।**

**यदा विवेकनिपुणा आदौ कृतयुगे जनाः ॥ २ ॥**

**अविकल्पितं** विकल्पः विविधकल्पना संशयविपर्ययादिः, तद्रहितः स्वयं यथा भवति तथा, एक एव सत्त्वासत्वविभेदरहित इत्यर्थः । **अर्थः** ज्ञानविषयः । **ज्ञानमयः** ज्ञानेन एकतामापन्नः । यथैवार्थः तथा ज्ञानमासीत् । सम्यग्ज्ञानमेवासीदित्यर्थः ।

**कृतयुगे आदौ आसीत्** ।[1] जनाः विवेके= सदसदर्थविवेके निपुणाः= भ्रमादिरागादि-लक्षणदोषरहिताः कुशलाः यदा तदा तेन निमित्तेन अर्थभ्रमो नासीत् इति भावः ॥ २ ॥

युगान्तरे ज्ञानार्थयोर्द्वैविध्यमाह- **तन्मयेति** ।

**तन्मया फलरूपेण केवलेन विकल्पितम् ।**
**वाङ्मनोगोचरं सत्यं द्विधा समभवद् बृहत् ॥ ३ ॥**

**सत्यं** कृतयुगादौ सत्यतया प्राप्तम् । **बृहत्** अभिमानविवक्षया वा महत् शब्दार्थात्मकत्वात् वा शब्दार्थयोर्विषयत्वाद् वा[2] बृहत् तज्ज्ञानं **फलरूपेण** फलं ज्ञानफलं रूपयति सम्पादयतीति फलरूपः तेन । **केवलेन** वैषम्यादिरहितेन । **मया** सृष्ट्यादि-कर्त्रा । **विकल्पितम्** राजसफलादिप्राप्त्यर्थं विरुद्धं कृतं सत् वाङ्मनसोः गोचरः= विषयो यस्य तत् ज्ञानं **द्विधा अभवत्** । अर्थोऽपि सन् असन् इति द्विधा अभवत् ॥ ३ ॥

ज्ञानार्थयोः नियामकदेवतासृष्टिमाह- **तयोरेकतर** इति ।

**तयोरेकतरो ह्यर्थः प्रकृतिः सोभयात्मिका ।**
**ज्ञानं त्वन्यतमो भागः पुरुषः सोऽभिधीयते ॥ ४ ॥**

**तयोः** सत्यज्ञानसत्यार्थयोः । **एकतरः** एकः । **अर्थः प्रकृतिः** सा गायत्री च **उभयात्मिका** श्रिया विष्णुना च नियम्या इत्यर्थः । नियम्यनियामकयोः अभेदोक्तिः ।

---

[1] अत्र 'तद्युगानुसारिणः साधवः अन्यज्ञानसाधनैरेव युक्ता इत्याह- यदेति ।' इत्यधिकं पठ्यते । सम्पातायतं स्यात् । [2] अत्र 'शब्दार्थयोर्विषयत्वाद्' इत्येतत् 'शब्दार्थात्मकत्वात्' इत्यस्यैव विवरणरूपमिति भाति ।

तयोः अन्यभागः **ज्ञानम् । पुरुषः** ब्रह्मा । नियामक **इत्यभिधीयते** । स ब्रह्मा च उभयात्मकः विष्णुना लक्ष्म्या च नियम्यः ॥ ४ ॥

तेषां देहाद्युपादानान्याह- **तमो रज** इति ।

**तमो रजः सत्वमिति प्रकृतेरभवन् गुणाः ।**

**मया सङ्क्षोभ्यमाणायाः[1] पुरुषानुमतेन वा ॥ ५ ॥**

**मया सङ्क्षोभ्यमाणायाः** कार्यात्मना परिणामार्थं क्षोभलक्षणव्यापारं प्राप्तवत्याः प्रकृतेः । पुरुषस्य= विरिञ्चस्य अनुमतेन= प्रेरणया **गुणा अभवन्** उत्पन्नाः । तदभिमानिन्यश्च उत्पन्ना इत्यर्थः । सर्वं श्रीतात्पर्ये स्पष्टम् ॥

**तेभ्यः समभवत् सूत्रं मत्सूत्रेण च संयुतम् ।**

**ततो विकुर्वतो जज्ञे योऽहङ्कारो विमोहकः ॥ ६ ॥**

**तेभ्यः** गुणेभ्यः गायत्र्यादिभ्यः तिसृभ्योऽपि **सूत्रं** वायुः **समभवत्** सम्यगभवत् । गायत्र्यादिस्थगर्भाणाम् एकत्वप्राप्त्या ब्रह्मा वायुश्च अभूताम् इत्यर्थः । सूत्रस्य सर्वाधारत्वशक्तिनियामकः परमात्माऽपि अन्तर्यामी अभूद् इत्याह- **मत्सूत्रेणेति** । सूत्रेण परमात्मना संयुतः सन् अभवत् उत्पन्नम् । सूत्रपुत्रस्त्वहङ्कारो रुद्रः । तत्वदेवतयोरुत्पत्तिविस्तारः श्रीतात्पर्ये स्पष्टः ॥ ६ ॥

**वैकारिकस्तैजसश्च तामसश्चेत्यहं त्रिवृत् ।**

**तन्मात्रेन्द्रियमनसां कारणं चिदचिन्मयः ॥ ७ ॥**

---

[1] 'प्रक्षोभ्यमाणायाः' इति पाठान्तरम् ।

**त्रिवृत्** वैकारिकादिनियामकरूपत्रयोपेतः । **चिदचिन्मयः** चेतनाचेतनजगन्नियामकः । **अहं** अहङ्कारः । तन्मात्राणां शब्दादीनाम् इन्द्रियाणां मनसश्च **कारणम्** ॥ ७ ॥

तन्मात्रादीनां उत्पादकानि विभज्याह- **तन्मात्रक** इति ।

**अर्थस्तन्मात्रको जज्ञे तामसादिन्द्रियाणि च ।**
**तैजसात् देवता आसन्नेकादश च वैकृतात् ॥ ८ ॥**

**तन्मात्रकः** शब्दादियुक्तः । **अर्थः** आकाशादिः । **तामसाद् जज्ञे** । **तैजसात् इन्द्रियाणि आसन्** । वैकारिकात् मनसा सह **एकादशदेवताः** आसन् । सर्वत्र नियम्यानां नियामकदेवानां च उक्तिरस्तीति भावः ॥ ८ ॥

**मया सञ्चोदिता भावाः सर्वे संहत्य कारिणः ।**
**अण्डमुत्पादयामासुर्ममायतनमुत्तमम् ॥ ९ ॥**

**तस्मिन्नहं समभवमण्डे सलिलसंस्थिते ।**
**मम नाभ्या अभूत्पद्मं विश्वाख्यं तत्र चात्मभूः ॥ १० ॥**

**सोऽसृजत् तपसा युक्तो रजसा मदनुग्रहात् ।**
**लोकान् सपालान् विश्वात्मा भूर्भुवः स्वरिति त्रिधा ॥ ११ ॥**

**देवानामोक आसीत् स्वर्भूतानां च भुवः पदम् ।**
**मर्त्यादीनां भूर्लोकः सिद्धानां त्रितयात् परम् ॥ १२ ॥**

**अधोऽसुराणां नागानां भूमेरोकोऽसृजत् प्रभुः ।**
**त्रिलोक्यां गतयः सर्वाः कर्मणां त्रिगुणात्मनाम् ॥ १३ ॥**

**कारिणः** सृष्टिकर्तारः । **मया सञ्चोदिताः** सन्तः **संहत्य** संश्लेषशक्तिं प्राप्य । **अण्डं** सुवर्णकोशं विश्वाख्यं सकललोकोत्पत्तिकारणमित्यर्थः । **तपसा** प्राप्तात् मदनु-ग्रहात् **रजसा युक्तः सपालान्** लोकपालान् **विश्वात्मा** महासामर्थ्यस्वभावः **असृजत्** । विश्वम् आत्मनि= विराड्देहे यस्य सः इति वा । लोकानां विवक्षाभेदेन त्रित्वमाह- **भूर्भुव** इति । **स्वः** स्वर्गः । **ओकः** स्थानम् । **भुवः पदं** भुवर्लोकः । **सिद्धानां** ध्यानादिना अपरोक्षवताम् । **त्रितयात्परं** महर्लोकादिः **भूमेः अधः** । प्रदेशः अतळादिः **ओकः** आश्रयः । **इत्यसृजत्** एवं कल्पितवान् । भूरादिलोकप्राप्तौ साधनान्याह- **त्रिलोक्याम्** इति । तामसकर्मणां नरकादि ॥ १३ ॥

**योगस्य तपसश्चैव ज्ञानस्य गतयोऽमलाः ।**
**महर्जनस्तपः सत्यं भक्तियोगस्य मद्गतिः ॥ १४ ॥**

मात्रा= सूक्ष्मकालः, एकमात्रया युक्तया तावत् काले संपन्नया इत्यर्थः । अपरोक्षदृशा युक्तं ध्यानं योगो नाम, तस्य जनलोकः तेन प्राप्य इत्यर्थः । षण्मात्रकाले सम्पन्नया अपरोक्षदृशा युक्तं ध्यानं तपः, तस्य तपोलोकः । मुहूर्तं भगवदपरोक्षं ज्ञानं, तस्य सत्यलोकः । तेन प्राप्य इत्यर्थः । एकमात्रकालस्य चतुर्भागः पादः । तस्मिन् काले सम्पन्नया अपरोक्षदृशा युक्तं ध्यानं पादयोगः, तेन महर्लोकः प्राप्य इत्यर्थः । **महर्जनस्तपः सत्यमित्येता गतयः** निर्भक्तियोगस्य उद्रिक्तभक्तिलक्षणोपायस्य **मद्गतिः** वैकुण्ठादिः प्राप्या ॥ १४ ॥

सृष्टिप्रयोजनमाह- **मयेति** ।

**मया कालात्मना धात्रा कर्मयुक्तमिदं जगत् ।**
**गुणप्रवाह एतस्मिन्नुन्मज्जति निमज्जति ॥ १५ ॥**

**कालात्मना** ज्ञानाद्यात्मना । **इदं जगत्** असुरतिर्यगादिरूपम् **एतस्मिन् गुणप्रवाहे** संसारे **निमज्जति** मग्नं भवति, दुःखादिकमनुभवतीत्यर्थः । **धात्रा** पालनकर्त्रा **मया इदं जगत्** सात्विकजनः **उन्मज्जति** दुःखसम्बन्धरहित इत्यर्थः ॥ १५ ॥

इदं जगत् न स्वतन्त्रम् किन्तु परतन्त्रमित्याह- **अणुर्बृहदिति** ।

**अणुर्बृहत् कृशः स्थूलो यो यो भावः प्रसिध्यति ।**
**सर्वं ह्युभयसंयुक्तं प्रकृत्या पुरुषेण च ॥ १६ ॥**

**अणुः** देहेन, **बृहत्** महत्, **कृशः, स्थूलः** गजादिः **यो भावः** पदार्थः चेतनः **सर्वं** धर्मधर्मिसमुदायः उभयेन= चित्प्रकृत्या मया च संयुक्तं शक्तिप्रेरणपुरस्सरं स्वस्वव्यापारेषु प्रवृत्त्यर्थमित्यर्थः । तत्वदेवतोपेतं चेत्याह- **प्रकृत्येति** । सरस्वत्या **पुरुषेण** हिरण्यगर्भेण संयुक्तं भवति ॥ १६ ॥

जगतः स्वतन्त्रकारणमुपादानं चाह- **यस्त्विति** ।

**यस्तु यस्यादिरन्तश्च स वै मध्ये च तस्य तत् ।**
**विकारो व्यवहारार्थो यथा तैजसपार्थिवाः ॥ १७ ॥**

**यः** निमित्तकारणं **यस्य** कार्यस्य सकाशाद् **आदिः** पूर्वं वर्तते । **अन्तः** लयेऽपि वर्तते । एकप्रकारेणेति भावः । **सः** ईश्वरः **तस्य** कर्ता इत्यर्थः । उपादानमाह- **व्यवहारार्थः** हानोपादानाद्यर्थः **यः विकारः** महदादिः परिणामः **यस्य** सकाशाद् भवति स उपादानं तेन उपादेयेन अभिन्नमित्यर्थः । उपादानस्य कार्यभेदे निदर्शनमाह- **तैजसेति** । यथा अरण्यादिगतसूक्ष्मवह्निजन्यः स्थूलवह्निः उपादानेनाभिन्नः दृष्टः, एवं प्रकृतिजन्यः गुणमहदादिः अव्यक्तादभिन्नः । यथा पार्थिवमृदादिलक्षणस्थूलव्यक्तो-

पादानकः घटादिः, एवं स्थूलपृथिव्याद्युपादानकः पृथिव्यादिः उपादानेन भिन्नाभिन्न इति भावः । अभेदे सति भेदो न विरुद्धः । वस्तुसामर्थ्यात् इति भावः । यद्वा यस्तु यस्यादिः उपादानरूपः स विकार इत्यन्वयः । परिच्छिन्नस्य उपादानस्य सर्वांशेनाभेदः । सर्वस्यापि परिणतत्वात् । अपरिच्छिन्नायाः एकदेशेन परिणतायाः प्रकृतेः कोट्यंशेन अभेद इति भावः ॥ १७ ॥

सृष्टौ सत्यां चेतनाचेतनं सर्वं विकारोपेतम्, परमात्मा तु निर्विकार इत्याह- **यदुपादायेति ।**

**यदुपादाय पूर्वस्तु भावो विकुरुते परम् ।**
**आदिरन्तो यतो यस्मिन्स्तत् सत्यमभिधीयते ॥ १८ ॥**

**पूर्वः** कारणं **भावः** वस्तु प्रकृत्यादिलक्षणम् । **यद्** ब्रह्म **उपादाय** स्वसहकारितया प्राप्य **परं** कार्यमुद्दिश्य **विकुरुते** विकारवान् भवति । अचेतनस्य स्वतो व्यापाराभावादिति भावः । कार्यस्य यतः ब्रह्मणः **आदिः** उत्पत्तिरित्यर्थः । **अन्तः** लयश्च **यस्मिन्** ब्रह्मणि स्थितिश्च **तत् सत्यं** परमार्थसत्यं स्वतन्त्रमित्यर्थः । अन्यत् परतन्त्रं विकारीति भावः ॥ १८ ॥

चेतनापेक्षयाऽपि परब्रह्म स्वतन्त्रकारणमिति स्पष्टमाह- **प्रकृतिरिति ।**

**प्रकृतिर्ह्यस्योपादानमाधारः पुरुषः परः ।**
**सतोऽभिव्यञ्जकः कालो ब्रह्म तत् त्रितयं त्वहम् ॥ १९ ॥**

विरिञ्चपत्नीनियम्या **प्रकृतिः अस्य** जगत **उपादानम्** । **परः** विलक्षणः **पुरुषः** हिरण्यगर्भ अस्य **व्यञ्जकः** निमित्तकारणमित्यर्थः । **सतः** विद्यमानस्य जगतः **परः**

रूपान्तरमापन्नः कालनियामकः **ब्रह्मा** ऽधारः । **तत्** उपादानादि**त्रितयं ब्रह्म** पूर्णः **अहम्** । मत्तः पूर्णात् सर्वं स्वस्वशक्त्युपेतम् इत्यर्थः ॥ १९ ॥

स्थितिकालेऽपि सृष्टिरस्तीत्याह- **सर्ग** इति ।

**सर्गः प्रवर्तते तावत् पौर्वापर्येण नित्यशः ।**
**महान् गुणविसर्गोर्थः स्थित्यन्तो यावदीक्षणम् ॥ २० ॥**

**यावदीक्षणं** 'जगतः प्रळयः स्यात्' इति भगवतः **ईक्षणं** स्मरणं **यावत्** यस्मिन् काले भवेत् **ताव** त्पर्यन्तं नित्यशः दिने दिने च **सर्गः** सृष्टिः **पौर्वापर्येण** सजातीयासजातीयोत्पत्तिरूपक्रमेण प्रवर्तते । गुणादेः सकाशात् विसर्गो यस्य सः **महान् अर्थः** महदादि कार्यं **स्थित्यन्तः** स्थितिसमयमात्रवर्ती लयसमये नास्तीति भावः ॥ २० ॥

बन्धलयोऽपि स्वस्मादित्याह- **विराडिति** ।

**विराण्मयाऽऽसाद्यमानो लोककल्पविकल्पकः ।**
**पञ्चत्वायाविशेषाय कल्पते भुवनैः सह ॥ २१ ॥**

**लोककल्पविकल्पः लोककल्पः** चतुर्दशभुवनसृष्टिः **विकल्पः** विविधसुरादिसृष्टिः यस्मिन् स **विराट्** ब्रह्माण्डं **मया आसाद्यमानः** अवयवविशेषं प्राप्नुवानः **भुवनैः सह पञ्चत्वाय** आकाशादिकारणमात्ररूपेण अवस्थानाय अनन्तरम् **अविशेषाय** शब्द-स्पर्शादिसर्वगुणोपेतत्वात् विशेषतः पृथिवी तन्नाशाय च **कल्पते** प्रवृत्तो भवति, लयं प्राप्नोतीत्यर्थः ॥ २१ ॥

लयं विविच्याह- **अन्ने प्रलीयत** इति ।

**अन्ने प्रलीयते मर्त्य अन्नं धानासु लीयते ।**
**धाना भूमौ प्रलीयन्ते भूमिर्गन्धे प्रलीयते ॥ २२ ॥**

**अप्सु प्रलीयते गन्ध आपश्च स्वगुणे रसे ।**
**लीयते ज्योतिषि रसो ज्योती रूपे प्रलीयते ॥ २३ ॥**

**मर्त्यः** अन्नोपजीवनेन स्थितं प्राणिजातं शरीराणि तदभिमानिनश्च इत्यर्थः । **अन्ने प्रलीयते** । सर्वत्र कारणजडेषु कार्यजडानां लयः, कारणचेतनेषु तज्जडाभिमानिषु तत्कार्याभिमानिचेतनानां प्रवेशो ज्ञातव्य इति भावः । **अन्नं** अन्नाभिमानिनी **धानासु** विविधबीजविकृतासु इत्यर्थः । ओषधीषु तदभिमानिन्यां **लीयते** । **धानाः** धानविकृता ओषधयः **भूमौ** स्वकारणे **प्रलीयन्ते** प्रविशन्ति । लयशब्दः देवताविवक्षया प्रवेशार्थकः । **गन्धे** स्वकारणे **भूमिः प्रलीयते** ॥ २३ ॥

**रूपं वायौ स च स्पर्शे लीयते सोऽपि चाम्बरे ।**
**अम्बरं शब्दतन्मात्र इन्द्रियाणि स्वयोनिषु ॥ २४ ॥**

**योनिर्वैकारिके सौम्य लीयते महतीश्वरे ।**
**शब्दो भूतादिमप्येति भूतादिर्महति प्रभुः ॥ २५ ॥**

**इन्द्रियाणि स्वयोनिषु** तैजसाहंकारयोनिष्विति बहुवचनं इन्द्रियदेवानां वैकारिकाहङ्कारदेवतायां लय इति ज्ञापनाय । **योनिः** कारणं वैकारिकः तैजसश्च अहङ्कारः **ईश्वरे** स्वामिनि **वैकारिके** गुणविकारजन्ये महति महत्तत्वे **लीयते** । हे **सौम्य** ! आनन्दानुभवसम्पन्न ! अम्बरोपादानस्य शब्दस्य लयमाह- **भूतादिमिति** । भूतानां आदिं कारणं तामसाहङ्कारं **अप्येति** प्राप्नोति, तत्र लीनं भवति इति वा । **भूतादिः** तामसः **प्रभुः** ज्ञानाच्छादनसमर्थः **महति** तत्वे विलीयते ॥ २५ ॥

**स लीयते महान् स्वेषु गुणेषु गुणवत्तमः ।**
**तेऽव्यक्ते सम्प्रलीयन्ते तत् काले लीयतेऽव्यये ॥ २६ ॥**

**गुणवत्तमः** ज्ञानादिमहागुणसंपन्नः सुवर्णवर्णो **महान् स्वेषु** स्वकारणेषु **गुणेषु** तद्देवतासु च लीयते । **ते** गुणाः गुणदेवताः गायत्रीसावित्रीसरस्वतीसंज्ञाः स्वमूलरूपे **अव्यक्ते** ब्रह्मपत्न्यां लीयन्ते । तदव्यक्तं पुरुषे विरिञ्चे लीयते । विरिञ्चरूपान्तरस्य रूपान्तरे लयः ॥ २६ ॥

**कालो मायामये जीवे जीव आत्मनि मय्यजे ।**
**आत्मा केवल आत्मस्थो विकल्पापायलक्षणः ॥ २७ ॥**

**कालः** विरिञ्चः **जीवे** जीवसम्बन्धिनि **मायामये** प्रकृतौ महालक्ष्म्याम् । स **जीवः अजे आत्मनि** मयि लीयते । मत्समीपस्था जीवप्रकृतिप्रेरणां विना तिष्ठति । लक्ष्म्या रूपान्तरविवक्षया हरेः अत्यन्तसामीप्यं लय इति भावः । परमात्मनि लयशङ्का नकार्येत्याशयेनाह- **आत्मेति । केवलः** अपूर्णतादिदोषरहितः **आत्मस्थः** स्वतन्त्र इत्यर्थः । **विकल्पः** विविधसृष्टिः, तस्य अपायः= नित्यं अभावः, तदेव लक्षणं यस्य सः उत्पत्त्यादिदोषरहितः । आत्मा पूर्णशक्त्यादिसम्पन्नः, अतो लयादिरहित इति भावः ॥ २७ ॥

तत्वानां तन्नियामकपरमात्मनः तत्वदेवतानां स्वरूपस्य च अवधारणावतः दुःखादिकं अकिञ्चित्करमित्याह- **एवमिति ।**

**एवमन्वीक्षमाणस्य कथं वैकल्पिको भ्रमः ।**
**मनसो हृदि तिष्ठेत व्योम्नीवार्कोदये तमः ॥ २८ ॥**

उक्तरीत्या **अन्वीक्षमाणस्य** सम्यङ्ज्ञानवतः सतः **मनसः** उत्पन्नः **वैकल्पिकः** विविधदुःखादिकल्पनाप्राप्तिः तेन प्राप्तः वैकल्पिकः विकल्पः= **भ्रमः** स्वस्मिन् चेतने दुःखित्वाद्यारोपः विकर्मादिसम्पादक इति भावः । **हृदि** वासनारूपेण कथं **तिष्ठेत?** दुःखपरम्पराहेतुः भ्रमो निवर्तत इत्यर्थः । अयं भ्रमः विषयदर्शनान्निवर्त्यो न भवति इत्याशयेनाह- **व्योम्नीति** । यथा तमो निवर्तते ॥ २८ ॥

एवं मया वर्णितः शास्त्रार्थः दुःखबन्धमोचक इत्याह- **एष** इति ।

**एष साङ्ख्यविधिः प्रोक्तः संशयग्रन्थिहेतिकः ।**
**प्रतिलोमानुलोमाभ्यां परावरदृशा मया ॥ २९ ॥**

**॥ इति श्रीमद्भागवते एकादशस्कन्धे चतुर्विंशोऽध्यायः ॥**

**परावरदृशा** परे= चेतनाः, अवराणि= जडानि **तानि** दोषविशेषैः सह पश्यतीति परावरदृक्, तेन मया संशय एव ग्रन्थिः= स्वमनोबन्धः तस्य हेतिरिव= आयुधमिव भेदकर्ता **साङ्ख्यविधिः** विधीयत इति विधिः सांख्यशास्त्रप्रतिपाद्य इत्यर्थः । एष सृष्टिः लयादिश्च **प्रतिलोमेन** विपरीतक्रमेण अवरादितः, **अनुलोमेन** यथाक्रमेण उत्तमादितः, ताभ्यां सह प्रोक्तः । उक्तार्थः प्रयत्नेन धारणीय इति भावः ॥ २९ ॥

॥ इति श्रीयादवेन्द्रयतिविरचिते एकादशस्कन्धव्याख्याने चतुर्विंशोऽध्यायः ॥

# 25 | पञ्चविंशोऽध्यायः

भक्तिविवृद्धये अहङ्कारादिनिरसनोपायमुक्त्वा रजोगुणादिनिरासोपायज्ञानाय तद्व्यापारमाह- **गुणानामिति** ।

**श्रीभगवानुवाच-**

**गुणानामथ मिश्राणां[1] पुमान् येन यथा भवेत् ।**

**तन्मे पुरुषवर्येदमुपधारय शंसतः ॥ १ ॥**

**मिश्राणां** अथ तदन्यानां अमिश्राणां मध्ये **येन** मिश्रेण अमिश्रेण वा **यथा** यादृशकर्मकर्ता भवेत् **तद् इदं** तादृशं गुणप्राप्तानि ज्ञानकर्मादीनि मत्तः **उपधारय** सम्यक् जानीहि ॥ १ ॥

अमिश्रगुणस्य सत्वस्य कार्याण्याह- **शम** इति ।

**शमो दमस्तितिक्षेक्षा तपः सत्यं दया स्मृतिः ।**

**तुष्टिस्त्यागोऽस्पृहा श्रद्धा ह्रीः क्षमा निस्तुतिर्धृतिः ॥ २ ॥**

**शमः** परमात्मन्येव बुद्धिः **ईक्षा** शास्त्रार्थविमर्शः । **स्मृतिः** अलौकिकार्थस्य अविस्मरणम् । **तुष्टिः** विषयेषु अलंबुद्धिः । **अस्पृहा** विषयाकाङ्क्षाराहित्यम् । **श्रद्धा** शास्त्रोक्ततत्वे विश्वासः । **ह्रीः** निषिद्धाचरणे लज्जा । **निस्तुतिः** स्वोत्कर्षाकथनम् । **धृतिः** तत्त्वे मनःस्थैर्यम् ॥ २ ॥

अमिश्ररजोगुणव्यापारमाह- **काम** इति ।

---

[1] 'गुणानामप्यमिश्राणां' इति पाठान्तरम् ।

**काम ईहा मदस्तृष्णा स्तम्भ आशीर्भिदाऽसुखम् ।**

**मनोत्साहो यशः प्रीतिर्धार्ष्ट्यवीर्यबलोद्यमाः ॥ ३ ॥**

**कामः** विषयाकाङ्क्षा । **ईहा** विषयसिद्ध्यर्थं व्यापारः । **तृष्णा** विषयासक्तिः । **स्तम्भः** विनयराहित्यम् । **भिदा** सौहार्दपरित्यागः । **असुखं** तमोगुणेन तामसे दुःखाधिक्यज्ञापनाय राजसे दुःखोक्तिरिति भावः । **धार्ष्ट्यं** वैयात्यम्, स्वपक्षादचलनं भयाभावो वा ॥ ३ ॥

अमिश्रतमोगुणकार्याण्याह- **क्रोध** इति ।

**क्रोधो लोभोऽनृतं हिंसा माया डम्भोऽक्षमा कलिः ।**

**शोकमोहो विषादार्ती निद्राऽऽशा भीरनुद्यमः ॥ ४ ॥**

**सत्वस्य रजसश्चैताः तमसश्चानुपूर्वशः ।**

**वृत्तयो वर्णितप्रायाः सन्निपातमथो शृणु ॥ ५ ॥**

**सन्निपातस्त्वहमिति ममेत्युद्धव या मतिः ।**

**व्यवहारः सन्निपाते मनोमात्रेन्द्रियासुभिः ॥ ६ ॥**

**माया** असत्यवचनम् । **डम्भः** स्वस्मिन् अविद्यमानगुणप्रकटनम् । **कलिः** कलहः । **मोहः** अन्यथा ज्ञानम् । **विषादः** भयम् तज्जन्यदुःखं वा । **आर्तिः** दीर्घकालीनं दुःखम् । ज्ञानपूर्वं मर्यादातिक्रमो वा । तेन जाताः तत्तद्गुणेन जाताः तत्तद्वृत्तय इत्यर्थः । **सन्निपातः** रजस्तमोमेलनमित्यर्थः । स्वस्य सर्वव्यापारेषु 'अहमेव कर्ता' इति या मतिः, 'इदं गेहधनादिकं ममैव' इति या मतिः स सन्निपातः, तज्जन्य इत्यर्थः । सन्निपातस्य कार्यान्तराण्याह- **व्यवहार** इति । सन्निपाते सति ज्ञानादि-

पुरस्सरं विषयानुभवो भवति, हानादिव्यवहारो वा । व्यवहारे कारणानि विषयांश्चाह- **मन** इति । मात्राः= विषयाः, असवः= प्राणाः, अनुभवशक्तयो वा, एतैः सहितः व्यवहारो भवति ॥ ६ ॥

गुणसन्निकर्षप्राप्तम् उपादानादिरूपं विविच्य दर्शयति- **धर्मे चेति** ।

**धर्मे चार्थे च कामे च यदाऽसौ परिनिष्ठितः ।**
**गुणानां सन्निकर्षोऽयं श्रद्धारतिधनावहः ॥ ७ ॥**

**धर्मेऽपि** च तत्तत्साधने, **अर्थे** च तत्साधने, **कामे** च तत्साधने, **असौ** जीवः यदा **परिनिष्ठितः** व्यापृतः तदा अस्य जीवस्य श्रद्धायाः रतेः= कामस्य धनस्य च आशायाः आवहः = सम्पादकः **अयं** गुणानां सन्निकर्षः मेलनम् इति ज्ञातव्यम् ॥ ७ ॥

ननु विषयकामधनाशयोः रजस्तमोमूलयोः सतोः कथं सत्वस्य तद्विरुद्धस्य मेलनम् ? इत्याशङ्क्य, तत्कार्यश्रद्धायाः सत्वादित्याह- **प्रवृत्तिलक्षणामिति** ।

**प्रवृत्तिलक्षणां निष्ठां पुमान् यर्हि गृहाश्रमे ।**
**स्वधर्मे चानुतिष्ठेत गुणानां समितिर्हि सा ॥ ८ ॥**

गृहाश्रमस्थितः **पुमान् यर्हि स्वधमे प्रवृत्तिलक्षणां** प्रवृत्तिसहितां **निष्ठां** व्यवस्थां प्रति श्रद्धाप्राप्तामिति भावः । **अनुतिष्ठेत** स्वधर्मे निश्चलो भवति । कामधनाशाभ्यां अपरिभूतो भवतीत्यर्थः तदा **गुणानां** सत्वादीनां **समितिः** अविरोधेन मेलनं वर्तत इत्यर्थः ॥ ८ ॥

कार्याणां शमादीनां सम्पत्त्या सात्विकादिपुरुषानुमानं च भवेदित्याह- **पुरुषमिति** ।

**पुरुषं सत्वसंयुक्तमनुमायाच्छमादिभिः ।**

**कामादिभी रजोयुक्तं क्रोधाद्यैस्तमसाऽऽवृतम् ॥ ९ ॥**

शुद्धसात्विकमाह- **यदेति ।**

**यदा भजति मां भक्त्या निरपेक्षः स्वकर्मभिः ।**

**तं सत्वप्रकृतिं विद्यात् पुरुषं स्त्रियमेव वा ॥ १० ॥**

**यदा आशिष आशास्य मां यजेत स्वकर्मभिः ।**

**तं रजःप्रकृतिं विद्यात् हिंसामाशास्य तामसम् ॥ ११ ॥**

**आशिष** अपेक्षितविषयान् **आशास्य** अपेक्ष्य रजःप्रकृतिं[1] हिंसां वैरिवधं आशास्य **स्वकर्मभिः मां** किञ्चिदुच्चं पश्यन् **यजेत** तामसः इति भावः ॥ ११ ॥

ननु सर्वदेहस्थस्य तवापि गुणसम्बन्धात् तव राजसादिदोषभावः न किम्? इत्याशङ्क्याह- **सत्वं रज** इति ।

**सत्वं रजस्तम इति गुणा जीवस्य नैव मे ।**

**चित्तजा यैस्तु भूतानां सज्जमानो निबध्यते ॥ १२ ॥**

**भूतानां** सकाशात् उपचितं यच्चित्तं[2] तत्र जाताः चित्तजाः । **यैः** गुणानां भागैः **सज्जमानः** जीवः तादृशचित्तोपचितगुणसंश्लिष्टाकारः चेतनः **निबध्यते** विषयासक्त्या दुःखेन विक्रियते । अतः ते **जीवस्य गुणाः** भवन्ति । **मे नैव,** चित्तविशिष्टाकाराभावादिति भावः ॥ १२ ॥

सत्वभागस्य सुखसाधनत्वेन रजोभागादिराहित्येन भाव्यमित्याह- **यदेतराविति ।**

---

[1] अत्र 'त्रैवर्गिकं' इत्यधिकं मूलपुस्तके, सम्पातायातं स्यात् । [2] 'चेतनविशिष्टाकारः' इत्यधिकं मूलपुस्तके ।

**यदेतरौ जयेत् सत्वं भास्वरं विशदं शिवम् ।**

**तदा सुखेन युज्येत धर्मज्ञानादिभिः पुमान् ॥ १३ ॥**

**सत्त्वम् इतरौ** रजस्तमोभागौ **जयेत्** परिहरेत् **तदा सुखेन** चेतनः **युज्येत** । इतरजयार्थं चित्तस्य सहकारिसंपत्तिमाह- **धर्मज्ञानेति** । निवृत्तिधर्मैर्ध्यानैश्च **विशदं** दोषरहितं **शिवं** शुभरूपं **भास्वरं** दोषाभावात् प्रकाशमानं, भास्वरः परमात्मप्रकाशकः । तदा चित्तं सुखजनकम् । अथवा सत्वस्य रजस्तमोमिश्रितस्य स्वरूपसुखाच्छादकत्वं, न केवलस्य इति सत्वप्रशंसां करोति- **यदेतराविति** । **पुमान्** ज्ञानध्यानैः **इतरौ** राजसतामसभागौ जयेत् । तदा चित्तं विशदं भास्वरं भवेत् । यदा चित्तं भास्वरं तदा सुखेन ध्यानव्यक्तस्वरूपसुखेन पुमान् **युज्येत** । अतः चित्तम् एतादृशं कर्तव्यमिति भावः ॥ १३ ॥

**यदा जयेत् तमस्सत्वे रजः सङ्गभिदाकरम्**[1] **।**

**तदा दुःखेन युज्येत कर्मणा यशसा श्रिया ॥ १४ ॥**

**यदा जयेद् रजस्सत्वे तमो मूढो ह्ययं जनः ।**

**युज्येत शोकमोहाभ्यां निद्रया हिंसयाऽऽशया ॥ १५ ॥**

रजोगुणादिवृद्धिकार्यमाह- **तमस्सत्व इति** । **सङ्गः** विषयप्रीतिः, भिदा विषयाभिलाषया मत्यैक्यपरित्यागः, तौ करोतीति **सङ्गभिदाकरं** रजोगुणः **तमःसत्वगुणौ** जयेत्, **तदा दुःखेन** स्वल्पेन **कर्मणा** काम्यकर्मणा । **यदा तमः** रजःसत्वगुणौ **जयेत्** स्वाभिवृद्ध्येति भावः । **मूढः** विवेकरहितः **अयं जनः शोकेन मोहेन=** अन्यथाज्ञानेन **धनाशया** च **युज्येत** । अतः सत्वह्रासः न सम्पादनीय इति भावः ॥ १५ ॥

---

[1] 'सङ्गभिदाचलम्' इति पाठान्तरम् ।

भास्वरत्वविशदत्वशिवत्वरूपगुणानां कार्यमाह- **यदा चित्तं प्रसीदेत** इति ।

**यदा चित्तं प्रसीदेत इन्द्रियाणां च निर्वृतिः ।**

**देहोऽभयं मनोऽसङ्गं तत्सत्वं विद्धि मत्पदम् ॥ १६ ॥**

**चित्तं** हरिध्यानादिना अप्रयत्नेन समाधियुक्तं भवेत् तदा **इन्द्रियाणां निर्वृतिः** आह्लादकरसाहित्यविषयेषु अलंबुद्धिसाहित्यमित्यर्थः । तादृशं **सत्वं मत्पदम्** पदप्राप्यम् । अहं पदं यस्य तत् । मां प्रति जीवं प्रापयतीत्यर्थः ॥ १६ ॥

रजोगुणस्य तदाह- **विकुर्वन्निति** ।

**विकुर्वन् क्रियया चाधीरनिवृत्तिश्च[1] चेतसः ।**

**गात्रास्वास्थ्यं मनो भ्रान्तं रज एतैर्निशामय ॥ १७ ॥**

**सीदच्चितं विलीयेत चेतसो ग्रहणेऽक्षमम् ।**

**मनो नष्टं तमोग्लानिस्तमस्तदुपधारय ॥ १८ ॥**

**विकुर्वन्** सङ्कल्पविकल्पलक्षणविकारकर्तृत्वम् । भावप्रधानो निर्देशः । **क्रियया** चापलेन **अधीरं** स्थैर्यरहितं विषयेभ्यः **अनिवृत्तिः गात्रास्वास्थ्यं** देहस्य अस्वाधीनता **भ्रान्तं** संशयः **चेतसः एतैः** धर्मैः **मनः रजः** रजोविकारम् इति **निशामय** जानीहि । **चित्तं सीदत्** विशीर्णं भवत् **विलीयेत,** उत्साहरहितं भवतीत्यर्थः । **चेतसः** अत्र चेतश्शब्देन स्मरणशक्तिर्विवक्ष्यते । तत्सकाशात् **ग्रहणे** असन्निहितस्मरणे **अक्षमं** व्यापाररहितम् इत्यर्थः । **नष्टं** ज्ञानवासनानाशोपेतम् । **तमः** भ्रमः । यस्य **ग्लानिः** अतुष्टिः तन्मनः **तम** इति तमोविकार इति **उपधारय** जानीहि ॥ १८ ॥

गुणोद्रेकस्यापि प्रयोजनमाह- **एधमान** इति ।

---

[1] 'क्रिययाऽधीरमनिवृत्तिश्च' इति यादवेन्द्रतीर्थादृतपाठ इति भाति ।

**एधमाने गुणे सत्त्वे देवानां बलमेधते ।**
**असुराणां च रजसि तमस्युद्धव रक्षसाम् ॥ १९ ॥**

**सत्वाज्जागरणं विद्याद् रजसा स्वप्नमादिशेत् ।**
**प्रस्वापः तमसा जन्तोस्तुरीयं त्रिष्वसङ्गतम् ॥ २० ॥**

**उपर्युपरि गच्छन्ति सत्वेनाब्रह्मणो जनाः ।**
**तमसा अधोऽध आमुख्याद् रजसाऽन्तरचारिणः ॥ २१ ॥**

**एधमाने** वर्धमाने सति, **रजसि** एधमाने सति । **तमसा प्रस्वापं** निद्रां विद्यात् । **तुरीयं** सुषुप्तिसुखं गुणेषु सङ्गतं न भवति । एतत् सुखं गुणकार्यं न भवति इत्यर्थः । **तुरीयं** परमात्मरूपं **त्रिषु** गुणव्यापारेषु असङ्गतं= प्रवृत्तं न भवति इति वा[1] ॥ २१ ॥

उपर्युपरीत्युक्तं विवृणोति- **सत्वे प्रलीना** इति ।

**सत्वे प्रलीनाः स्वर्यान्ति नरलोकं रजोलयाः ।**
**तमोलयास्तु निरयं यान्ति मामेव निर्गुणाः ॥ २२ ॥**

**मदर्पितं[2] निष्फलं वा सात्विकं निजकर्म तत् ।**
**राजसं फलसङ्कल्पं हिंसाप्रायादि तामसम् ॥ २३ ॥**

**सत्वे प्रलीनाः** निजभक्ताः **निर्गुणाः** नैर्गुण्यं मोक्षः तत्साधनं निर्गुणं ज्ञानं तेन उपेताः, गुणेभ्यः निष्क्रान्ताः, लिङ्गेनापि निर्मुक्ता इति भावः । त्रैविध्यमाह- **निष्फलम्** इति । फलानुसन्धानरहितम् । **निजकर्म** वर्णाश्रमविहितं कर्म **मदर्पितं** यत् तत् सात्विकम् । वा पक्षान्तरम् । फलानुसन्धानेन आस्तिककामुकवत् मय्यर्पितं च सात्विकम् । **फलसङ्कल्पं** श्रीहरिसेवानुपयुक्तफलसङ्कल्पोपेतम् ॥ २५ ॥

---

[1] तस्य मोक्षावस्थाप्रवर्तकत्वादिति भावः । [2] 'मदर्पणं' इति पाठान्तरम् ।

ज्ञानविभेदमाह- **कैवल्यमिति ।**

**कैवल्यं सात्विकं ज्ञानं कर्मनिष्ठं तु राजसम् ।**
**प्राकृतं तामसं ज्ञानं मन्निष्ठं निर्गुणं स्मृतम् ॥ २४ ॥**

**कैवल्यं** यथाशास्त्रमर्थज्ञानम्, शास्त्राविरुद्धं शास्त्रजन्यं ज्ञानमित्यर्थः । केवलमेव **कैवल्यम् ।** ज्ञानं कैवल्यसाधनमिति वा, सात्विकम् । **कर्मनिष्ठं** ज्योतिष्टोमादिकर्मासक्तियुक्तं तद्विषयं ज्ञानं **राजसम् । प्राकृतं** अर्थकाममात्रसाधनविषयं, न धर्मादिविषयम् । **मन्निष्ठं** मम निष्ठा स्वयंप्रतिभातगुणोत्कर्षो यस्य तत् । शास्त्राभ्यासयोगाद्यतिशयप्राप्तं मम विचित्रमाहात्म्यज्ञानविषयं इत्यर्थः । निर्गुणस्य सात्विकत्वेऽपि अव्यवधानेन कैवल्यहेतुर्निर्गुणमित्युच्यते ॥ २४ ॥

**वनं तु सात्विको वासो ग्रामो राजस उच्यते ।**
**तामसं द्यूतसदनं मन्निकेतं तु निर्गुणम् ॥ २५ ॥**

**मन्निकेतं** सदनं देवालयादि । मे निकेतनम् अनिकेतनमित्यर्थः[1] । **निर्गुणं** परमहंसस्येति भावः ॥ २५ ॥

सात्विकादिकर्तृभेदं दर्शयति- **असङ्गीति ।**

**सात्विकःकारकोऽसङ्गी रागान्धो राजसः स्मृतः ।**
**तामसः स्मृतिविभ्रष्टो निर्गुणो मदपाश्रयः ॥ २६ ॥**

**असङ्गी** विषयासक्तिरहितः । **मदपाश्रयः** 'नाहं स्वतन्त्रकर्ता, हरिः स्वतन्त्रकर्ता' इति ज्ञानवान् ॥ २६ ॥

---

[1] 'अशब्दवाच्यस्य भगवतो निकेतनम्' इत्यर्थकमिदं स्यात् ।

**सात्विक्याध्यात्मिकी श्रद्धा कर्मश्रद्धा तु राजसी ।**
**तामस्यधर्मे या श्रद्धा मत्सेवायां तु निर्गुणा ॥ २७ ॥**

**आध्यात्मिकी** परमात्मविषये शास्त्रश्रवणेन 'ममात्रास्ति प्रयोजनम्' इति एवंरूपा श्रद्धा **सात्विकी ।** अधर्मे= भूतहिंसायाम् । **मत्सेवायां** स्वभावेन प्राप्ता श्रद्धा **निर्गुणा ॥** २७ ॥

आहारस्य सात्विकादिभेदमाह-

**पथ्यं युक्तमनायस्तमाहार्यं सात्विकं स्मृतम् ।**
**राजसं चेन्द्रियप्रेष्टं तामसं चार्तिदाशुचि ॥ २८ ॥**

**पथ्यं** देहहितं **अनायस्तं** प्रपीडया अप्राप्तमित्यर्थः । **इन्द्रियप्रेष्टं** इन्द्रियप्रीत्यर्थमेव प्राप्तम् । **आर्तिदं** मरीचिसर्षपादि । **अशुचि** पर्युषितादि ॥

**सात्विकं सुखमात्मोत्थं विषयोत्थं तु राजसम् ।**
**तामसं मोहदैन्योत्थं निर्गुणं मदपाश्रयम् ॥ २९ ॥**

**मोहेन** द्रविणादौ स्वीयताभ्रमेणोत्थं **तामसम् । आत्मोत्थं** आस्तिकस्य शास्त्र-परोक्षज्ञानजन्यं सुखं वा **सात्विकम् । मदपाश्रयं** मम ध्यानापरोक्षप्राप्तं निर्गुणम्[1] ॥ २९ ॥

गुणविकृतान् पदार्थान् दर्शयति- **द्रव्यमिति ।**

**द्रव्यं देशः फलं कालो ज्ञानं कर्म च कारकम् ।**
**श्रद्धाऽवस्था कृतिर्निष्ठा त्रैगुण्याः सर्व एव हि ॥ ३० ॥**

[1] मोक्षसुखमित्यर्थः ।

**त्रैगुण्याः** सर्वकारणत्वेन निश्चितगुणयुक्ताः । द्रव्यं ध्यानादीनि न चीरादयः । **फलं** कर्मफलम् । **कालः** प्रातःकालादिः । निशीथसमयः तामसः कालः । **ज्ञानं** यथार्थज्ञानादि । **कर्म** अलम्भनादि । **कारकम्** अधिकरणकरणादिकारकम् । **श्रद्धा** वर्णिता । **अवस्था** जाग्रदाद्यवस्था । **कृतिः** प्रयत्नः । **हिंसा** यत्र तामसः । **निष्ठा** भ्रान्त्याद्याचरणम् । एते सर्वे प्रत्येकं त्रिविधाः एकैकगुणात्मकाः ॥ ३० ॥

एते भावाः ज्ञानिनामहेयाः । परमाधिष्टानत्वादित्याशयेनाह- **सर्वे गुणेति ।**

**सर्वे गुणमया भावाः पुरुषाव्यक्तनिष्ठिताः ।**
**दृष्टं श्रुतमनुध्यायेत् बुद्ध्या वा पुरुषर्षभ ॥ ३१ ॥**

**सर्वे भावाः** पदार्थाः पुरुषाव्यक्ताभ्यां= विष्णुश्रीभ्यां निष्ठिताः= व्याप्ताः । एतत् **श्रुतं** बुद्ध्या मनने **दृष्टं** विषयीकृतं अनु= पुनरपि **ध्यायेत् ॥** ३१ ॥

**एता संसृतयः पुंसां गुणकर्मनिबन्धनाः**[1] **।**
**येनैते निर्जिताः सौम्य गुणा जीवेन चित्तजाः ।**
**भक्तियोगेन मन्निष्ठो मद्भावाय प्रपद्यते ॥ ३२ ॥**

**पुंसां** चेतनानां **संसृतयः** बन्धाः प्राप्ताः नियामककर्माणि तेभ्यो जाता इति च अनुध्यायेत् । गुणकर्मप्राप्तदुःखबन्धपरिहारे उपायमाह- **येनैत इति** । हे **सौम्य !** **येन** चेतनेन **एते चित्तजाः** चित्तेन सह विकृताः **गुणाः निर्जिताः** रजस्तमोभागाः परिहृताः । सः चेतनः **भक्तियोगेन** गुणनिरसनप्राप्तेन इति भावः । **मन्निष्ठः** मय्यासक्तः मत्तः प्राप्यमाणः यः भावः ज्ञानानन्दादिः तत्सिद्ध्यर्थं **प्रपद्यते** । मां प्राप्नोति मदपरोक्षं वा प्राप्नोति इत्यर्थः ॥ ३२ ॥

---

[1] 'गुणकर्मणि बन्धनाः' इति पाठान्तरम् ।

**तस्माद्देहमिमं लब्ध्वा ज्ञानविज्ञानसम्भवम् ।**
**मयैव ब्रह्मणा पूर्णो न बहिर्नान्तरश्चरेत् ॥ ३३ ॥**

**॥ इति श्रीमद्भागवते एकादशस्कन्धे पञ्चविंशोऽध्यायः ॥**

**तस्मात्** गुणकर्मप्राप्तदुःखबन्धस्य परिहार्यत्वात् **ज्ञानं** शास्त्रजनितं **विज्ञानम्** अपरोक्षः, अनयोः सम्भवो यस्मात् तं **देहं** लब्ध्वा । **ब्रह्मणा** सर्वकल्याणगुणपूर्णेन **मया** अन्तर्यामिणा **पूर्णः बहिः** विषयान् **न चरेत् ।** यः **आन्तरः** अन्तर्यामी तं चरेत् जानीयात् । तेन दुःखबन्धपरिहार इति भावः ॥ ३४ ॥

॥ इति श्रीयादवेन्द्रयतिविरचिते एकादशस्कन्धव्याख्याने पञ्चविंशोऽध्यायः ॥

# 26 | षड्विंशोऽध्यायः

ज्ञानी विषयवैरग्यदार्ढ्यं सम्पाद्य मद्भक्तिसम्पन्नः सन् निःश्रेयसं प्राप्नोतीत्याह- **मल्लक्षणमिति** ।

**श्रीभगवानुवाच-**

**मल्लक्षणमिमं कायं लब्ध्वा मद्धर्ममास्थितः ।**

**आनन्दं परमात्मानम् आत्मस्थं समुपैति माम् ॥ १ ॥**

**इमं** मानुषं **मल्लक्षणं** अहं लक्ष्यते ज्ञायते अनेन तं तथाविधं **कायं** देहं **लब्ध्वा मद्धर्मं** श्रवणादिलक्षणं धर्मम् **आस्थितः** निरन्तरं आदरेण कुर्वन्, **आत्मस्थं** स्वे महिम्नि स्थितं देहे स्थितं इति वा **परं** पूर्णं **आत्मानं समुपैति** अपरोक्षीकरोति । ततः **आनन्दं समुपैति** । आवरणरहितम् अनुभवतीत्यर्थः ॥ १ ॥

ननु देहस्य गुणभागैरुपचितत्वात्, गुणस्य ज्ञानविरोधित्वात् कथं देहे ज्ञान-सम्पत्तिः ? इति जिज्ञासायामाह- **गुणमय्या** इति ।

**गुणमय्या जीवयोन्या विमुक्तो ज्ञाननिष्ठया ।**

**गुणेषु मायामात्रेषु दृश्यमानेष्ववस्तुतः ।**

**वर्तमानोऽपि न पुमान् युज्यतेऽवस्तुभिर्गुणैः ॥ २ ॥**

**ज्ञाननिष्ठया** ज्ञानोत्कर्षेण श्रवणाद्यावृत्त्या सम्पादितयेति भावः । **मायामात्रेषु** प्रकृत्या निर्मितेषु **गुणेषु** देहेषु **अवस्तुतः** वस्तु आनन्दः तद्विरोधितया दृश्यमानेषु सत्सु तत्र विरागवानिति भावः । **वर्तमानोऽपि** देहे वर्तमानोऽपि **गुणमय्या** रजस्तमो-

विकृतया **जीवयोन्या** देहेनेत्यर्थः । **विमुक्तो** भवति । अभिमानरहितो भवतीत्यर्थः । **अवस्तुभिः** अस्वतन्त्रैः । चेतनप्रेरणां विना जडत्वेन स्वतोऽबन्धकैरिति भावः । **गुणैः** रजस्तमोभागैः **न युज्यते** न बध्यते । ईश्वरानुग्रहसहितेन वृत्तिज्ञानेन गुणह्रासो भवतीति भावः ॥ २ ॥

श्रीहरिकथाश्रवणादिविरोधिपरित्यागः अवश्यं कर्तव्य इत्याह- **सङ्गं न कुर्यादिति ।**

**सङ्गं न कुर्यादसतां शिश्नोदरतृषां[1] क्वचित् ।**
**तस्यानुगस्तमस्यन्धे पतत्यन्धानुगान्धवत् ॥ ३ ॥**

**असतां** नास्तिकानां विष्णुद्वेषिणां च **सङ्गं** मैत्रीं क्वचिदपि **न कुर्यात् । शिश्नं** गुह्येन्द्रियं **उदरं** उदरपूरणं रसनेन्द्रियमित्यर्थः । **तृषां** अनयोरिन्द्रिययोः विषयासक्तिं न कुर्यादित्यर्थः । ज्ञानसिद्ध्यर्थं क्षुत्पिपासामात्रनिरसनसमर्थेन अन्येन उदकेन वर्तेतेति भावः । उक्तार्थमकुर्वतः महद्दुःखं भवतीत्याह- **तस्यानुग** इति । **तमसि** दुःखे **पतति** इत्यर्थः ॥ ३ ॥

विषयासक्तस्य अभीष्टहानिः अनिष्टप्राप्तिश्च भवतीति ज्ञापनाय ऐलव्यापारमाह- **ऐलः सम्राडिति ।**

**ऐलः सम्राडिमां गाथामगायत् बृहच्छ्रवाः ।**
**उर्वशीविरहान् मुह्यन् निर्विण्णः शोकविक्लवः ॥ ४ ॥**

**मुह्यन्** चित्तक्षोभं प्राप्तः विरागादेव शोकसंयुतश्च **ऐ** लः **ऐ** लनामा **सम्राट्** सार्वभौमः **निर्विण्णः** अनन्तरं बहुविरक्तिसम्पन्नः **इमां** वक्ष्यमाणां **गाथां** प्रबन्धं अगायत ॥ ४ ॥

---

[1] 'शिश्नोदरतृपां' इति पाठान्तरम् ।

कदाचिद् विरहेऽपि पुनः योगसंभवात् किमर्थं शोक इत्यत आह- **त्यक्त्वेति** ।

**त्यक्त्वाऽऽत्मानं व्रजन्तीं तां नग्न उन्मत्तवन्नृपः ।**

**विलपन् अन्वगाज्जाये घोरे तिष्ठेति विक्लवः ॥ ५ ॥**

हे **घोरे !** दुःखकरी **तिष्ठ** इति **विलपन् ताम्** उर्वशीं **अन्वगात्** । **विक्लवः** चित्ते स्थैर्यरहितश्च अभवत् ॥ ५ ॥

अनुगमने निमित्तान्तरमाह- **कामानिति** ।

**कामानतृप्तोऽनुजुषन् क्षुल्लकान् वर्षयामिनीः ।**

**न वेद गणनां यान्तीमुर्वश्या कृष्टचेतनः ॥ ६ ॥**

**अनु** पुनः पुनः **जुषन्नपि** अनुभवन्नपि **अतृप्तो** यतः अतः अन्वगात् । विषयातृप्तिप्राप्तं ज्ञानपरिलोपं आह- ऊर्वश्या सहस्थितस्य स्वस्य याः वर्षाणां यामिन्यः= रात्रयः ता **यामिनीः** तद्गणनां **न वेद** । कुतः ? यतः उर्वश्याः भोगेन कृष्टा= तिरस्कृता चेतना= स्मरणशक्तिर्यस्य सः । अतः किमपि कर्तव्यम् न वेद ॥ ६ ॥

ऐलस्य च विरागप्राप्यनन्तरं ज्ञानोदयप्रकारमाह- **अहो मे मोहेति** ।

**ऐल उवाच-**

**अहो मे मोहविस्तारः कामकश्मलचेतसः ।**

**देव्या गृहीतकण्ठस्य नायुःखण्डा अनुस्मृताः ॥ ७ ॥**

**मे** विवेकिनः **मोहविस्तारः अहो** आश्चर्यम् । **कामेन कश्मलं** हेयं चेतो यस्य तस्य अयं दुःखौघः । आयुर्भागाः **न अनुस्मृताः** ॥ ७ ॥

स्मरणाभावमेव विवृणोति- **नाहं वेदेति** ।

**नाहं वेदाभिनिर्मुक्तः सूर्येणाभ्युदितो मृषा ।**
**मुषितो वर्षपूगानां बताहानि गतान्युत ॥ ८ ॥**

**अहो मे आत्मसम्मोहो येनात्मा योषिता हृतः ।**
**क्रीडामृगश्चक्रवर्ती नरदेवशिखामणिः ॥ ९ ॥**

**मृषा** फलं विना । **मुषितः** उर्वश्या अपहृतः । **अहं वर्षपूगानाम् अहानि गतानि** इति न वेद । कालविशेषनिश्चयकारणे सत्यपि कालविशेषज्ञानं नाभूदित्याह- **अभिनिर्मुक्त** इति । **सूर्येण** मुक्तः रात्र्या सम्पन्नोऽपि इत्यर्थः । **सूर्येण अभ्युदितो** वा उदयसम्पन्नो कालः **नाहं वेद** । अतः आश्चर्यम् **योषिता** स्त्रिया **चक्रवर्त्यपि** क्रीडामृगत्वेन कृतः स्वीकृतः । **मे** धर्माधर्मविदुषः ज्ञाने प्रवर्तकैः विद्वद्भिः मतिभिः परिवारितस्यापीत्यर्थः । **येन** आत्मसम्मोहेन स्वमाहात्म्याज्ञानेन अहं तया **हृतः** । सः **सम्मोहः** ज्ञानविपरिलोपः अहो आश्चर्यम् ॥ ९ ॥

स्वीयं कापट्यं चाह-

**सपरिच्छदमात्मानं हित्वा तृणमिवेश्वरम् ।**
**यान्तीं स्त्रियं चान्वगमं नग्न उन्मत्तवद् रुदन् ॥ १० ॥**

**कुतस्तस्यानुभावः स्यात् तेज ईशित्वमेव वा ।**
**योऽन्वगच्छं स्त्रियं यान्तीं स्मरबाणविताडितः ॥ ११ ॥**

**किं विद्यया किं तपसा किं त्यागेन श्रुतेन वा ।**
**किं विविक्तेन मौनेन स्त्रीभिर्यस्य मनो हृतम् ॥ १२ ॥**

**स्वार्थस्याकोविदं धिङ् मां मूर्खं पण्डितमानिनम् ।**
**योऽहमीश्वरतां प्राप्य स्त्रीभिर्गोखरवज्जितः ॥ १३ ॥**

**सेवतो वर्षपूगान्मे उर्वश्या अधरासवम् ।**
**न तृप्त आत्मभूः कामो वह्निराहुतिभिर्यथा ॥ १४ ॥**

**सपरिच्छदं** सर्वभोग्यवस्तुभिः सम्पन्नमित्यर्थः । **आत्मानं** मां **तृणमिव** अनुपादेयमिव **हित्वा** स ईश्वरोऽपि सर्वपूज्योऽपि इति भावः । **यः यान्तीमन्वगच्छं तस्य अनुभावः** सजातीयोत्कर्षः **तेजः** वैरिपरित्यागशक्तिः । **ईशित्वं** सामर्थ्यम् । सार्वभौमलक्षणोत्कर्षः अनिपुणं[1] अकुशलं अजागरूकं वा गोवत् खरवत् वृषभवत् **जितः** वशीकृतः । तं**मूर्खं** ज्ञानरहितं मां **धिक्** । **वर्षपूगान्** वर्षसमूहेषु **आत्मभूः** मानसिकः **कामः** विषयाभिलाषः **न तृप्तः** न समाप्तः, अलम्बुद्ध्या रहितोऽभूत् इत्यर्थः । **आहुतिभिः** आज्यभागैः वह्निरिव कामः पुनः वर्धत इत्यर्थः ॥ १४ ॥

वनिता ईश्वरस्य बन्धकशक्तिरित्याह- **पुंश्चल्यापहृतमिति ।**

**पुंश्चल्यापहृतं चित्तं कोन्वन्यो मोचितुं प्रभुः ।**
**आत्मारामेश्वरमृते भगवन्तमधोक्षजम् ॥ १५ ॥**

**भगवन्तम्** अणिमाद्यैश्वर्यसम्पन्नम् अधःकृतानि= तिरस्कृतानि अक्षजानि= इन्द्रियजन्यसुखानि येन, तम् अधोक्षजम् । आत्मना ध्यानविषयेणेति भावः । आ= सम्यक् रमन्ते= आनन्दानुभववन्तो भवन्ति इत्यारामाः= ब्रह्मादिऋषयः । तेषाम् ईश्वरं नारायणं धर्मसुतम् **ऋते** अन्यः **कः पुंश्चल्या** स्वैरिण्या अपहृतचित्तः क्षेमसमर्थो भवेत् । न कोऽपि । रुद्रोऽपि नारायणीक्षणे अपहृतमना= अभूदिति भावः ॥ १५ ॥

---

[1] 'स्वार्थस्याकोविदं' इति प्रसिद्धपाठानुसारेण 'अकोविदम्' इति स्यात् ।

उर्वशीवचनेनापि विषयविरागो न प्राप्त इत्याह- **बोधितस्यापीति ।**

**बोधितस्यापि देव्या मे सूक्तवाक्येन दुर्मतेः ।**
**मनोगतो महामोहो नापयात्यजितात्मनः ॥ १६ ॥**

अलं बहुकालमनुवृत्तैः विषयभोगैरिति उर्वश्या **सूक्तसदृशवाक्येन** वाचा **बोधितस्य मे अजितात्मनः** अतः विषयासक्त्या रूढस्येत्यर्थः । **महामोहः** अनिष्टे अल्पे विषयसुखे महासुखत्वबुद्धिरित्यर्थः । **नापयाति** नापगतः ॥ १६ ॥

पुनः विषयनिन्दां करोति- **किमिति ।**

**किं न्वेतया म एकान्ते रज्ज्वां वै सर्पचेतसः ।**
**द्रष्टुः स्वरूपाविदुषो योऽहं यदजितेन्द्रियः ॥ १७ ॥**

**यः** विवेकी सम्राडपि अहं **यत्** यया **अजितेन्द्रियः** अभवं **एकान्ते** रहसि स्थितयेत्यर्थः । **एतया** निमित्तेन **रज्ज्वां सर्पचेतस** इव स्थितस्य अन्यथाज्ञानवतः इत्यर्थः । अनिष्टसाधने इष्टसाधनत्वभ्रमवत इति भावः । **द्रष्टुः** अन्तर्यामिणः **स्वरूपाविदुषः** उपकृतस्मरणरहितस्येत्यर्थः । इदं ज्ञानतिरोधानं अहो प्रमदानिरीक्षणाज्जातमित्यर्थः । अतः अनया **मे किं** प्रयोजनम् । अतः इयं मयाऽपि त्याज्येति भावः ॥ १७ ॥

पुनश्च विषयनिन्दां कुरुते- **क्वायमिति ।**

**क्वायं मलीमसः कायो दौर्गन्ध्याद्यात्मकोऽशुचिः ।**
**क्व गुणाः सौमनस्याद्या ह्यध्यासोऽविद्यया कृतः ॥ १८ ॥**

**मलीमसः** जुगुप्सितः । स्वेन विण्मूत्रादिसाहित्येनेति भावः । दौर्गन्ध्यः दुर्गन्धोपेतः, रुधिरमांसादितादात्म्यकः । **अशुचिः** मानुषदेहानां चक्षुरादिद्वारेषु सदा मलयुक्तत्वादिति भावः । सु= शोभनं प्रीतियुक्तम् । मनः येन तत् सुमनसं= सौन्दर्यं, सुमनसमेव **सौमनस्यं** सौन्दर्याद्या गुणाः क्व ? उक्तदोषयुक्तस्य कायस्य क्व सन्ति ? अतः **अविद्यया** विषयासक्त्या **अध्यासः कृतः** अशोभने शोभनत्वभ्रमः कृतः ॥ १८ ॥

सर्वसाधारणे देहे 'अयं स्वस्यैव' इति भ्रमश्च त्याज्य इत्याशयेनाह- **पित्रोरिति** ।

**पित्रोः किं स्विन्नु भार्यायाः स्वामिनोऽग्नेः श्वगृध्रयोः ।**
**किमात्मनः किं सुहृदामिति यो नावसीयते ॥ १९ ॥**

**पित्रोः** मातुः पितुश्च क्रयादियोग्य इति भावः । **किंस्वित्** उत **भार्याया** भोग्यतया तदीय इति भावः । **स्वामिनः** नृपतेः विष्टिग्रहणयोग्य इत्यर्थः । **अग्नेः** भोज्य इति भावः । श्वा च गृध्रश्च, तयोर्भक्ष्यः स्वस्य किं वा । **सुहृदां** युद्धे साहाय्यम् इच्छताम् अधीनः देहः इति बहूनां भोग्यः **नावसीयते** कदा उपप्लुतो भवति इति न निश्चीयते ॥ १९ ॥

**तस्मिन् कलेबरेऽमेध्ये तुच्छनिष्ठे विषज्जते ।**
**अहो सुभद्रं सुनसं सुस्मितं च मुखं स्त्रियः ॥ २० ॥**

**तस्मिन्** तादृशे **अमेध्ये** अपवित्रे तामसगुणप्राचुर्यादिति भावः । तुच्छवत्= अश्वविषाणवत् निष्ठा= व्यवस्थितिर्यस्य सः । विवेकिनां अनुपादेय इत्यर्थः । तुच्छा= तामसा **निष्ठा** स्थितिर्यस्य तस्मिन् यो **विषज्जते** आसक्तः स मन्द इत्यर्थः । कामुकानां आसक्तिकारणं भ्रान्तिमनुकरोति- **अहो सुभद्रमिति** । **स्त्रियः मुखं सुस्मितम्**

इत्यादिभ्रान्तिः अहो इत्यर्थः । स्मितादेः बन्धकारणत्वेन अनुपादेयत्वात् इति भावः ॥ २० ॥

**त्वङ्मांसरुधिरस्नायुमेदोमज्जास्थिसंहतौ ।**
**विण्मूत्रपूये रमतां क्रिमीणां कियदन्तरम् ॥ २१ ॥**

स्नायुः मेदः मज्जा इति अस्थिसंसक्तधातूनां संज्ञाः । त्वगादीनां संहतौ= सङ्घातरूपे देहे **रमतां** पुरुषाणां **विण्मूत्रपूयेषु पूया** पूतिरुधिरसङ्घातः **रमतां क्रिमीणां अन्तरं** विशेषः किम् ? विशेषो नास्तीत्यर्थः । क्रिमिवदयमपि जनहेय इति भावः ॥ २१ ॥

ननु गृहस्थस्य स्त्रीपरित्यागासंभवात् किमर्थमियं स्त्रीनिन्दा इत्याशङ्क्याह- **अथापीति ।**

**अथापि नो विषज्जेत स्त्रीषु स्त्रैणेषु चार्थवित् ।**
**विषयेन्द्रियसंयोगान्मनः क्षुभ्यति नान्यथा**[1] **॥ २२ ॥**

**अथाऽपि** गृहस्थेन स्त्रियः अपरित्याज्यत्वेऽपि **अर्थवित्** स्वप्रयोजनविशेषज्ञः **स्त्रैणेषु** कामुकेषु **स्त्रीषु** च न **विषज्जेत** सक्तो न भवेत् । विषयसान्निध्ये सति **मनः क्षुभ्यति,** अविहितसमयेऽपि इत्यर्थः । **अन्यथा** विषयसान्निध्याभावसमये **मनः** तथा **न क्षुभ्यति** ॥ २२ ॥

विषयध्यानं अनिष्टसाधनम् । विरागस्तु इष्टसाधनमित्याह- **अदृष्टादिति ।**

**अदृष्टादश्रुताद् भावान्न भाव उपजायते ।**
**असंप्रयुञ्जतः प्राणान् शाम्यति स्तिमितं मनः ॥ २३ ॥**

---
[1] 'नान्यदा' इति पाठान्तरम् ।

**अदृष्टात् भावाद्** विषयात् **भावः** वासना नोपजायते, किन्तु दृष्टादेव । अतो विषयदर्शनं न कार्यमिति भावः । किञ्च विषयदर्शनं मनश्चलनकारणम्, विषयेभ्यः इन्द्रियकर्षणं तु मनस्थैर्यकारणमित्याह- **असम्प्रयुञ्जत** इति । **प्राणान्** इन्द्रियाणि **असम्प्रयुञ्जतः** विषयेष्वमुञ्चतः इन्द्रियैर्विषयानुभवमकुर्वतः **मनः स्तिमितं** निश्चलं भवति । **शाम्यति** परमात्मनि स्थिरं भवति । शाम्यति च विषयस्मरणरहिता च भवति । वासनानामपाटवादिति भावः ॥ २३ ॥

**तस्मात् सङ्गो न कर्तव्यः स्त्रीषु स्त्रैणेषु चेन्द्रियैः ।**
**विदुषां चाप्यविस्रभ्यः षड्वर्गः किमु मादृशाम् ॥ २४ ॥**

**तस्मात्** विषयसङ्गस्य अनिष्टकारणत्वात्, विषयपरित्यागस्य इष्टसाधनत्वात्, इन्द्रियैः विषयभोगो न कार्यः । इन्द्रियाणां स्वाधीनत्वेन विश्वसनीयत्वाभावात् इत्याह- **विदुषामिति । विदुषां** परमहंसानां विषयदोषज्ञानिनाम् **अपि,** षण्णां इन्द्रियाणां वर्गः= समुदायः **अविस्रभ्यः** अनधीनानि इन्द्रियाणीति विश्वसनीयो भवति । **मादृशां** विषयभोगवतां गृहस्थानां षड्वर्गः अविस्रभ्य इति किमु वक्तव्यम् ॥ २४ ॥

**श्रीभगवानुवाच-**
**एवं प्रगायन् नृपदेवदेवः स उर्वशीलोकमथो विहाय ।**
**आत्मानमात्मन्यवगम्य मां वा उपारमज्ज्ञानविधूतमोहः ॥ २५ ॥**

**उर्वशीलोकं** उर्वशीनिकेतनं **विहाय आत्मनि** स्वहृदये **आत्मानम्** अन्तर्यामिणं **अवगम्य** ज्ञात्वा ज्ञानेन महदपरोक्षात् **विधूतः मोहः** अहङ्कारममकारलक्षणभ्रमः येन स एतादृशः सन् **उपारमत्** समाधिसम्पन्नो अभूदित्यर्थः ॥ २५ ॥

प्रथमं विरागभक्तिज्ञानप्राप्तौ उपायमाह- **ततो दुःसङ्गेति ।**

**ततो दुःसङ्गमुत्सृज्य सत्सु सज्जेत बुद्धिमान् ।**

**सन्त एवास्य च्छिन्दन्ति मनोव्यासङ्गमुक्तिभिः ॥ २६ ॥**

**मनोव्यासङ्गः** विषयभोगः पुरुषार्थ इति भ्रमः तम् **उक्तिभिः** विषयदोषज्ञापकवचनैः **मनोव्यासङ्गं** ईश्वरमाहात्म्यावधारणराहित्यलक्षणं संशयादिकं वा **च्छिन्दन्ति** ॥ २६ ॥

सदसद्विभागज्ञानेन सत्सङ्गसंपादनार्थं लक्षणमाह- **सन्तोऽनपेक्षा** इति ।

**सन्तोऽनपेक्षा मच्चित्ताः प्रशान्ताः समदर्शनाः**[1] **।**

**निर्ममा निरहङ्कारा निर्द्वन्द्वा निष्परिग्रहाः ॥ २७ ॥**

**अनपेक्षाः** ऐश्वर्यादिविषयापेक्षारहिताः **सन्तः मच्चित्ताः** एते भक्ताः सन्तः **प्रशान्ताः** रागद्वेषादिशान्त्युपेताः **समदर्शनाः** हेयरागादिना उपादेयत्वबुद्धिरहिताः । यथावस्तु तथा ज्ञानवन्तः । **समदर्शिनः** परमात्मात्मांशांशिषु समबुद्धयः । देहादिषु **निर्ममाः** 'ममैव' इति बुद्धिरहिताः । स्वव्यापारेषु **निरहङ्काराः** 'अहमेव कर्ता' इति भ्रमरहिताः **निर्द्वन्द्वाः** मानापमानादिद्वन्द्वसहिष्णवः । **निष्परिग्रहाः** भार्यारामादिपरिग्रहरहिताः । तत्र अभिमानरहिता वा ॥ २७ ॥

**तेषु नित्यं महाभाग महाभागेषु मत्कथाः ।**

**सम्भवन्ति हिता नृणां जुषतां प्रपुनन्त्यघम् ॥ २८ ॥**

महान्= पूर्णः परमात्मा भागः= अत्युपादेयार्थो यस्य सः । हे **महाभाग !** एवं भावः **महाभागेषु** महात्मसु इति वा । **अघं पुनन्ति** परिहरन्ति ॥ २८ ॥

एवं गुणोपेतानां कथाश्रवणस्य भक्तिलक्षणं फलमाह- **ता ये शृण्वन्तीति ।**

---

[1] 'समदर्शिनः' इति पाठान्तरम् ।

**ता ये शृण्वन्ति गायन्ति ह्यनुमोदन्ति चादृताः ।**
**मत्पराः श्रद्धधानाश्च भक्तिं विन्दन्ति ते मयि ॥ २९ ॥**

**श्रद्धधानाः** आस्तिकाः सन्तः, अहमेव परः= सर्वोत्तमो येषान्ते **मत्पराः ।** परमां **भक्तिं विन्दन्ति** प्राप्नुवन्ति । श्रवणमननध्यानादिक्रमेणेति भावः ॥ २९ ॥

सर्वश्रेयसां पुष्कलसाधनं भक्तिरित्याह- **भक्तिं लब्धवत** इति ।

**भक्तिं लब्धवतः साधो किमन्यदवशिष्यते ।**
**मय्यनन्तगुणे ब्रह्मण्यानन्दानुभवात्मनि ॥ ३० ॥**

**अन्यत्** पुष्कलसाधनं किमवशिष्यते ? न किमपि ? ईश्वरप्रसादलक्षणानुपमफलस्य भक्त्यैकसाध्यत्वात् इति भावः । तत्वदेवादिषु या अर्थोचिता भक्तिः तदपेक्षया मयि सर्वोत्कृष्टया भक्त्या भाव्यमित्याह- **मय्यनन्तगुणेति ।** आनन्दानुभवः आत्मा= देहो यस्य तस्मिन् मयि । आनन्दानुगुणत्वाद्यनुसन्धानप्राप्ता परमभक्तिः पुरुषार्थप्रदा इति भावः ॥ ३० ॥

साधुसंगतिं स्तौति- **यथेति ।**

**यथोपाश्रयमाणस्य भगवन्तं विभावसुम् ।**
**शीतं भयं तमो व्येति साधून् संसेवतस्तथा ॥ ३१ ॥**

**विभावसुं** सूर्यम् **उपाश्रयमाणस्य** सम्बध्य स्थितस्य उपासनां कुर्वत इति वा । **भयं** वृकचोरादिभयम् । **व्येति** नश्यति तथा अज्ञाननाशात् तत्प्राप्तं भयं नश्यति इति भावः ॥ ३१ ॥

**निमज्ज्योन्मज्जतां घोरे भवाब्धौ ते परायणम् ।**
**सन्तो ब्रह्मविदः शान्ता नौर्दृढेवाप्सु मज्जताम् ॥ ३२ ॥**

**अन्नं हि प्राणिनां प्राण आर्तानां शरणं त्वहम् ।**
**धर्मो वित्तं नृणां प्रेत्य सन्तोऽतो बिभ्यतोऽरणम् ॥ ३३ ॥**

**अन्नं प्राणः** प्राणप्रदः यथा **प्रेत्य** लोकान्तरं प्राप्य स्थितानां **धर्मः वित्तं** सुखसाधनं यथा तथा । **अतः** अज्ञानात् **बिभ्यतः** चेतनस्य **सन्तः अरणं** रक्षका इत्यर्थः ॥ ३३ ॥

**सन्तो दिशन्ति चक्षूंषि बहिरर्कः समुत्थितः ।**
**देवता बान्धवाः सन्तः पिता माताऽहमेव च ॥ ३४ ॥**

**समुत्थित** उदितः **अर्कः** बहिरर्थविषयकं ज्ञानं दिशति= ददाति । **सन्तस्तु चक्षूंषि** सर्वार्थविषयज्ञानानि **दिशन्ति** प्रददति । देवतादयः सर्वे सन्तः । **अहमेव** एवमुपकर्तृषु अहं प्रधान इत्यर्थः । स्वातन्त्र्यलक्षणप्राधान्यज्ञापनाय ऐक्यव्यपदेश इति भावः ॥ ३४ ॥

ज्ञानसम्पन्नः ऐलनामा सम्राट् ततः किमकरोत् इति जिज्ञासायामाह- **चेतसेति ।**

**चेतसेळासुतोऽप्येवम् उर्वश्या लोकनिःस्पृहः ।**
**मुक्तसङ्गो महीमेताम् आत्मारामश्चचार ह ॥ ३५ ॥**

**॥ इति श्रीमद्भागवते एकादशस्कन्धे षड्विंशोऽध्यायः ॥**

**चेतसा** विषयदोषस्मरणेन उर्वशीलोकनिरीक्षणे **निस्पृहः** सन् **ऐलः** इलायाः सुतः **मुक्तसङ्गः** साम्राज्यमपि परित्यज्येत्यर्थः । आत्मना आरामः= सुखं अन्तर्यामि-ध्यानप्राप्तसुखोपेतः **चचार** ।

॥ इति श्रीयादवेन्द्रयतिविरचिते एकादशस्कन्धव्याख्याने षड्विंशोऽध्यायः ॥

# 27 | सप्तविंशोऽध्यायः

**उद्धव उवाच-**

**क्रियायोगं समाचक्ष्व भवदाराधनं प्रभो ।**

**येन त्वां ये यथाऽर्चन्ति सात्वताः सात्वतर्षभ ॥ १ ॥**

क्रियालक्षणयोगः उपायः तम् । विविधाः क्रियाः सन्ति तासु मध्ये भवदाराधनरूपं **येन** क्रियायोगेन **यथा अर्चन्ति** केन क्रमेण कैर्द्रव्यैः **अर्चन्ति** तं प्रकारं **समाचक्ष्व** ॥ १ ॥

क्रियायोगः मुमुक्षोः अत्युपादेयः अतः पृच्छामीत्याह- **एतदिति ।**

**एतद्वदन्ति मुनयो मुहुर्निःश्रेयसं नृणाम् ।**

**नारदो भगवान् व्यास आचार्योऽङ्गिरसः सुतः ॥ २ ॥**

एतत् आराधनं निःश्रेयसकरम् इति **मुहुः वदन्ति । अङ्गिरसः सुतः आचार्यः** देवानाम् आचार्यः बृहस्पतिः ॥ २ ॥

**निःसृतं ते मुखाम्भोजाद् यदाह भगवानजः ।**

**पुत्रेभ्यो भृगुमुख्येभ्यो देव्यै च भगवान् भवः ॥ ३ ॥**

**एतद् वै सर्ववर्णानाम् आश्रमाणां च सम्मतम् ।**

**श्रेयसामुत्तमं मन्ये स्त्रीशूद्राणां च मानद ॥ ४ ॥**

**निःसृतं** त्वया उपदिष्टं **अजो** ब्रह्माऽपि **भृगुमुख्येभ्यः यदाह** तदेव **भवः** श्रीरुद्रः **देव्यै** शिवायै आह । **एतत्** आराधनं **श्रेयसां** श्रेयस्साधनानां मध्ये ॥

ननु क्रियायोगस्य बन्धकत्वात् मुमुक्षोः किं तत्प्रश्नेन? इत्याशङ्क्याह- **कर्म-बन्धेति** ।

**एतद्धि कमलपत्राक्ष कर्मबन्धविमोचनम् ।**
**भक्ताय चानुरक्ताय ब्रूहि विश्वेश्वरेश्वर ॥ ५ ॥**

**श्रीभगवानुवाच-**
**न ह्यन्तोऽनन्तपारस्य कर्मकाण्डस्य चोद्धव ।**
**संक्षिप्तं वर्णयिष्यामि यथावदनुपूर्वशः ॥ ६ ॥**

**एतत्** त्वत्प्रीत्यर्थं क्रियमाणं भवदाराधनं **कर्मविमोचकं** भवति । अतः **ब्रूहि** । सङ्ख्यया अन्तः= इयत्ता पारः= मर्यादा, ताभ्यां रहितस्य । **कर्मकाण्डस्य** कर्मभागस्य[1] **अनुपूर्वशः** आदितः ॥ ६ ॥

**वैदिकस्तान्त्रिको मिश्र इति मे त्रिविधो मखः ।**
**त्रयाणामीप्सितेनैव विधिना मां समर्चयेत् ॥ ७ ॥**

वैदिकः सोमादिः **तान्त्रिकः** पञ्चरात्रं[2] **मिश्रः** वेदे पञ्चरात्रे च वर्णितः पूजादिः[3] सर्ववर्णसाधारणो वा नामसङ्कीर्तनादिः **मखः** पूजालक्षणादिः **त्रिविधः** । त्रयाणां वैदिकानां मखधर्माणां मध्ये ईप्सितेन= स्वाभिमतेन मखेन **विधिना** तत्तद्विध्युक्तरीत्या

[1] अत्र 'अन्तः सङ्ख्येयत्तामहिमा' इत्यधिकं पठ्यते, सम्पातायातं स्यात् । [2] 'तन्त्रं पञ्चरात्रम्, तत्रोक्तः तान्त्रिकः' इति पाठः सम्भाव्यते ।
[3] पुनः 'सर्ववर्णतः पूजादिः' इत्यधिकं पठ्यते ।

**यजेत** विषयीकुर्यात् । मुख्यया पूजया यजनं नाम तया क्रियया तस्य विषयीकरणम् इत्यर्थः ॥ ७ ॥

त्रैवर्णिकानां पूजाक्रममाह- **यथा स्वनिगमेनेति** ।

**यथा स्वनिगमेनोक्तं द्विजत्वं प्राप्य पूरुषः ।**
**यथा भजेत मां भक्त्या श्रद्धया तं निबोध मे ॥ ८ ॥**

**स्वनिगमेन** आश्वलायनादिसूत्रानुसारेण **उक्तं द्विजत्वं** उपनयनं **यथा** विधिमनतिक्रम्य **प्राप्य । यथा** येन क्रमेण ॥ ८ ॥

पूजासाधनान्याह- **अर्चायां इति** ।

**अर्चायां स्थण्डिलेऽग्नौ वा सूर्येऽप्सु हृदि वा द्विजे ।**
**द्रव्येण भक्तियुक्तोऽर्चेत् स्वगुरुं माममायया ॥ ९ ॥**

**पूर्वं स्नानं प्रकुर्वीत धौतदन्तोऽङ्गशुद्धये ।**
**उभयैरपि च स्नानं मन्त्रैर्मृद्ग्रहणादिभिः ॥ १० ॥**

**सन्ध्योपास्त्यादिकर्माणि विधिनाऽऽवेदितानि मे ।**
**पूजां तैः कल्पितैः[1] सम्यक् सङ्कल्पः कर्मपावनः ॥ ११ ॥**

**अर्चायां** प्रतिमायां **द्रव्येण** पूजोपयुक्तवस्तुभिः **एवमुभयैः** श्रुत्युक्तैः पञ्चरात्राद्युक्तैः **मन्त्रैः मृद्ग्रहणादिभिः** मृद्गोमयादिना स्नानं संध्यादिनित्यकर्माणि कुर्वीत । **सम्यक् कल्पितैः** कृतैः **तैः** सन्ध्यादिकर्मभिः मे **पूजां** कुर्वीत । अनन्तरं मे आराधनार्थं **कर्मपावनं** कर्मशुद्धिकारणं यः **सङ्कल्पः** 'स्वरूपगुणैः भगवदधीनः भगवता प्रेरितोऽहं पूजां करिष्ये' इत्यादिरूपः तं कुर्यात् ॥ ११ ॥

---

[1] 'कल्पयेत' इति पाठान्तरम् ।

पूजाधिष्टानप्रतिमाविशेषानाह- **शैलीति** ।

**शैली दारुमयी लौही लेप्या लेख्या च सैकती ।**

**मनोमयी मणिमयी प्रतिमाऽष्टविधा स्मृता ॥ १२ ॥**

**शैली** शिलामयी । **लेप्या** गुडरससंयुक्तचित्रणपूर्णपिष्टादिविरचिता प्रतिमा । **लेख्या** चित्ररूपलिखिता । **मनोमयी** स्वयत्नात् वासनारूपेण परिणता प्रतिमा । **मणिमयी** स्फटिकादिरचिता ॥ १२ ॥

द्विजाद्यधिष्ठाने कर्तव्यमाह- **चलाचलेति** ।

**चलाचलेति द्विविधा प्रतिष्ठा जीवमन्दिरम् ।**

**उद्वासावाहने न स्तः स्थिरायामुद्धवार्चने ॥ १३ ॥**

**अस्थिरायां विकल्पः स्यात् स्थण्डिले तु भवेद् द्वयम् ।**

**स्नपनं तु विलेप्यायामन्यत्र परिमार्जनम् ॥ १४ ॥**

**द्रव्यैः प्रसिद्धैर्मद्यागः प्रतिमादिष्वमायिनः ।**

**भक्त्या चैव यथालब्धैर्हृदि भावेन चैव हि ॥ १५ ॥**

**स्नानालङ्करणं प्रेष्ठम् अर्चायामेव तूद्धव ।**

**स्थण्डिले तत्वविन्यासो वह्नावाज्यप्लुतं हविः ॥ १६ ॥**

**प्रतिष्ठा** अचलप्रतिमायां कार्या । **जीवमन्दिरं** देहः । स्थिरायाम् अचलप्रतिमायाम् आवाहनादि **उद्वासावाहने नस्तः । अस्थिरायां** द्विजादौ प्रतिमायां स्वयं व्यक्ते **विकल्पः** क्वचित् उद्वासनाद्यभावः । लेख्यायां **विलेप्यायां** च **परिमार्जनम् अन्यत्र स्नपनम् । प्रसिद्धैः** पवित्रत्वेन प्रसिद्धैः । **यागः** पूजा । **हृदि भावेन** ध्यानेन सह **भक्त्या** च ।

पूजोपयुक्तधनालाभे किं कर्तव्यम् इति जिज्ञासायामाह- **उद्धवेति । स्थण्डिले** तत्वस्य परमात्मनः विन्यासः= आवाहनम् ॥ १६ ॥

**सूर्ये चाभ्यर्हणं प्रेष्ठं सलिले सलिलादिभिः ।**
**श्रद्धयोपहृतं प्रेष्ठं भक्तेन मम वार्यपि ।**
**गन्धो धूपः सुमनसो दीपोऽन्नाद्यं च किं पुनः ॥ १७ ॥**

**शुचिः सम्भृतसम्भारः प्राग्दर्भैः कल्पितासनः ।**
**आसीनः प्रागुदग्वाऽर्चेदर्चायां त्वथ सम्मुखः ॥ १८ ॥**

**वार्यपि** धनधान्यादिपूजासाधनेभ्योऽपि **प्रेष्ठं** भक्तिसाहित्यादुत्कृष्टम् । **संभृताः** स्वशक्त्या सम्पादिताः **सम्भाराः** पूजोपयुक्तवस्तूनि येन सः । **सम्मुखः** सुमुखः सन् बाह्यवस्तुचिन्तां परित्यज्येति भावः । **सम्मुखः** अभिमुखो वा ॥ १८ ॥

**कृतन्यासो मदर्चां च पाणिनाऽभिमृजेद् बुधः ।**
**कलशं प्रोक्षणीयं च यथावदुपसादयेद् ॥ १९ ॥**

**कृतन्यासः** षडङ्गन्यासमातृकान्यासवान् । **मदर्चां** प्रतिमां **पाणिना अभिमृजेत्** मूलमन्त्रैः परिशुद्धिं कुर्यात् । **प्रोक्षणीयं** प्रोक्षणार्थं सोदकं पात्रम् ॥ १९ ॥

**तदद्भिर्देवयजनं द्रव्याण्यात्मानमेव च ।**
**प्रोक्ष्य पात्राणि त्रीण्यद्भिस्तैस्तैर्द्रव्यैश्च साधयेत् ॥ २० ॥**

**तदद्भिः** प्रोक्षणीये स्थिताभिः शङ्खे क्षिप्ताभिः अद्भिः **देवयजनं** देवगृहं **द्रव्याणि** पुष्पनैवेद्यादिद्रव्याणि **प्रोक्ष्य । देशिकः** शास्त्रार्थाचरणसंपन्नः । पाद्यार्थं यानि त्रीणि

संपादितानि तानि **त्रीणि पात्राणि** अद्भिः, **तैस्तैर्द्रव्यैः** कर्पूरादिभिः मङ्गलद्रव्यादिभिः । **साधयेत्** पूरयेदित्यर्थः ॥ २० ॥

**पाद्यार्घ्याचमनीयार्थं त्रीणि पात्राणि देशिकः ।**

**हृदा शीर्ष्णाऽथ शिखया गायत्र्या वाऽभिमन्त्रयेत् ॥ २१ ॥**

अर्घ्यादिपात्राणि **हृदा** 'कृद्धोल्काय नमः' इति । **शीर्ष्णा** 'महोल्काय नमः' इति, **शिखया** 'वीरोल्काय नमः' इति एतैर्मन्त्रैः **अभिमन्त्रयेत्** । कृद्धोल्कादीनां हृदि विन्यासात् हृदादिव्यपदेशः ॥ २१ ॥

**पिण्डे वाय्वग्निसंशुद्धे हृत्पद्मस्थां परां मम ।**

**अण्वीं जीवकलां ध्यायेन्नादान्ते सिद्धभाविताम् ॥ २२ ॥**

**पिण्डे** देहे अन्तःकुम्भकोत्पन्नाभ्यां शुद्धे सति । जीवः कला भिन्नांशः यस्याः सा जीवकला= बिम्बमूर्तिः ताम् । **नादान्ते** नादः शब्दः तस्यान्ते हृदये स्थिताम् । सर्वप्रकारैर्विशिष्य प्रतिपादिताम् इत्यर्थः । सिद्धैः= ऋषिभिः ॥ २२ ॥

**तयाऽऽत्मभूतया पिण्डे व्याप्ते सम्पद्य तन्मयः ।**

**आवाह्यार्चादिषु स्थाप्य न्यस्ताङ्गं मां प्रपूजयेत् ॥ २३ ॥**

[1]**तन्मयः** स्वयं सर्वव्यापारेषु तत्प्रधानक इति बुद्ध्या पूजाकर्ता । **अर्चादिषु** प्रतिमादिषु **आवाह्य** स्थाप्य । **न्यस्ताङ्गं** मातृकादिन्यासोपेतं मां प्रपूजयेत् ॥ २३ ॥

**पाद्योपस्पर्शनार्घ्यादीनुपचारान् प्रकल्पयेत् ।**

**धर्मादिभिश्च नवभिः कल्पयित्वाऽऽसनं मम ॥ २४ ॥**

---

[1] यद्यप्यत्र भागवततात्पर्ये 'व्याप्तो भूतश्च नित्यं यदात्मभूतो हरिस्ततः' इत्यात्मभूतशब्दार्थः आचार्यैः प्रदर्शितः । परन्तु प्रकृतव्याख्यायां नोल्लिखितः । लिपिकृत्प्रमाद इति मन्ये ।

**पद्ममष्टदलं तत्र कर्णिकाकेसरोज्ज्वलम् ।**
**उभाभ्यां वेदतन्त्राभ्यां मह्यं तूभयसिद्धये ॥ २५ ॥**

**उपस्पर्शनम्** = आचमनम् **आसनं** रत्नासनं **धर्मादिभिः** पीठदेवैः वाय्वादिभिः । **नवभिश्च** विमलादिशक्तिभिः । **कल्पयित्वा** तन्त्रोक्तरीत्या पीठपूजां कृत्वेत्यर्थः । **उभाभ्यां** भक्तिश्रद्धाभ्यां सह वेदेन तन्त्रेण= पञ्चरात्रविधानेन च । **उभयसिद्धये** अज्ञानादिलक्षणानिष्टनिवृत्तये ज्ञानलक्षणेष्टप्राप्तये च **मह्यम्** एवं कुर्यात् ॥ २५ ॥

**सुदर्शनं पाञ्चजन्यं गदासीषुधनुर्हलान् ।**
**मुसलं कौस्तुभं मालां श्रीवत्सं चानुपूजयेत् ॥ २६ ॥**

**नन्दं सुनन्दं गरुडं प्रचण्डं चण्डमेव च ।**
**महाबलं बलञ्चैव कुमुदं कुमुदेक्षणम् ॥ २७ ॥**

**दुर्गां विनायकं व्यासं विश्वक्सेनं गुरून् सुरान् ।**
**स्वे स्वे स्थाने त्वभिमुखान् पूजयेत् प्रोक्षणादिभिः ॥ २८ ॥**

**चन्दनोशीरकर्पूरकुङ्कुमागरुवासितैः ।**
**सलिलैः स्नापयेन्मन्त्रैर्नित्यदा विभवे सति ॥ २९ ॥**

सुदर्शनादिदेवतानां नित्यं परमात्मसान्निध्येन प्रीतिविषयत्वाद् आवरणदेवतावत् पूजात्वमितिभावः । **प्रोक्षणादिभिः** अर्घ्यादिभिः प्रधानं हरिं प्रति **अभिमुखान्** एतान् पूजयेत् । **उशीरं** सुरभिः तृणपादाः अगरुप्रभृतिभिः वासितैः= सुरभितया कृतैः ॥ २९ ॥

**स्वस्य घर्मानुवाकेन महापुरुषविद्यया ।**
**पौरुषेणापि सूक्तेन धामनीराजनादिभिः ॥ ३० ॥**

**वस्त्रोपवीताभरणपत्रस्रग्गन्धलेपनैः ।**
**अलंकुर्वीत सप्रेम मद्भक्तो मां यथोचितैः ॥ ३१ ॥**

**स्वस्य सूक्तेन** विष्णुसूक्तेनेत्यर्थः । **घर्मानुवाकेन** 'घर्मा समन्तात्' इत्यनुवाकेन । **महापुरुषविद्यया=** जितन्तेस्तोत्रेण सहस्रनाम्ना वा । धामसूक्तं 'समुद्रादूर्मिरिति' । विष्णुं नितरां रञ्जयतीति नीराजनम् पवमानसूक्तं तेन च ॥ ३१ ॥

**पाद्यमाचमनीयं च गन्धं सुमनसोऽञ्जनम् ।**
**धूपदीपोपहार्याणि दद्यान्मे श्रद्धयाऽर्चकः ॥ ३२ ॥**

**गुडपायससर्पींषि शश्कुल्यापूपमोदकान् ।**
**संयावं दधिसूपांश्च नैवेद्यं सति कल्पयेत् ॥ ३३ ॥**

**अभ्यङ्गोन्मर्दनादर्शदन्तधावाभिषेचनम् ।**
**अन्नादि नृत्यगीतादि पर्वणि स्युस्तथाऽन्वहम् ॥ ३४ ॥**

**सुमनसः** पुष्पाणि । **अञ्जनं** नेत्रालङ्कारम् । **उपहार्याणि** देशकालानुसारेण सम-र्चनार्हाणि । **सर्पिः=** घृतं, **संयावः** गोधूमभक्ष्यम् । **आदर्शः** दर्पणम् । **पर्वणि** पौर्णम्यादौ ॥ ३४ ॥

अनुयागं मन्त्रोपासनार्थं चाह- **विधिनेति** ।

**विधिना विहिते कुण्डे मेखलावर्तवेदिभिः ।**
**अग्निमाधाय परितः समूह्योत्पाणिनोदितम् ॥ ३५ ॥**

**परिस्तीर्याथ पर्युक्षेदन्वाधाय यथाविधि ।**
**प्रोक्षणीयानि द्रव्याणि प्रोक्ष्याग्नावावहेत माम् ॥ ३६ ॥**

**तप्तजाम्बूनदप्रख्यं शङ्खचक्रगदाम्बुजैः ।**
**लसच्चतुर्भुजं शान्तं पद्मकिञ्जल्कवाससम् ॥ ३७ ॥**

**स्फुरत्किरीटकटककटिसूत्रवराङ्गदम् ।**
**श्रीवत्सवक्षसं भ्राजत्कौस्तुभं वनमालिनम् ॥ ३८ ॥**

**ध्यायन्नभ्यर्च्य दारूणि हविषाऽभियुतानि च ।**
**प्रास्याज्यभागावाघार्य दत्वा चाज्यप्लुतं हविः ॥ ३९ ॥**

**जुहुयान्मूलमन्त्रेण षोडशार्चाविधानतः ।**
**धर्मादिभ्यो यथान्यायं मन्त्रैः स्विष्टकृतं बुधः ॥ ४० ॥**

**अभ्यर्च्याग्निं नमस्कृत्य पार्षदेभ्यो बलिं हरेत् ।**
**मूलमन्त्रं जपेद् ब्रह्म स्मरन् नारायणात्मकम् ॥ ४१ ॥**

**दत्वाऽऽचमनमुच्छेषं विष्वक्सेनाय कल्पयेत् ।**
**मुखवासं सुरभिमत् ताम्बूलाद्यमथार्हयेत् ॥ ४२ ॥**

**उपगायन् गृणन् नृत्यन् कर्माण्यभिनयन् मम ।**
**मत्कथाः श्रावयन् शृण्वन् मुहूर्तक्षणिको भवेत् ॥ ४३ ॥**

अग्निं **समूह्य** एकीकृत्य । **उत्पाणिना** पर्युक्षेत् कुम्भस्योपरि । **आघार्य** आहुतिविशेषं दत्त्वा । मूलमन्त्रमष्टाक्षरं, **मुखवासं** मुखमार्जनवस्त्रम् ।

मम कर्माणि **गृणन्** स्तुवन् सन् कर्माणि **अभिनयन्** अभितो नयन् सर्वेषां प्रकाशयन् इत्येतद् विवृणोति- 'मत्कथाः श्रावयन्' इति । एवं मुहूर्तक्षणिक इव नयेत् क्षणमिव नयेदित्यर्थः ॥ ४३ ॥

**स्तवैरुच्चावचैः श्रौतैः पौराणैः प्राकृतैरपि ।**
**स्तुत्वा प्रसीद भगवन्निति वन्देत दण्डवत् ॥ ४४ ॥**

उच्चावचैः= विस्तृतैः संक्षिप्तैः । **श्रौतैः स्तवैः** अपौरुषेयस्तुतिभिः, **प्राकृतैः** पौरुषेयैः, पौराणैः स्तोत्रैः ॥ ४४ ॥

**शिरो मत्पादयोः कृत्वा बाहुभ्यां च परस्परम् ।**
**प्रपन्नं पाहि मामीश भीतं मृत्युग्रहार्णवात् ॥ ४५ ॥**

**बाहुभ्यां च वन्देत् । परस्परम्** अङ्गुलीश्च कृत्वा ॥ ४५ ॥

**ततः शेषां मया दत्तां शिरस्याधाय सादरम् ।**
**उद्वासयेच्चेदुद्वास्यं ज्योतिर्ज्योतिषि तत् पुनः ॥ ४६ ॥**

**आधाय शिरसि** न्यस्य । **ज्योतिः** प्रतिमायां सन्निधापितं बिम्बांशम् उत्पाद्य उद्धृत्य **ज्योतिषि** बिम्बे **उद्वासयेत्** ॥ ४६ ॥

**अर्चादिषु यथा यत्र श्रद्धा मां तत्र चार्चयेत् ।**
**सर्वभूतेष्वात्मनि च सर्वात्माऽहमवस्थितः ॥ ४७ ॥**

**अर्चादिषु यत्र** प्रतिमाविशेषे **श्रद्धा तत्र माम् अर्चयेत आत्मनि** स्वस्मिन् मां भोग्यैरर्चयेत् । तत्र निमित्तमाह- **सर्वात्मा** सर्वान्तर्यामी । **अहमवस्थितः** स्वस्मिन्नपि स्थितो यतः अतः सर्वत्र मां पूजयेत् ॥ ४७ ॥

**एवं क्रियायोगपथैः पुमान् वैदिकतान्त्रिकैः ।**
**अर्चानुभावतः सिद्धिं मत्तो विन्दत्यभीप्सिताम् ॥ ४८ ॥**

क्रियाः= पूजाः, ताभिः योगः= हृदि ध्यानं, स एव च श्रेयःप्राप्त्युपायः । **अर्चानुभवतः** सालग्रामादिसान्निध्यसामर्थ्यात् प्रतिमाया आभिरूप्याद्वा प्रतिमायां स्वस्य पुनः ध्यानाद्वा ॥ ४८ ॥

**मदर्चां सम्प्रतिष्ठाप्य मन्दिरं कारयेद् दृढम् ।**
**पुष्पोद्यानानि रम्याणि पूजां तत्रोत्सवाश्रिताम् ॥ ४९ ॥**

**पूजादीनां प्रवाहार्थं महापर्वसु चान्वहम् ।**
**क्षेत्रापणपुरग्रामान् दत्वा मत्सार्ष्टितामियात् ॥ ५० ॥**

**प्रवाहार्थं** उत्तरत्र प्रवृत्त्यर्थं क्षेत्रं= भूमिः, आपणं= पण्यस्थानम् । **मत्सार्ष्टिताम्** ॥ ५० ॥

**प्रतिष्ठया सार्वभौमं सद्मना भुवनत्रयम् ।**
**पूजादिना ब्रह्मलोकं त्रिभिर्मत्साम्यतामियात् ॥ ५१ ॥**

**मामेव नैरपेक्ष्येण भक्तियोगेन विन्दति ।**
**स भक्तियोगं लभते एवं यः पूजयेत माम् ॥ ५२ ॥**

**भुवनत्रयं** तत्र पूज्यत्वं वा । ननु कर्मणः कथं मुक्तिसाधनत्वम्? सत्यम् । भक्तियोगेन सर्वापेक्षया प्रधान्येन साध्यमेतदित्याह- **मामेवेति** । तर्हि पूजादेः किं फलम् इत्यत आह- **एवं य** इति । **सः** पूजाकर्ता **भक्तियोगं** उद्रिक्ततरभक्तिं लभते । ततः मां लभते । ततः निर्दुःखत्वलक्षणं साम्यमियात् प्राप्नोतीत्यर्थः ॥ ५२ ॥

**यः स्वदत्तां परैर्दत्तां हरेत सुरविप्रयोः ।**
**वृत्तिं स जायते विड्भुग् वर्षाणामयुतायुतम् ॥ ५३ ॥**

**वृत्तिं** पूजासाधनं जीवनसाधनम्[1] । **विड्भुक्** ग्रामसूकरः । विष्ठाक्रिमिर्वा जायते ॥

वार्तादीनां फलान्याह- **कर्तुरिति ।**

**कर्तुश्च सारथेर्हेतोरनुमोदितुरेव च ।**
**कर्मणां भागिनः प्रेत्य भूयोभूयसि तत् फलम् ॥ ५४ ॥**

**॥ इति श्रीमद्भागवते एकादशस्कन्धे सप्तविंशोऽध्यायः ॥**

**कर्तुः** स्वतन्त्रस्य । **सारथेः** सदा प्रेरकस्य । **हेतोः अनुमोदितुः** द्रव्यभागार्हस्य ततः सन्तोषवतः असूयारहितस्यान्यस्य वा विघ्नमकर्तुः अन्यस्य वा फलं भवति । तत्रापि विशेषमाह- **कर्मणामिति ।** ये **भागिनः** फलयुक्ताः तेषु मध्ये **भूयसि** स्वतन्त्रकर्तरि प्रेत्य लोकान्तरं प्राप्य स्थित्वेत्यर्थः । **भूयः फलं** अधिकं फलं भवति ॥ ५४ ॥

॥ इति श्रीयादवेन्द्रयतिविरचिते एकादशस्कन्धव्याख्याने सप्तविंशोऽध्यायः ॥

---
[1] सुरस्य पूजासाधनं विप्रस्य जीवनसाधनमिति यथायोग्यमन्वयः स्वीकर्तव्यः ।

# 28 | अष्टाविंशोऽध्यायः

अहङ्कारकारणस्वप्रशंसां द्वेषादिकारणपरनिन्दां च मुमुक्षुः परित्यजेदित्याह- **पर** इति ।

**श्रीभगवानुवाच-**

**परस्वभावकर्माणि न प्रशंसेन्न गर्हयेत् ।**

**विश्वमेकात्मकं पश्यन् प्रकृत्या पुरुषेण च ॥ १ ॥**

**प्रकृत्या** सरस्वत्या **पुरुषेण** हिरण्यगर्भेण सह । चित्प्रकृत्या सहेति वा । **एकात्मकं** एकः= सर्वदेवेषु प्रधानः नारायणः आत्मा= व्याप्तो यस्मिन् तत् । **विश्वं पश्यन्** विश्वस्य सर्वव्यापारप्रवर्तकान्तर्यामिमूर्तिभिः व्याप्तं विश्वं पश्यन् इत्यर्थः । परस्य= विष्णुद्वेषिणः स्वभावं= नित्यसिद्धं गुणं कर्माणि= विहितानि वा **न प्रशंसेत्,** भक्तस्य तु प्रशंसेदेव । निषिद्धान्यपि **न गर्हयेत्** । तेन अहङ्कारभ्रम निरास इति भावः ॥ १ ॥

एवमकर्तुः विपरीतं फलमाह- **परस्वभावकर्माणीति** ।

**परस्वभावकर्माणि यः प्रशंसति निन्दति ।**

**स आशु भ्रंशते स्थानादसत्याभिनिवेशतः ॥ २ ॥**

**स** प्रशंसानिन्दाकर्ता असत्ये= स्तुतिनिन्दारूपे अभिनिवेशतः= अन्यथाज्ञान-दार्ढ्यात्, अभक्ते गुणस्य दोषत्वात्, भक्ते अगुणस्य अदोषत्वादिति भावः । **स्थानात्** स्वपुण्यलोकात् **भ्रंशते** पततीत्यर्थः ॥

ननु देहेन्द्रियादिषु जीवस्य स्वातन्त्र्यं भवेत् । अतः अहङ्कारादिः कथं भ्रमः ? इत्याशङ्क्याऽऽह- **तैजस** इति ।

**तैजसे निद्रयाऽऽपन्ने पिण्डस्थो नष्टचेतनः ।**

**मायां प्राप्नोति मृत्युं वा तद्धि नानार्थदं मनः ॥ ३ ॥**

**तैजसे** तैजसाहङ्कारजन्ये इन्द्रियसमूहे **निद्रया आपन्ने** सति, निद्रया सुप्ते सति, **पिण्डस्थः** देहस्थः जीवः **नष्टचेतनः** बाह्यज्ञानशक्तिप्रतिबन्धवान् भवति । **मायां** स्वप्नं **प्राप्नोति** । ननु स्वप्ने विषयसद्भावे किं कारणम् इति जिज्ञासायामाह- **तद्धीति** । **हि** यस्मात् **मनः नानार्थदं** विविधविषयप्रापकम् । विषयज्ञानजनकमनसि तथातथा वासनानां सम्भवादिति भावः । **तत्** तस्मात् स्वप्नार्थप्रतीतिरित्यर्थः । देहो न जीवाधीन इति स्पष्टमाह- **मृत्युमिति** । कदाचित् **मृत्युं** सुनिद्राम् आप्नोति । अतः देहेन्द्रिय-तद्व्यापारादिः परतन्त्र इति भावः ॥ ३ ॥

ननु 'विष्णुद्वेषिषु प्रशंसा न कार्या'इत्युक्तम् तत्र किं निमित्तम् ? इति जिज्ञासायामाह- **किं भद्रमिति ।**

**किं भद्रं किमभद्रं वा द्वैतस्यावस्तुनः कियत् ।**

**वाचोदितं तदनृतं मनसा ध्यातमेव च ॥ ४ ॥**

**अवस्तुनः** वस्तु निर्विकारं, तद्भिन्नम् अवस्तु जीवः सविकारः । न विद्यते वस्तु सुखं यस्य इति वा । तस्य, **द्वैतस्य** अशुभरूपस्य **भद्रं** मङ्गलं किम् अस्ति । न किमपि । यथा कर्मप्राप्तं अशुभं तथा शुभमपि भवेदित्याशङ्क्याह- **किमभद्रमिति** । **द्वैतस्य** स्वभावतः अत्यन्तम् अशुभरूपस्य कर्मप्राप्तम् **अभद्रं** वा **कियत्** । तत्स्वरूपा-पेक्षया अल्पम्, गण्यं न भवतीत्यर्थः । महाऽशुभरूपे तस्मिन् शुभमपि अशुभमेवेति

भावः । **तत्** तेन निमित्तेन **मनसा** अशुभे पुरुषे ध्यातं शुभम् **अनृतं** नास्ति **वाचोदितम्** अपि शुभं नास्ति । अतः असज्जनप्रशंसा असत्यरूपा न कार्येति भावः ॥ ४ ॥

तर्हि स्वभावतोऽशुभस्य जीवस्य अशुभदेहादिकं अशुभलक्षणसंसारकारणं न स्यात्? अशुभस्य स्वतस्सिद्धत्वात् इत्यत आह- **छायेति** ।

**छायाप्रत्युदकाभासा ह्यसन्तोऽप्यर्थकारिणः ।**
**एवं देहादयो भावा यच्छन्त्यामृत्युतो भयम् ॥ ५ ॥**

**छाया** देह**छाया, प्रत्युदकं** नीहारः **आभासः** व्याघ्रादिप्रतिबिम्बः । यद्यपि **असन्तः** चेतनाद्यपेक्षया स्वतः व्यापारशक्तिरहिताः, अथा**पि अर्थकारिणः** भयादिजनकाः । **एते** यद्यपि असन्तः जीवापेक्षया स्वतो व्यापारशक्तिरहिताः, तथाऽपि **देहादयो** ऽपि **भावाः** पदार्थाः आमृत्युतः देहावस्थानपर्यन्तं **भयं यच्छन्ति** । तस्मादशुभस्यापि चेतनस्य संसार इति भावः ॥ ५ ॥

ननु जडस्य चेतनापेक्षया अशक्तत्वात्, चेतनस्य जडं प्रति प्रभुत्वात्, देहादिकं प्रति जीवस्य यथेष्टविनियोजकत्वाभावः कुतः? इति जिज्ञासायामाह- **आत्मैवेति** ।

**आत्मैव तदिदं विश्वं सृज्यते सृजति प्रभुः ।**
**त्रायते त्राति विश्वात्मा ह्रियते हरतीश्वरः ॥ ६ ॥**

महदहमादिकं **इदं** ब्रह्माण्डतद्गतलोकादिकं **विश्वं आत्मैव प्रभुः** पूर्णसर्वकल्याण-गुणशक्त्युपेत एव **सृजति** । स्वेन स्वयं **सृज्यते** । शक्तिवैलक्षण्यं विना दीपाद्दीपान्तर-वदिति भावः । व्यज्यते । अत्र गुणमहदादिषु वस्तुषु ब्रह्मादिदेहेषु च स्थित्वा सर्वव्यापारकरणार्थमिति भावः । विश्वेषु= वस्तुषु आत्मा= अन्तर्यामिमूर्तयो यस्य

स **विश्वात्मा** विश्वं **त्राति** स्वेन स्वावतारान् **त्रायते** च । 'एतावत्कालं तेषु तेषु वस्तुषु अंशैः स्थास्यामि' इति सङ्कल्पवान् भवतीत्यर्थः । विश्वं **हरति** भक्तानाम् अनिष्टपरिहारं करोतीति भावः । स्वेन स्वस्मिन् **ह्रियते** एकीभवतीत्यर्थः ॥ ६ ॥

**तस्मान्न ह्यात्मनोऽमुष्मादन्यो भावो निरूपितः ।**
**अनिरूपितेयं त्रिविधा निर्मूला मतिरात्मनि ॥ ७ ॥**

**इदं गुणमयं विद्धि विविधं मायया कृतम् ॥ ८ ॥**

**तस्मात् अमुष्मात्** सर्वशक्त्युपेतादन्यः= चेतनः **आत्मनः** परमेश्वरस्य भावयतीति **भावः** सृष्ट्यादिकर्ता न **निरूपितः ।** विद्वद्भिः न वर्णितः । तस्मात् जीवापेक्षया देहादिषु यथेष्टविनियोगार्हत्वं स्वतः नास्तीति भावः । ननु अहं पुरादिनिर्माता, सर्वशत्रुहन्ता, सर्वप्रजापालक इति कर्तृत्वस्वामित्वादीनामनुभवात् कथम् आदिसृष्टावपि अन्यभावराहित्यम् इत्याशङ्क्याह- **अनिरूपितेति ।** आत्मनि जीवे विद्यमाना **विविधा** सृष्टिकर्तृत्वादिविषया **मतिः अनिरूपिता** प्रमाणजन्यत्वेन विद्वद्भिर्नाङ्गीकृता । अतः **निर्मूला** प्रमाणजन्या न भवति । अतः स्वस्मिन् मुख्यतः कर्तृत्वस्वामित्वबुद्धिः भ्रम इति भावः । चेतनत्वाविशेषेऽपि ईश्वरस्य अवतारोऽभिव्यक्तिः, जीवस्य तु देहेन उत्पत्तिः इति विभागः कथम् इति जिज्ञासायामाह- **इदं गुणमयम्** इति । **इदं** जीवजातं **गुणमयं** सत् सत्वादिगुणप्रचुरं सत् सात्विकादिभेदेन **त्रिविधं** देव**मायया** ईश्वरेच्छया **कृतं,** विकारकारणदेहयुक्तं कृतम् । सृष्टिस्थितिलयानां त्रयाणां त्रिगुण-प्रधानत्वात् ते गुणबन्धेषु त्रिषु भवन्ति, न परमात्मनि इति भावः ॥ ८ ॥

**एतद् विद्वान् मदुदितं ज्ञानविज्ञाननैपुणः ।**
**न निन्दति न च स्तौति लोके चरति सूर्यवत् ॥ ९ ॥**

**मदुदितं एतद्** 'रागद्वेषादिकं बन्धकारणम्' इति **विद्वान्** ज्ञाने= सर्वतत्वानां तत्कार्याणां च ज्ञाने, **विज्ञाने** = सर्वेश्वरावधारणे च **नैपुणः** कुशलः विविधान् जनान् **न निन्दति** । विष्णुद्वेषिणं[1] **न च स्तौति**[2] । **सूर्यवत्** स्वरूपप्रकाशावरणरहितः **लोके चरति** ॥ ९ ॥

महावैराग्यमेव नित्यसौख्यकारणभक्तिध्यानादौ मुख्यकारणमित्याह- **प्रत्यक्षेणेति** ।

**प्रत्यक्षेणानुमानेन निगमेनात्मसंविदा ।**

**आद्यन्तवदसज्ज्ञात्वा निःसङ्गो विचरेदिह ॥ १० ॥**

**निगमेन** अपौरेषेयेण च । **आत्मसंविदा** स्वानुभवेन । विषयजातं स्वर्गादि **आद्यन्तवत्** उत्पत्तिनाशवत् । **असत्** दुःखासहचरितसुखसंपादने असमर्थम् इति ज्ञात्वा । **निस्सङ्गः** विषयसङ्गरहितः **इह** सर्वेश्वरे **चरेत्** सक्तो भवेदित्यर्थः ॥ १० ॥

जीवस्यैव संसारः, देहस्थत्वेऽपि ब्रह्मणो न संसार इति लोकानां ज्ञानदार्ढ्याय पृच्छति- **नैवात्मन** इति ।

**उद्धव उवाच-**

**नैवात्मनो न देहस्य संसृतिर्द्रष्टृदृश्ययोः ।**

**अनात्मस्वदृशोरीश कस्येयमुपलभ्यते ॥ ११ ॥**

**द्रष्टृदृश्ययोः** [3] साक्षाद्दृश्यं ज्ञानभिन्नं जडमेतयोः अनात्मा= अस्वप्रकाशः स्वदृक्= स्वप्रकाशः तयोर्मध्ये **देहस्य संसृतिः** दुःखारोपेण विकारः न भवति । देहे दुःखजननेऽपि देहस्य भोक्तृत्वाभावात् । **नैवात्मनः** जीवस्य[4] संसृतिः **न** भवेत् । स्वप्रकाशत्वेन

---

[1] 'विष्णुद्वेषिणं न निन्दति नच स्तौति' इति पाठः मूलपुस्तके । [2] न निन्दति, न स्तौति । स्वभावतः शुभान् प्रशंस्यान् न निन्दति । स्वभावतः अशुभान् निन्द्यान् न स्तौति इति भावः । [3] 'साक्षाद्द्रष्टा हरिः' इति योज्यम् । [4] 'हरेः' इति स्यात् ।

स्वस्मिन् दुःखारोपाभावादिति भावः । या निगमै**रुपलभ्यते** सा संसृतिः कस्य भवेत् ? ब्रह्मैव सरतीति मायिपक्षं निषेधति **अव्यय** इति ।

**आत्माऽव्ययोऽगुणः शुद्धः स्वयञ्ज्योतिरनावृतः ।**
**अग्निवद् दारुवदपि देहः कस्येह संसृतिः ॥ १२ ॥**

**अव्ययः** ह्रासरहितः । **अगुणः** गुणप्राप्तविकारविरुद्धः । **शुद्धः** धर्मविकारेणापि रहितः अथवा **शुद्धः** रागादिदोषरहितः । **स्वयञ्ज्योतिः** स्वपरविषयकप्रकाशः । **अनावृतः** अज्ञानकर्मादिज्ञानावरणरहितः । एतादृशेश्वरस्य देहे स्थितत्वमात्रेण संसार[1] इत्याह- **अग्निवदिति । दारुवत् देहः** [2] अग्निरिव ईश्वरः । तस्मात् ईश्वरः संसाररहित इति भावः ॥ १२ ॥

जीवस्य स्वप्रकाशस्यापि अहङ्काररूपमनःसङ्गात् ज्ञानशक्तिप्रतिबन्धे सति विषय-रागादिप्राप्तदुष्कर्मादिबन्धः संसारः भवतीत्याह- **यावदिति ।**

**श्रीभगवानुवाच-**
**यावद् देहेन्द्रियप्राणैरात्मनः सन्निकर्षणम् ।**
**संसारः फलवांस्तावदपार्थोऽप्यविवेकिनः ॥ १३ ॥**

स्थूलसूक्ष्मदेहाभ्यां स्थूलसूक्ष्मेन्द्रियैः प्राणैश्च **आत्मनः** जीवस्य **सन्निकर्षणं** संश्लेषः **यावत्** पर्यन्तं **तावत्** पर्यन्तम् **अविवेकिनः** स्वस्मिन् दुःखादितादात्म्यं मन्यमानस्य **संसारः** दुःखसान्निध्यप्राप्तः चेतने नीचताविकारलक्षणः संसारः **अपार्थः** नित्यानन्दाभिव्यक्तेरहेतुः । ईश्वरप्रसादस्यैव तद्धेतुत्वादिति भावः । विवेकिनां दुःखा-विनाभूतं विषयसुखं संसारस्य अर्थत्वेन न विवक्षितमिति भावः । विवेकिनः **फलवान्**

---

[1] न संसार इति स्यात् । [2] 'संसाररूपः उपद्रश्यः' इत्याधिकं मूलपुस्तके ।

संसारनिवृत्तिलक्षणफलसम्पादक इत्यर्थः । विषयविरक्त्या भक्त्यादिसम्पन्नानामिति भावः । तावत्पर्यन्तमनुवर्तते ॥ १३ ॥

संसृत्यभावस्यैव फलरूपत्वाद् निरर्थ एव संसार इत्यवधारयति- **अर्थेऽपीति ।**

**अर्थेऽप्यविद्यमानेऽपि संसृतिर्न निवर्तते ।**
**ध्यायतो विषयानस्य स्वप्नेऽनर्थागमो यथा ॥ १४ ॥**

(यद्यपि) **अर्थे** नित्यसुखाभिव्यक्तिलक्षणे प्रयोजने **अविद्यमाने** असत्यपि संसारः जीवेन निवर्तनीयः । अथापि **विषयान् ध्यायतः** जीवस्य रागद्वेषादिसम्पन्नस्येति भावः । **संसृतिः न निवर्तते** जीवापराधेन अनुवर्तते । जीवेनैव संसारः प्रवर्तत इत्यत्र दृष्टान्तमाह- **स्वप्न** इति । **अस्य** निद्रावशस्य **स्वप्ने** प्राप्ते **अनर्थागम** इव केनचिन्निमित्तेन दुःखप्राप्तिरिव ॥ १४ ॥

जाग्रत्सु यथा न दुःखं तथा स्वतन्त्रपरतन्त्रविषयकज्ञानसम्पन्नस्य अभिमान- लक्षणः संसारो नास्तीति भावेनाऽह- **यथा ह्यप्रतिबुद्धस्येति ।**

**यथा ह्यप्रतिबुद्धस्य प्रस्वापो बह्वनर्थकृत् ।**
**स एव प्रतिबुद्धस्य न वै मोहाय कल्पते ॥ १५ ॥**

**अप्रतिबुद्धस्य** अनर्थप्रापकः स्वप्नः **प्रतिबुद्धस्य मोहाय** स्वस्मिन् दुःखितादात्म्या- रोपाय **यथा नैव कल्पते** न भवति एवमिति भावः ॥ १५ ॥

ननु जीवप्रकृत्योः नित्यत्वात् प्रकृतिसम्बन्धेन प्राप्तः संसारः कथं निवर्तेत ? इति जिज्ञासायामाह- **शोकेति ।**

**शोकहर्षभयक्रोधलोभमोहस्पृहादयः ।**

**अहङ्कारस्य दृश्यन्ते जन्म मृत्युश्च नात्मनः ॥ १६ ॥**

शोकादयो विकाराः अहङ्कारेण प्राप्ताः इति भावः । **अहङ्कारस्य** सकाशात् । **आत्मनः** अहङ्कारसंश्लिष्टस्य **दृश्यन्ते,** तेन अनुभूयन्ते । **आत्मनः** अहङ्काररहितस्य तु **न दृश्यन्ते ।** केवलप्रकृतिसम्बन्धः अप्रयोजक इति भावः ॥ १६ ॥

ननु ज्ञानरूपस्य कथं अन्यथाज्ञानलक्षणः संसारः ? इत्याशङ्क्य हिरण्यगर्भस्य अन्यथाज्ञानरहितस्याप्यस्ति संसारः किमुतान्येषम् इति ज्ञापनायाह- **देहेन्द्रियेति ।**

**देहेन्द्रियप्राणमनोभिमानो जीवोऽन्तरात्मा गुणकर्ममूर्तिः ।**

**सूत्रं महानित्युरुधेह गीतः संसार आधावति कालतन्त्रः ॥ १७ ॥**

**कालतन्त्रः** कालः= दुर्गा, तदधीनः । गुणाभ्यां कर्मभिः इष्टपुण्यैः प्राप्ता मूर्तिः= देहो यस्य सः । प्रधानजीवः **अन्तरात्मा** अन्तर्यामी सन् देहादीनां नियामकः देवानां अभिमाननियामकः, सूत्रं महानित्याद्यधिकारनामभिः युक्तः **उरुधा** शास्त्रे **गीतः संसारे आधावति** प्रवर्तते ॥ १७ ॥

अचेतनापेक्षया समर्थस्य जीवस्य जडमात्रान्नसंसारः । किन्तु परमात्मलीलया प्राप्त इत्याह- **अमूलमिति ।**

**अमूलमेतद् बहुरूपरूपं मनोवचःप्राणशरीरकर्म ।**

**ज्ञानासिनोपासनया शितेन च्छित्त्वा मुनिर्गां विचरेदतृष्णः ॥ १८ ॥**

**अमूलम्** अः= विष्णुः मूलं= कारणं यस्य तत् । **बहु** रूपैः अन्तर्यामिरूपैः रूप्यते= व्यापारेषु प्रेर्यत इति **बहुरूपरूपम् ।** प्राणिनां बलादिशक्तयः ज्ञानेन्द्रियाणि

वा शरीरं कर्मेन्द्रियाणि यस्य तत् । एतत् गुणादिबन्धः । **उपासनया शितेन** निरन्तरध्याने स्वकार्ये समर्थेन अपरोक्षज्ञानाख्येन असिना **च्छित्वा,** ईश्वरप्रसादेनेति भावः । **मुनिः अतृष्णः** विषयसान्निध्येऽपि तृष्णारहितः सन् **गां विचरेत ॥** १८ ॥

ननु अयोध्यामथुरादिराज्यानां समयभेदेन बहवः स्वतन्त्रा दृश्यन्ते । एवं जगतोऽपि कालभेदेन बहवः स्वतन्त्रा नियमनकर्तारो भवेयुः न वा ? इति जिज्ञासायां आह- **ज्ञानं विवेक** इति ।

**ज्ञानं विवेको निगमस्तपश्च प्रत्यक्षमैतिह्यमथानुमानम् ।**
**आद्यन्तयोरस्य यदेव केवलं कालश्च हेतुश्च तदेव मध्ये ॥ १९ ॥**

**अस्य** जगतः **यत् केवलं** स्वतन्त्रं आदौ= उत्पत्तेः पूर्वम् उत्पत्तिसमये **हेतुः** सृष्टिकर्तृ **अन्ते** नाशसमये यत् **केवलं** स्वतन्त्रं **कालः** लयकर्तृ च सद् वर्तत **मध्येऽपि** स्थितिकालेऽपि **तदेव केवलं** तत् स्वतन्त्रमेव पालनादिकर्तृ । उक्तं च 'अनेन सर्वगतत्वमायामयशब्दादिभ्यः' (ब्र.सू. ३-२-३८) इति । तस्य केवलस्य लक्षणान्तराणि चाह- **विवेक** इत्यादि । तत् ब्रह्म **ज्ञानं** स्वपरगताशेषविशेषविषयक-ज्ञानरूपम् । **विवेक एव** अन्येभ्यः विविक्तस्वरूपमेव । परिपूर्णगुणत्वात् इति भावः । सर्वं निगमयति= प्रापयति= स्वाधीनं करोति इति **निगमः ।** सर्वैरालोच्यत्वात् तपः । **प्रत्यक्षं**[1] ज्ञानजनकत्वशक्तीनां प्रेरणार्थमिति भावः । तद् ब्रह्म आचार्यसम्प्रदायसिद्धत्वात् **ऐतिह्यम्** उच्यते । अनुमेयत्वात् श्रवणाद्यावृत्तिविषयत्वात् **अनुमानम् ॥** १९ ॥

---

[1] 'प्रत्येकमक्षेषु स्थितत्वात् प्रत्यक्षम्' इत्यर्थः ।

ननु सुरादीननुसृत्य प्रवर्तमानस्य परमात्मनः कथं प्राधान्यादि? इत्याशङ्क्य प्राधान्यज्ञापनाय दृष्टान्तमाह, अथवा जगद्देहविशिष्टस्य जगता अभेदप्रसक्त्या कथं महावैलक्षण्यम्? इत्याशङ्क्याह- **यथा हिरण्यमिति ।**

**यथा हिरण्यं स्वकृतं पुरस्तात् पश्चाच्च सर्वस्य हिरण्मयस्य ।**
**तदेव मध्ये व्यवहार्यमाणं नानापदेशैरहमस्य तद्वत् ॥ २० ॥**

**पुरस्तात्** रथाद्यलङ्कारात् पूर्वं **पश्चाच्च** अश्वान् सुवर्णालङ्कारस्य विसर्जनानन्तरं **मध्ये** अलङ्कारसमये **सर्वस्य हिरण्मयस्य** हिरण्यालङ्कारप्रधानस्य दारुमयरथादिवस्तुनः सकाशात् **हिरण्यम् । तदेव** हिरण्यमेव, भिन्नमेवेत्यर्थः । किन्तु **नानापदेशैः** हिरण्यरथः हिरण्यशङ्खः इत्यादि व्यपदेशैः व्यवह्रियमाणमपि स्वप्राधान्येन **व्यवहार्यमाणं** भवति यथा **तद्वत्** तथा अहमपि परमात्मा **नानापदेशैः** सुरनरादिशब्दैः व्यवहार्यमाणोऽपि अन्तर्यामिरूपापेक्षया इति भावः, **अस्य** विविधरूपस्य जगतः सकाशात् विवेक एव विविक्त एव । स्वप्रधान इत्यर्थः । परमात्मा जगद्देहविशिष्टोऽपि जगद्देहादत्यन्तं विलक्षण इति भावः ॥ २० ॥

परमात्मनः सर्वचेतनाचेतनापेक्षया स्वातन्त्र्यमुपपादयति- **विज्ञानमिति ।**

**विज्ञानमेतत् त्रिपदस्थमङ्ग गुणत्रयं कारणकार्यकर्तृ ।**
**समन्वयेन व्यतिरेकतश्च येनैव तुर्येण तदेव सत्यम् ॥ २१ ॥**

**गुणत्रयं** कारणं महदादीनि **कार्यं** ब्रह्माण्डादीनि **कर्तृ** जीवादिकं **येन** अभोक्त्रा **(तुर्येण)** तुरीयेण वासुदेवेन पुरुषेण अस्ति । वासुदेवाधीनसत्त्वम् उपपादयति- **समन्वयेनेति ।** जगदस्तु इति वासुदेवेच्छायाः सत्वे जगद्भवेत् इति **समन्वयेन ।** तथा इच्छाशक्तेः अव्यक्तत्वे गुणादिजगतः **व्यतिरेकतश्च** असत्वाच्च । तस्मात् **त्रिपदस्थं**

त्रिषु पदेषु स्थापयतीति त्रिपदस्थं सात्विकराजसतामसानां त्रिषु स्थापकमित्यर्थः । **विज्ञानं** लोकविलक्षणज्ञानरूपम् । **एतद्** ब्रह्म । **सत्यमेव** स्वतन्त्रसत्यमित्यर्थः । सदा अविकारेण विद्यमानत्वादिति भावः । तत् परमात्माधीनं जगत् अस्वतन्त्रं सत्यमित्यर्थः ॥

ननु जीवे सत्येव परमात्मा इत्यन्वयव्यतिरेकयोः तत्कृतत्वात् कथं निर्णयः ? इति जिज्ञासायामाह[1]- **न यत्पुरस्तात्** इति ।

**न यत् पुरस्तादुत यन्न पश्चान्मध्ये च तन्न व्यपदेशमात्रम् ।**
**भूतं प्रसिद्धं च परेण यद्यत् तदेव सत् स्यादिति मे मनीषा ॥ २२ ॥**

**यत्** जगत् **पुरस्तात्** सृष्टेः पूर्वं **न, यत् पश्चात्** लयानन्तरं **न, उत मध्ये** काले **व्यपदेशमात्रम्** जगत् अस्तीति व्यपदेशः, न तु जगतः त्रिकालसम्बन्ध इत्यर्थः । जगत्प्रवाहस्तु त्रिकालवर्तीति भावः । अतः जगत् केवलं न स्वतन्त्रं नेत्यर्थः । किञ्च येन **परेण यत्** जगत् **भूतम्** उत्पन्नम् इति **प्रसिद्धं** च इति यत् निमित्तं तेन निमित्तेन **तदेव** पर एव सर्वदेशकालगुणैः पूर्णं सत् स्वतन्त्रं सत्यं स्यात् **इति मे मनीषा** निश्चयः । न जीव इति भावः ॥ २२ ॥

इतोऽपि जगतः अस्वातन्त्र्यमित्याह- **अविद्यमान** इति ।

**अविद्यमानोऽप्यवभासते सवैकारिको राजससर्ग एषः ।**
**ब्रह्म स्वयञ्ज्योतिरतो विभाति ब्रह्मेन्द्रियार्थात्मविकारचित्रम् ॥ २३ ॥**

**सवैकारिकः** वैकारिकदेवैः सहितः, **राजसः** रजोगुणजन्यः, **एषः** 'अहमेव स्वतन्त्रः' इति भासमानः **सर्गः अविद्यमानोऽपि** स्वाधीनतया असन्नपि **अवभासते ।**

---

[1] अस्पष्टेयमवतारिका । सुधीन्द्रतीर्थीये तु- 'पुनर्विष्णोः सर्वस्वातन्त्र्यं जीवानां पारतन्त्र्यं चोपपादयति' इत्युक्तम् ।

तामसानां जगन्निरीश्वरमिति भासते । यत् **ब्रह्म** सर्वकल्याणगुणं **स्वयञ्ज्योतिः** स्वत एव प्रकाश्यम् **अतः** ब्रह्मणः सकाशात्, ब्रह्म= प्रकृतिर्वेदा वा इन्द्रियाणि= उभयविधानि, अर्थाः= विषयाः, आत्मानः= चेतनाः, विकाराः= विविधकार्याणि देवा वा, एभिः युक्तं जगत् **विभाति** । तस्मात् परतन्त्रं जगदिति भावः ॥ २३ ॥

एवमुक्तस्य स्वतन्त्रपरतन्त्रज्ञानदार्ढ्यस्य फलमाह- **एवं स्फुटमिति** ।

**एवं स्फुटं ब्रह्म विविच्य हेतुभिः परापवादेन विवेकबुद्ध्या ।**
**छित्वाऽऽत्मसन्देहमुपारमेत स्वानन्दतुष्टोऽखिलकामुकेभ्यः ॥ २४ ॥**

**परापवादेन** परस्मिन्= जगति अपवादेन= स्वातन्त्र्यपरिहारेण विवेकः= परमात्म-जीवयोः स्वस्वामिभावः, तद्विषयकबुद्ध्या **हेतुभिः** हिताहितकर्तृत्वादिहेतुभिः । **आत्म-सन्देहं** 'अन्तर्यामी अस्ति न वा' इति सन्देहं **छित्वा ब्रह्म विविच्य** सर्वसामर्थ्योपेततया **एवम्** उक्तजगत्कर्तृत्वादिभिः **स्फुटं** ज्ञात्वा **अखिलकामुकेभ्यः** वैषयिकजनेभ्यः विषये-भ्यश्च **उपारमेत** अत्यन्तं विरक्तो भवेत् । सदा परमात्मध्यानेनेति भावः ॥ २४ ॥

ननु 'परापवादेन विवेकबुद्ध्या' इत्युक्तम् । तत्कथं युज्यते ? सर्ववस्तुषु शक्ति-प्रेरणार्थं संश्लिष्टतया विशिष्टाकारस्य परमात्मनः सर्वैर्वस्तुभिः अभेदात् इत्याशङ्क्य निर्विकारस्य न विशिष्टाकारमित्याह- **नात्मेति** ।

**नात्मा वपुः पार्थिवमिन्द्रियाणि देवा ह्यसुर्वायुजलं हुताशः ।**
**मनोऽन्नमात्रं धिषणा च सत्वमहङ्कृतिः खं कृतिरर्थसाम्यम् ॥ २५ ॥**

**आत्मा** विकारादिदोषरहितः जगदीश्वरः **पार्थिवं वपुः** न भवति । कोशादिदेह-विविक्ततयैव अन्नमयादिमूर्तिभिः वर्तत इति भावः । **इन्द्रियाणि देवाश्च** इन्द्रियनिया-

मकाश्च न भवन्ति । अल्पशक्तीनाम् इन्द्रियदेवानां महाशक्तिपरमात्मनियम्यत्वादिति भावः । **वायुर्जलं हुताशः** एते यस्य वपुः सः **असुः** मुख्यप्राणः न भवति । **अन्नं**= पृथिवी मात्रं= शब्दस्पर्शादयः न भवति । **धिषणा** वृत्तिज्ञानं न भवति । **सत्त्वं** मूलबुद्धिः । अर्थेषु= विषयेषु साम्यं= समता अनुस्यूतिः यस्य तत् अर्थसाम्यं नाम 'अहं पश्यामि' 'अहं श्रृणोमि' 'अहं जिघ्रामि' इति सर्वजनेषु अहंकारस्य अनुस्यूततया ज्ञायमानमित्यर्थः । **अर्थसाम्यं अहङ्कृतिश्च** आत्मा न भवति । कृतिः सर्ववस्तुगताः विविधव्यापारशक्तयश्च आत्मा न भवति । परतन्त्रसर्वजगद्वैलक्षण्यस्य परमात्मनि प्रतिपादनार्थं तत्तद्वस्तुभेदोक्तिरिति भावः ॥ २५ ॥

ननु वायुना शाखाविचालनमिव विषयभोक्त्रा जीवेन विकारिणा किमन्तर्यामिणः वैषयिको विकारः प्राप्नोति न वा ? इति जिज्ञासायामाह- **समाहितैरिति ।**

**समाहितैः कः करणैर्गुणात्मभिर्गुणो भवेत् तत्सुविविक्तधाम्नः ।**
**विक्षिप्यमाणैरुत किं नु दूषणं घनैरुपेतैर्विगतै रवेः किम् ॥ २६ ॥**

गुणेषु= विविधविषयेषु आत्मानः= मनांसि एषां ते तैः विषयभोक्तृभिः **विक्षिप्यमाणैः** विषयभोगार्थं प्रापितैः **करणैः** इन्द्रियैः **तत्सुविविक्तधाम्नः** तेभ्यो= भोक्तृभ्यो सुविविक्तानि धामानि= विषयज्ञानानि तत्सामर्थ्यानि वा यस्य तादृशस्य परमात्मनः दूषणं किं ? तिक्तकटुविषयभोगप्राप्तं दुःखादिकं भवेत् । **उत समाहितैः** निषिद्धविषयेभ्यः व्यावर्तितैः **को** वा **गुणो** भवेत् ? परमात्मनः परप्राप्तातिशयरहितत्वादिति भावः । **रवेः उपेतैः** प्राप्तैः **घनैः किं ?** को वा तस्य गुणः ? अपेतैः वा तैः घनैः को वा गुणः ? एवं प्रकृतेऽपि ॥ २६ ॥

ननु वह्निस्पर्शेन स्फोट इव रजस्तमोमलैः परमात्मनोऽपि कुतो न विकारः ? इति जिज्ञासायामाह- **यथा नभ** इति ।

**यथा नभो वाय्वनलाम्बुभूगुणैर्गतागतैर्वा त्रिगुणैर्न सज्जते ।**
**तथाऽक्षरं सत्वरजस्तमोमलैरसङ्गतं संसृतिहेतुभिः परम् ॥ २७ ॥**

**तथापि सङ्गः परिवर्जनीयो गुणेषु मायारचितेषु तावत् ।**
**मद्भक्तियोगेन दृढेन यावद्रजो निरस्येत तमः कषायम् ॥ २८ ॥**

वाय्वादिगुणैः प्राप्तैः **आगतैः** उपचयैः **गतागतैः**[1] **नभः** नित्याकाशः गुणैः[2] विकारैः (वा) **न सज्जते तथा असङ्गतं** असङ्गस्वभावम् **अक्षरं** केनापि प्रकारेण नाशरहितम् । **परं** सम्पूर्णसर्वशक्त्युपेतं ब्रह्म जीवस्य संसृतिहेतुभिः विकारकारणैः रजस्तमोमलैः **न सज्जते** न विक्रियते । माया= सर्वशक्त्यभिभावकशक्तिः तया प्राप्तेषु बन्धकेष्विति भावः । **सङ्गः** उपादेयत्वबुद्धिः **परिवर्जनीयः** । ननु विषयजीवयोः नित्यसम्बन्धात् सदा तन्निरासलक्षणव्यसनं स्यात्? इत्याशङ्क्याह- **तावत्** इति । **दृढेन** श्रवणाद्यावृत्त्या इति भावः । **मद्भक्तियुक्तेन** ध्यानयोगेन **रजः** विषयरागजनकं **यावत्** यस्मिन् काले **निरस्येत** तावत्पर्यन्तं विषयपरित्यागे जागरूकेण भाव्यमिति भावः ॥ २८ ॥

विषयासक्तस्य दोषानाह- **यथाऽऽमय इति ।**

**यथाऽऽमयोऽसाधुचिकित्सितो नृणां पुनःपुनः सन्तुदति प्ररोहन् ।**
**एवं मनोऽपक्वकषायकर्म कुयोगिनं विद्ध्यति सर्वसङ्गम् ॥ २९ ॥**

---

[1] 'असम्बन्धैः प्राप्तैरिति वा' इत्यधिकं पठ्यते । [2] 'त्रिगुणैः' इति स्यात् ।

**असाधुचिकित्सितः** पथ्येन विना चिकित्सितः[1] **पुनः प्ररोहन्** उत्पद्यमानः **सन्तुदति** व्यथयति, एवं अपक्वानि अनिवृत्तानि कषायाः= दोषाः तत्कृतविकर्माणि यस्य तत् । **एवं** विधं **मनः सर्वसङ्गं** विषयेषु ध्याने च प्रवृत्तं **कुयोगिनं विध्यति** सौख्यं नाशयतीत्यर्थः ॥ २९ ॥

विषयासक्तस्य कुयोगिनः कथमुद्धारः ? इति जिज्ञासायामाह- **कुयोगिनो य** इति ।

**कुयोगिनो ये विहता ह्यन्तरायैर्मनुष्यभूतैस्त्रिदशोपसृष्टैः ।**
**ते प्राक्कृताभ्यासबलेन भूयो युञ्जन्ति योगं न तु कर्मतन्त्रम् ॥ ३० ॥**

त्रिदशैः= देवैः उपसृष्टैः विषयैः मनुष्यैः भूतैः= जलवाय्वादिभिः **अन्तरायैः** विघ्नैः **विहताः** ध्यानपरिपाकरहिताः **ये कुयोगिनः ते प्राक्** पूर्वजन्मनि कृतः अभ्यासः= ध्यानाभ्यासः तद्बलेन तत्प्राप्तवासनातिशयेन **भूयः** जन्मान्तरे तस्मिन् एव वा जन्मनि **योगं** श्रवणादिपुरस्सरं ध्यानं **युञ्जन्ति** कुर्वन्ति । ननु विषयभोगवासनाभिः पुनः विषयभोगेन कदा ध्यानपरिपाकः ? इति जिज्ञासायामाह- **न तु कर्मेति** । स्वर्गादिश्रेय उद्दिश्य कर्मलक्षणं तन्त्रं= साधनं न कुर्वन्ति । विषयभोगेऽपि विरक्ता भवन्ति । पूर्वं ध्याने ईश्वरानुग्रहादिति भावः ॥ ३० ॥

योगिनः काम्यकर्माकरणे निमित्तं ज्ञानसम्पत्तिमाह- **करोतीति** ।

**करोति कर्म क्रियते च जन्तुः केनाप्यसौ चोदित आनिपातात् ।**
**न तत्र विद्वान् प्रकृतौ स्थितोऽपि निवृत्ततृष्णः स्वसुखानुभूत्या ॥ ३१ ॥**

---
[1] अयं सम्भावितः पाठः । मूलपुस्तके तु 'असाधुचिकित्सितः अपथ्येन सह औषधादीनि कारणं प्राप्तम्' इति पठ्यते ।

**जन्तुः** चेतनः किञ्चित् कर्म स्वस्येच्छया न करोति । **आनिपातात्** देहपतन-पर्यन्तम् । **केनाऽपि** अदृष्टप्रेरकेण अन्तर्यामिणा **चोदितः** प्रेरितः **असौ** कर्म अनिच्छन्नपि **क्रियते करोति** इत्यर्थः । एवं **विद्वान्** ईश्वरस्वातन्त्र्यादिविद्वान् **प्रकृतौ** लिङ्गबन्धे **स्थितोऽपि तत्र** विषयसाधनेषु न सज्जते, किन्तु **निवृत्ततृष्णः** परतन्त्रविषयेषु उपेक्षावान् इत्यर्थः । स्वीयं सुखं यस्मात् सः परमात्मा । तस्य अनुभूत्या= अपरोक्षध्यानादिना सह वर्तते ज्ञानिषु मध्ये ॥ ३१ ॥

परमात्मगुणरसज्ञस्य स्थितिमाह- **तिष्ठन्तमिति** ।

**तिष्ठन्तमासीनमुत व्रजन्तं शयानमुद्यन्तमदन्तमन्नम् ।**
**स्वभावमन्यत् किमपीहमानम् आत्मानमात्मस्थमतिर्न वेद ॥ ३२ ॥**

**तिष्ठन्तम्** उत्तिष्ठन्तम् उद्यन्तं= यतमानम्, अदन्तं= भुञ्जानम् । **स्वभावं** स्वीयं वस्तु भूषणादिकम् **अन्यत् ईहमानं** अपेक्षितम् । **आत्मानं** देहम् । **किमपि** देहसम्बन्धि किमपि । **आत्मस्थमतिः** सन् परमात्मनि स्थिरचित्तः सन् **न वेद ॥** ३२ ॥

प्रारब्धकर्मणा यदि विषयभोगः बलादापतति तदाऽपि परमात्मबुद्धिं न परि-त्यजतीत्याह- **यदि स्मेति** ।

**यदि स्म पश्यत्यसदिन्द्रियार्थं नानानुमानेन विरुद्धमन्यत् ।**
**न मन्यते वस्तुतया मनीषी स्वाप्नं यथोत्थाय तिरोदधानम् ॥ ३३ ॥**

**मनीषी** ज्ञानी **असत्** तामसं राजसं वा **इन्द्रियार्थं** विषयं जगत् **यदि** प्रारब्धेन **अनुपश्यति** अनुभवति तदाऽपि जगति स्वातन्त्र्यं **नानामानेन विरुद्धमिति । वस्तुतया** स्वतन्त्रतया **न मन्यते ।** यथा **मनीषी** ज्ञानी स्वप्नात् उत्थाय **तिरोदधानं** तिरोहितं

**स्वाप्नं** मन्यते भ्रमोपेतं कादाचित्कं परतन्त्रं सदुःखं चेति । एवमेव स्वातन्त्र्यज्ञानं[1] भ्रम इति मन्यत इत्यर्थः ॥ ३३ ॥

संसारकारणस्य निवर्तकं दर्शयति- **पूर्वमिति** ।

**पूर्वं गृहीतं गुणकर्मचित्रम् अज्ञानमात्मन्यविविक्तमङ्ग ।**
**निवर्तते तत् पुनरीक्षयैव न गृह्यते नापि विसृज्य आत्मा ॥ ३४ ॥**

**यथा हि भानोरुदयो नृचक्षुषां तमो निहन्यान्न तु संविधत्ते ।**
**एवं समीक्षा निपुणा सती मे हन्यात् तमिस्रं पुरुषस्य बुद्धेः ॥ ३५ ॥**

**आत्मनि** परमात्मनि, परमात्मविषयकम् । गुणविषयमिति कर्मविषयञ्चेति **चित्रं** विविधं आत्मनि **अविविक्तं** जीवसम्बद्धम् । एतं न जानाम्यहम् इति जीवे प्रतीयमानत्वा-दिति भावः । एतादृशम् अज्ञानं पूर्वं जीवे प्रतीतमपि ईक्षया श्रवणादिप्राप्तपरमात्मा-परोक्षज्ञानेन **निवर्तते** । अनन्तरं न गृह्यते[2] । अज्ञाने सति आत्मा अनुपादेयतया प्रतीतः । तन्निवृत्त्यनन्तरं आत्मा उपादेयो ज्ञात इत्याह- **नापि विसृज्य** इति । अज्ञाननिवृत्त्यनन्तरम् **आत्मा न विसृज्यः** न परित्याज्यः, किन्तु अत्युपादेयः सम्पन्न इत्यर्थः ॥ ३४ ॥

एवं ध्यानादिकमुक्त्वा ध्येयगुणानाह- **एष इति** ।

**एष स्वयञ्ज्योतिरजोऽप्रमेयो महानुभूतिः सकलानुभूतिः ।**
**एकोऽद्वितीयो वचसां विरामो येनेरिता वागसवश्चरन्ति[3] ॥ ३६ ॥**

**एषः** मुक्तिदाता अहम् **अद्वितीयः** समरहितः, स्वयमेव पूर्णसर्वकल्याणगुणः सर्वोत्कृष्ट इत्यर्थः । अथापि मन्त्रादिना वशीकर्तुं शक्यो भवेत्? इत्याशङ्क्याह-

---

[1] जगत्यपि स्वातन्त्र्यज्ञानमित्यर्थः । [2] 'न प्रवर्तते' इत्यर्थः । [3] 'वाग्रचनाश्चरन्ति' इति पाठान्तरम् ।

**वचसामिति । वचसां** पौरुषेयापौरुषेयाणां **विरामः** व्यापारराहित्यं यस्मिन् सः । ननु ज्ञानशक्तिविषयो भविष्यति इत्याशङ्क्याह- **अप्रमेय** इति । सर्वव्यापाराणां अन्तर्याम्यधीनत्वात् सर्वोऽप्येतदधीनः, अयं परमात्मा न कस्याप्यधीन इत्याशयेनाह- **येनेरिता** इति । **वाचः** वेदादिदेवाः **असवः** प्राणादितत्वनियामकाः सर्वे चेतनाः **येन** परमात्मना स्वरूपसत्वादौ **ईरिताः चरन्ति** ज्ञानादिव्यापारेषु **प्रवर्तन्ते, स एषः अजः** देहबन्धरहितः । तत्र निमित्तमाह- **सकलानुभूतिः** स्वपरगताशेषविशेषसाक्षात्कारसम्पन्नः । अतो बन्धकारणमोहादिरहित इति भावः । **महानुभूतिः** पूर्णज्ञानसम्पन्नः, महान् अत्युपादेयं सुखम् । सदा पूर्णसुखानुभवरूप इति वा । तर्हि नित्यम् अव्यक्तस्य तव साक्षात्कारादिकं कथं स्यात्? इत्याशङ्क्याह- **स्वयं ज्योतिरिति ।** सूर्यादिवत् व्यक्तरूपश्चेत्यर्थः । अघटितघटनाशक्तिभिः सम्पन्ने मयि व्यक्तत्वाव्यक्तत्वादिगुणानां न विरोध इति भावः । सर्वगुणैः सर्वमूर्तिभिश्च **एकः** भेदरहितः एवं ध्येय इति भावः ॥ ३६ ॥

संसारे प्रधानकारणं जीवस्य स्वातन्त्र्यभ्रम एवेत्याह- **एतावान्** इति ।

**एतावानात्मसम्मोहो यद् विकल्पस्तु केवले ।**
**आत्माऽमृते स्वमात्मानम् अचलं यन्न पश्यति ॥ ३७ ॥**

**अमृते** नित्यमुक्ते **केवले** स्वतन्त्रे परमात्मनि स्थितं **स्वं** स्वरूपम् **आत्मानं** स्वभावधर्मांश्च, **अचलं** यथा भवति तथा सन्देहं विना इत्यर्थः, **आत्मा** जीवः **न पश्यति** न जानाति इति **यत्, विकल्पस्तु** जीवे स्वातन्त्र्यभ्रमः इति च **यत्, एतावान्** इदं द्वयं **आत्मसम्मोहः** आत्मनि विपरीतज्ञानम् । तस्मात् स्वातन्त्र्यभ्रमः परित्याज्य इति भावः ॥ ३७ ॥

स्वस्मिन् स्वातन्त्र्यारोपेण परमात्मापलापो न कर्तव्यः । परमात्मनो विद्वद्भिः समर्थितत्वादित्याह- **यन्नामेति** ।

**यन्नामाकृतिभिर्ग्राह्यं पञ्चवर्णमबाधितम् ।**
**व्यर्थो नाप्यर्थवादोऽयं द्वयं विन्दन्ति सूरयः ॥ ३८ ॥**

**नामाकृतिभिः** नामरूपैः गजमनुष्यादिभिः सहितं **पञ्चवर्णं** पञ्चभूतादिभिः वृतं जगत् **यत्,** स्वतन्त्रं ब्रह्म च **द्वयं विन्दन्ति** जानन्ति । वदन्ति च । स वादो **व्यर्थो न,** किन्तु अर्थसहितो वादः । तत्र कारणमाह- **सूरयः** मननकर्तारः **द्वयं** जगत् स्वतन्त्रं ब्रह्मेति द्वयम् **अबाधितं** वदन्ति । मननेन निश्चिन्वन्ति । तस्मात् जीवस्वातन्त्र्यज्ञानं भ्रम इति भावः ॥ ३८ ॥

अपक्वयोगिनः विघ्नपरिहारेण पुनरपि योगः सिद्ध्यतीत्युक्तम् । तत्र नानाविधा उपायाः ज्ञातव्या इत्याह- **योगिन** इति ॥

**योगिनोऽपक्वयोगस्य युञ्जतः काल उत्थितैः ।**
**उपसर्गैर्विहन्येत तत्रायं विहितो विधिः ॥ ३९ ॥**

**अपक्वयोगस्य** समर्थयोगरहितस्य **काले** ध्यानकाले **युञ्जतः** परमात्मनि मनो निविशतः चेतनस्य योगः **उपसर्गैः** पापैः यदि **विहन्येत** भज्येत तादृशोपसर्गपरिहारार्थम् **अयं विधिः** इदं कर्तव्यम् ॥ ३९ ॥

विहितं एतदेव इति दर्शयति- **योगधारणयेति** ।

**योगधारणया कांश्चिदुपसर्गान् विनिर्दहेत् ।**
**तपोमन्त्रौषधैः कांश्चिदासनैर्धारणान्वितैः ॥ ४० ॥**

**कांश्चिन्ममानुध्यानेन नामसङ्कीर्तनादिभिः ।**

**योगेश्वरानुवृत्त्या वा हन्यादशुभदान् शुभैः ॥ ४१ ॥**

**केचिद् देहमिमं धार्यं सुकल्यं वयसि स्थिरम् ।**

**विधाय विविधोपायैरथ युञ्जन्ति सिद्धये ॥ ४२ ॥**

**योगधारणया** नियमादयः तया, नरसिंहादिनामसङ्कीर्तनात्, योगेश्वरस्य श्रीनारायणकपिलादेः, **विविधोपायैः** श्रवणादिभिः सहितं विधाय श्रवणादि कृत्वा इत्यर्थः । **अथ** अधिकारानन्तरं ध्यानादिसम्पदे **युञ्जन्ति** परमात्मनि मनोयोगं कुर्वन्ति ॥ ४२ ॥

यौवने भोगान् भुक्त्वा अनन्तरं योगाभ्यासं कर्तुं इच्छतां अनिष्टमाह- **इहेति ।**

**इह वर्षशताशीत्या तदायासो ह्यनर्थकः**[1] **।**

**अन्तवत्त्वाच्छरीरस्य फलस्येव वनस्पतेः ॥ ४३ ॥**

**इह** देहे स्थितस्य वर्षशतेन अशीत्या वा कालेन **तदायासः अनर्थकः** स्वकार्यजयो न भवति इत्यर्थः । यौवनापगमे देहस्य योगाभ्यासे अनुपयोगं विविच्याह- **फलस्येवेति । वनस्पतेः** वृक्षस्य यथा कदलीफलं जम्बूफलादिकं वा अन्तवत् वृक्षे सत्येव क्रमेण उत्तरोत्तरकाले ह्रासवत् एवं जीवे सत्येव शरीरमपि यौवनानन्तरम् उत्तरकाले ह्रासोपेतमित्यर्थः । अत उत्तरकाल एव योगसम्पादने बुद्धिः स्वेष्टविरोधिनीति भावः ॥ ४३ ॥

यदि रसायनादिना कायो वार्धकेऽपि सुदृढो भविष्यतीति बुद्धिः तदाऽपि देहे स्थायित्वविश्वासो न कर्तव्य इत्याशयेनाह- **योगं निषेवत** इति ।

---

[1] 'ह्यपार्थकः' इति पाठान्तरम् ।

**योगं निषेवतो नित्यं कायश्चेत् कल्यतामियात् ।**

**तच्छ्रद्दध्यान्न मतिमान् योगमुत्सृज्य मत्परः ॥ ४४ ॥**

योगिनः **कायः** देहः **कल्यताम्** सुदार्ढ्यम् **इयात्** रसायनादिना प्राप्नुयात् **तत्** शरीरं **न श्रद्दध्यात्** विषयभोगार्थं न विश्वसेत् । प्रारब्धपापादिना देहपतनस्य सम्भवात् इति भावः । अतः **मत्परः योगमुत्सृज्य** न तिष्ठेदित्यर्थः ॥ ४४ ॥

निस्पृहस्य मदपाश्रितस्य योग एव अनन्तरायसाधक इत्याह- **योगचर्यामिति ।**

**योगचर्यामिमां योगी विचरन् मदपाश्रयः ।**

**नान्तरायैर्विहन्येत निःस्पृहः स्वसुखानुभूः ॥ ४५ ॥**

**॥ इति श्रीमद्भागवते एकादशस्कन्धे अष्टाविंशोऽध्यायः ॥**

**न विहन्येत** स्वसुखं अनुभवतीति **स्वसुखानुभूः** भूयश्च भवति ॥ ४५ ॥

॥ इति श्रीयादवेन्द्रयतिविरचिते एकादशस्कन्धव्याख्याने अष्टाविंशोऽध्यायः ॥

# 29 | एकोनत्रिंशदध्यायः

प्राथमिकयोगाभ्यासे चञ्चलस्य मनसः केनोपायेन शक्तिः? इति पृच्छति- **सुदुश्चरमिति** ।

**उद्धव उवाच-**

**सुदुश्चरामिमां मन्ये योगचर्यामनात्मनः ।**

**यथाऽञ्जसा पुमान् सिध्येत् तन्मे ब्रूह्यञ्जसाऽच्युत ॥ १ ॥**

**अनात्मनः** धृतिरहितस्य चञ्चलमनस इत्यर्थः । **इमां** मनस्थैर्यसाध्यां **योगचर्यां सुदुश्चरां मन्ये** । हे अजित ! स्वशक्त्या केनाप्यवशीकृत[1] **अच्युत !** केनापि कारणेन च्युतिरहित ! **यथा** येनोपायेन **अञ्जसा** मनोदोषपरिहारेणेत्यर्थः । **पुमान्** प्रथमं योगे यतमान इति भावः । **सिद्ध्येत्** ध्यानादिमान् भवेत् । तत् उपायं **ब्रूहि** ॥ १ ॥

अनात्मनः इत्युक्तं मनोदोषं विविच्याह- **प्रायश** इति ।

**प्रायशः पुण्डरीकाक्ष युञ्जतो योगिनो मनः ।**

**विषीदत्यसमाधानान्मौनसंयमकर्शितम् ॥ २ ॥**

मौनेन= दुष्टालापराहित्येन, निग्रहेण= विषयेभ्यः आकर्षणेन । विषयाकाङ्क्षा-रहितानामेव योगः । तद्वतां ध्यानादिलक्षणो योगः सुलभ इत्याह- **अथो त** इति ॥ २ ॥

---

[1] 'अजित' इति पदं भागवतपुस्तकेषु व्याख्यान्तरेषु च न कुत्रापि दृश्यते । पाठान्तरं कल्प्यम् । अथवा, अनात्मनो योगचर्याया दुश्चरत्वे शङ्किते सति परिहर्तुरप्यजितमनस्कत्वे तत्परिहाराक्षमत्वात् नायमन्यैर्जितः, अत एव परिहर्तुं समर्थ इति साकूतसम्बोधनमिदं स्यात् ।

**अथो त आनन्ददुघं पदाम्बुजं हंसाः श्रयेरन्नरविन्दलोचन ।**
**सुखं तु विश्वेश्वर योगकर्मभिस्त्वन्मायया ऽमी विहता न मानिनः ॥ ३ ॥**

**हंसाः** अहङ्कारममकारनिरसनसमर्थाः **योगकर्मभिः** तव ध्यानादिभिः **सुखं** यथा तथा अनायासेन **पदाम्बुजं श्रयेरन् । मानिनस्तु** अहङ्काराद्युपेतास्तु **त्वन्मायया** बन्धकशक्त्या **विहताः** सन्तः आनन्ददुघमपि **आनन्ददोग्ध्रमपि,** सदानन्दप्रदमपि पदाम्बुजं न श्रयेरन् । अहङ्कारादिनिरसने पुनरप्युपायं वदेति भावः ॥ ३ ॥

कथं राजाधिराजं मां प्रति स्वेच्छानुसारेण पृच्छति? इत्याशङ्क्याह- **किं चित्रमिति ।**

**किं चित्रमच्युत तवैतदशेषबन्धोर्दासेष्वनन्यशरणेषु यदात्मदस्त्वम् ।**
**योऽरोचयश्च पशुपैः स्वयमीश्वराणां श्रीमत्किरीटमणिघट्टितपादपीठः ॥ ४ ॥**

न विद्यते अन्यत् शरणं रक्षकं येषान्ते अनन्यशरणाः । ये परमात्मानमेव शरणं प्राप्ता इत्यर्थः । तेभ्य**स्त्वं आत्मदः** सायुज्यदः स्वरूपानन्दप्रदो वा । **तव** एतादृशे त्वयि **एतत्** प्रश्ने उत्तराभिधानं परानुकूलतया वर्तनं वा **किं चित्रं !** अशेषबन्धुत्वं स्पष्टमाह- **योऽरोचय** इति । **ईश्वराणां** सर्वदेवप्रधानानां श्रीमन्तः= प्रकाशमाना ये किरीटमणयः तैः घट्टितः= सङ्घर्षितः पादपीठो यस्य सः तथाविधोऽपि **यः** मृगैः सह **अरोचयः** सन्तोषवानभूः इति वा । गोभिः सह[1] स्वात्मानं प्रदर्शितवान् भवान् । मृगाणां वल्लभोऽभूदित्यर्थः । अतः अहङ्कारादिराहित्यात् मदिच्छानुसारेण उपदेशो युक्त इति भावः ॥ ४ ॥

अलं प्रश्नैः । यथेच्छं गम्यताम् इत्याशङ्क्याह- **तं त्वाखिलेति ।**

---

[1] अत्र 'मृगैः सह' इति 'गोभिः सह' इति लेखकप्रमादः सम्भाव्यते । यतो मूले 'पशुपैः' इति पाठः । अतः पशुपैः = गोपालकैः सह क्रीडितुं अरोचयः = इच्छसि स्म इत्यत्रार्थोऽनुसन्धेयः ।

**तं त्वाऽखिलात्मदयितेश्वरमाश्रितानां सर्वार्थदं सुकृतविद् विसृजेत को नु ।**
**को वा भजेत् किमपि विस्मृतचित्तवृत्तिः किं वा न वेद तव पादरजोऽमृताम्भः ॥**

हे अच्युत ! **तव** पादरजसा युक्तं **अमृताम्भः** पादतीर्थं **को वा न वेद** सर्वोऽपि वेदेत्यर्थः । एतादृशी **चित्तवृत्तिः** संस्काररूपेण वर्तनं यस्य सः विषयः, विस्मृतः चित्तवृत्तिः येन स **विस्मृतचित्तवृत्तिः को वा** भवेत् । कोऽपि सुतं[1] त्वां न विस्मरतीत्यर्थः । अतः तादृशः **सुकृतवित्** कृतोपकारज्ञः **कोनु अखिलदयितेश्वरं** दयिताः= प्रियाः स्वभक्ता इत्यर्थः, तेषां ईश्वरं= स्वामिनं, दयितश्चासावीश्वरश्चेति वा । **तं** त्वा **विसृजेत** । कोऽपि न विसृजेदित्यर्थः । अतः त्वां न विसृजामि इति भावः ॥ ५ ॥

ज्ञानदानापेक्षया नान्यः उपकारोऽस्ति । तस्य प्रत्युपकरोऽपि नास्तीति परमात्मानम् अत्यन्तोपकारकर्तृत्वेन स्तौति- **नैवोपयान्तीति ।**

**नैवोपयान्त्यपचितिं कवयस्तवेश ब्रह्मादयोऽपि नतमूर्द्धसदा स्मरन्तः ।**
**योऽन्तर्बहिस्तनुभृतामशुभं विधुन्वन्नाचार्यचैत्यवपुषा स्वगतिं व्यनक्ति ॥ ६**

**यः** त्वम् **अन्तः अशुभम्** आध्यात्मिकं, भयचिन्तादिप्राप्तं बहिस्थम्, तैः प्राप्तं आधिदैविकं वा, दुःखं **विधुन्वन्** परिहरन् आचार्यसंज्ञोपेत- **चैत्यवपुषा** ज्ञानस्वरूपदेहेन व्यासाद्यवतारेण **स्वगतिं** स्वयोग्यज्ञानं **व्यनक्ति** प्रकाशयसि ज्ञानदाताऽसीत्यर्थः । ततो नित्यानन्दप्रदोऽसीति भावः । एतादृशस्य **तव ब्रह्मादयः अपचितिं** प्रत्युपकारं कर्तुं **नैवोपयान्ति** न प्राप्नुवन्ति, नोपकुर्वन्ति इति वा । अवाप्तसकलकामस्य प्रत्युपकारविषयाभाव इति भावः । अतः परमकारुणिकत्वात् ज्ञानं देहि इति भावः ॥ ६ ॥

---

[1] 'स्मृतं कृतोपकारत्वेन ज्ञातं' इति स्यात् ।

**श्रीशुक उवाच-**

**इत्युद्धवेनात्यनुरक्तचेतसा पृष्टो जगत्क्रीडनकः स्वशक्तिभिः ।**

**गृहीतमूर्तित्रय ईश्वरेश्वरो जगाद सप्रेम मनोहरस्मितः ॥ ७ ॥**

**स्वशक्तिभिः** अघटितघटनासम्पादकस्वसामर्थ्यैः गृहीतं मूर्तित्रयं आत्म-अन्तरात्म-परमात्मलक्षणं येन तादृशः सन्, **स्वशक्तिभिः** जगत् विविधविचित्रवस्तुस्वरूपं क्रीडनकं= क्रीडासाधनं यस्य अभूत्, यः जगति क्रीडमानः अभूदित्यर्थः । स ईश्वराणां= सर्वशक्त्युपेतानामपि ईश्वरः । प्रेम्णा सहितं **सप्रेम** । मनोहरं स्मितं यस्य स एतादृशः सन् **जगाद** ॥ ७ ॥

**श्रीभगवानुवाच-**

**हन्त ते वर्णयिष्यामि मम धर्मान् सुमङ्गळान् ।**

**यान् शुद्धानाचरन् मर्त्यो मृत्युं जयति दुर्जयम् ॥ ८ ॥**

**मृत्युं जयति** पुनः दुःखबन्धं न प्राप्नोति इत्यर्थः ॥ ८ ॥

**कुर्यात् सर्वाणि कर्माणि मदर्थं शनकैः स्मरन् ।**

**मय्यर्पितमनश्चित्तो मद्धर्मात्ममनोरतिः ॥ ९ ॥**

**मदर्थं** मत्प्रीत्यर्थं **शनकैः** त्वरां विना **स्मरन्** तत्तत्काले कर्तव्याणि कर्माणि यावन्ति तावन्ति तत्क्रमं च स्मरन्, कर्तव्यं किंचिदपि अपरित्यजन् इति भावः । मय्यर्पितं मनःप्रभेदं चित्तं स्मरणकारणं येन स तथाविधः सन्, सर्वकर्मकर्तृत्वेन मां स्मरन् इत्यर्थः । मम धर्मः= श्रवणभक्त्यादिलक्षणः येषां ते मद्धर्माः, ते च ते आत्मानश्च परमभागवताः, तेषु मनोरतिः= प्रथिता भक्तिः यस्य सः । रतिः आसक्तिर्वा । अथवा मदर्थं धर्माः विहितक्रियाः यैः क्रियन्ते ते मद्धर्माः=

सर्वकारणप्रेरकदेवाः । ते आत्मनः स्वप्रेरकाः, तेषु मनोरतिः मनःसक्तिः यस्य सः । श्रीहरिः स्वतः सर्वकर्ता, तत्वदेवताश्च कर्तारः, 'तत्प्रेरितः अहं करोमि' इत्यनुसन्धानवान् इति भावः । अथवा मद्धर्मेषु आत्मना स्वभावेन इति यावत् सिद्धा फलानुसन्धानरहिता **मनोरतिः** आसक्तिः यस्य सः ॥ ९ ॥

**देशान् पुण्यान् संश्रयेत मद्भक्तैः साधुभिः श्रितान् ।**
**देवासुरमनुष्येषु मद्भक्ताचरितानि च ॥ १० ॥**

**पृथक् सत्रेण वा मह्यं मम यात्रामहोत्सवम् ।**
**कारयेन्नृत्यगीताद्यैर्महाराजविभूतिभिः ॥ ११ ॥**

असुरेषु प्रह्लादादयः । मनुष्येषु मानवेषु प्रियव्रतादयः, देवेषु स्वयम्भुशम्भु-नारदादयः तेषामाचरितानि । बहुभिर्भक्तैः सह स्वयं **मम यात्रा महोत्सवं** कुर्यात्, **पृथक्** एक एव वा, बहूनाम् अलाभे इति भावः । **मह्यं** महोत्सवं कुर्यात् । यात्रा= श्रीहरिक्षेत्राण्युद्दिश्य गमनं वा, तत्सहितं उत्सवं, स्वस्य उत्सवकरणे द्रव्यशक्त्यभावे सति अन्येन वा कारयेदित्याह- **मह्यं महाराजविभूतिभिः** महाराजोपचारैः सह उत्सवम् अर्थवता **कारयेत्** ॥ ११ ॥

**मामेव सर्वभूतेषु बहिरन्तरवस्थितम् ।**
**यजेतात्मनि चात्मानं यथा खममलाशयः ॥ १२ ॥**

**अमलाशयः** विषयरागरहितचित्तः **सर्वभूतेषु** सर्ववस्तुषु प्राणिषु वा **बहिरन्तश्च** स्थितम्, अथापि **अपावृतं** अविद्यावरणरहितं **मां** विष्णुं **यजेत,** तत्र उचितवस्तुभिः इति भावः । **आत्मनि** च स्वस्मिंश्च यथा **खं** हृदयाकाशम् अनतिक्रम्य विद्यमानं,

आकाशमिव निर्लेपं वा **आत्मानं** अन्तर्यामिणं **यजेत** । अनिषिद्धभोगैरिति भावः ॥ १२ ॥

हे महाद्युते ! ज्ञानलक्षणप्रकाशसम्पन्न ! स्वावरादिष्वपि पूजा अवश्यं कर्तव्येत्याह- **इति सर्वाणीति** ।

**इति सर्वाणि भूतानि मद्भावेन महाद्युते ।**
**सभाजयेन्मन्यमानो ज्ञानं केवलमाश्रयन् ॥ १३ ॥**

**इति मद्भावेन** 'सर्वेषु भूतेषु परमात्मा वर्तते' इति बुद्धिः मद्भावः, तेन सहितः । अहङ्कारेण रहितः । **केवलं** परमात्ममूर्तिषु न्यूनताऽविषयकं वा[1] **ज्ञानम् आश्रयन्** सर्वभूतानि **सभाजयेत्** भूतानुसारेण बहुमानं कुर्यात् ॥ १३ ॥

परमात्मनः केवलत्वं वैषम्यराहित्यं सर्वमूर्तिसाम्यं दर्शयति- **पुल्कस** ।

**ब्राह्मणे पुल्कसे स्तेने ब्रह्मण्यर्के स्फुलिङ्गके ।**
**अक्रूरे क्रूरके चैव समदृक् पण्डितो मतः ॥ १४ ॥**

**पुल्कसः** पापजातिः । **स्तेनः** वञ्चकः द्रव्यापहर्ता वा । ब्राह्मणेषु साधुः ब्रह्मण्यः । **स्फुलिङ्गके** अग्निकणे एतेषु, क्रूरे हिंसके स्थिते परमात्मनि समा= सर्वान्तर्यामिषु निर्दोषत्वादिविषयिणी च न्यूनताद्यविषयिणी च दृक्= ज्ञानं यस्य सः **पण्डितः**, ज्ञानी भवति इति विदुषां **मतः** ॥ १४ ॥

सर्वेषु स्थितान्तर्यामिरूपाणाम् एवंविधज्ञानस्य फलमाह - **नरेष्वभीक्ष्णं** इति ।

---

[1] 'निर्दोषत्वादिविषयकं च' इति स्यात् ।

**नरेष्वभीक्ष्णं मद्भावः पुंसो भावयतोऽचिरात् ।**

**स्याद्वा माया तिरस्कारं साहङ्काराऽपि याति हि ॥ १५ ॥**

**नरेषु** स्थितं मां **अभीक्ष्णं** सदा **भावयतः** स्मरतः **पुंसः** चेतनस्य **अचिरात्** बहुविलम्बं विना **मद्भावः** मयि भक्तिविशेषः **स्यात्** । तेन भक्तिसहितेन ज्ञानेन अहङ्कारेण सहिता **मायाऽपि** पञ्चपर्वाविद्यापि **तिरस्कारं याति** मायातिरस्कारेण मनः प्रसन्नं भवति । अनन्तरं ध्यानादियोगः प्रवर्तते इति भावः ॥ १५ ॥

उत्तमाधिकारिणां व्यापारमाह- **विसृज्येति ।**

**विसृज्य स्वयमात्मस्थां दृश्यव्रीळां च दैहिकीम् ।**

**प्रणमेद् दण्डवद् भूमावाश्वचण्डालगोखरम् ॥ १६ ॥**

**स्वयं** गर्वं मानं= 'अहमेव करोमि' इत्यभिमानं **विसृज्य** दृश्येन जनेन प्राप्ताम्, अदृश्यजनेन व्रीळा नोत्पद्यत इति भावः । **व्रीळां दैहिकीं** देहविषयिणीं देहव्यापार-सङ्कोचकर्त्रीमित्यर्थः । **विसृज्य** उत्तमसाधून् प्रति **दण्डवत् प्रणमेत्** श्वानश्च चण्डालश्च गौश्च खरश्च एतान् श्वचण्डालगोखरं निन्दितानिन्दितान् सर्वान् प्रति इत्यर्थः । उत्तमाधिकारी **प्रणमेत्** यथोचितं सर्वेषां प्रियं कुर्यात् इत्यर्थः । तेषु ईश्वरसान्निध्यबुद्ध्येति भावः ॥ १६ ॥

उक्तज्ञानपाटवपर्यन्तं कर्तव्यम् आह- **यावत् सर्वेष्विति ।**

**यावत् सर्वेषु भूतेषु मद्भावो नोपजायते ।**

**तावदेवमुपासीत वाङ्मनःकायवृत्तिभिः ॥ १७ ॥**

अधिकारिणां **याव** त्पर्यन्तं स्थितो **मद्भावः** मयि ज्ञानपाटवं **न** जायते **ताव** त्पर्यन्तं **एवं** 'स्वामी सर्वप्रेरणार्थं सर्वत्र वर्तते' इति प्रकारान्तरेण **उपासीत** मनसा वाचा एवं स्तुवीत । व्यापारेण नमस्कारादिना एभिः कर्तव्यैः सह उपासीत ॥ १७ ॥

**सर्वं ब्रह्मात्मकं तस्य विद्ययाऽऽत्ममनीषया ।**
**परिपश्यति च परं परमात्मानमच्युतम् ॥ १८ ॥**

'सर्वभूतेषु परमात्मा वर्तते' इति या विद्या= उपासनालक्षणं ज्ञानं तया, प्राप्तया **आत्ममनीषया** सर्वत्र परमात्मावधारणज्ञानेन **सर्वं** जगत् **ब्रह्मात्मकं** ब्रह्मणा आत्तं= स्वीकृतं इति **परिपश्यति । तस्य** 'सर्वं ब्रह्माधीनम्' इति ज्ञानस्य सकाशात् **परं** सर्वविलक्षणं पूर्णं वा **परमात्मानं परिपश्यति** अपरोक्षीकरोति ॥ १८ ॥

मयि सर्वान्तर्यामित्वज्ञानं मुक्तेः उत्तमोपाय इत्याह- **अयं हीति ।**

**अयं हि सर्वकल्पानां सध्रीचीनो मतो मम ।**
**मद्भावः सर्वभूतेषु मनोवाक्कायवृत्तिभिः ॥ १९ ॥**

मनोवाक्कायानां वृत्तयः मनोवृत्तिः सदा एवं स्मरणम् । सर्वेषु व्याप्तिलक्षणगुणेन स्तुतिः कायवृत्तिः । सर्वान् प्रति मयि बुद्ध्या यथोचितं प्रणामः । एवंरूपाभिः वृत्तिभिः **सर्वभूतेषु** स्थिते मयि भावः= भक्तिरिति **अयं सर्वकल्पानां** कल्पयन्तीति कल्पाः= उपायाः, सर्वमोक्षोपायानां मध्ये **सध्रीचीनः** उत्तम उपाय इति **मम मतः** सम्मतः ॥ १९ ॥

यथा योगाभ्यासस्य मनसः स्वाभाविकदोषेण चापलेन नाशोऽस्ति, एवं भक्ति-योगसहितस्य सर्वभूतेष्ववस्थिततत्वज्ञानस्य नाशो नास्तीत्याह- **नह्यङ्गेति** ।

**नह्यङ्गोपक्रमे ध्वंसो न धूरस्योद्धवाण्वपि ।**
**मया व्यवसितं सम्यङ् निर्गुणत्वादनाशिषः ॥ २० ॥**

**अस्य** सर्वेषु स्थितपरमात्मभावस्य भक्तेः **उपक्रमे** सम्पादनसमये **अण्वपि धूः** भारः= आयासः **ना** स्ति । उपक्रमानन्तरं **ध्वंसः** ह्रासः **ना** स्ति । **अनाशिषः** विरक्तस्य **निर्गुणत्वात्** राजसादिगुणव्यापाररहितत्वात् अयं मद्भावः **सम्यक्** भवेत् अन्तरायभयरहितो भवेत् इति **मे व्यवसितं** निश्चयः ॥ २० ॥

'मद्भावः सर्वकल्पानां सध्रीचीनः' इत्युक्तम् । तदुपपादयति- **यो योऽपर** इति ।

**यो योऽपरो मनोधर्मः कल्पते निष्फलाय ते ।**
**तदायासो निरर्थः स्यान्नयादेरिव सत्तम ॥ २१ ॥**

**मनोधर्मः** मनसा सङ्कल्पितः । **अपरः** देवतान्तरविषयकपूजाध्यानादिः स **निष्फ-लाय कल्पते** । **तदायासः** तेन= अन्याराधनेन आयासश्च भवति । किञ्च **निरर्थः** विरुद्धार्थः नरकादिकं स्यात् । हे **सत्तम !** नीतिं अत्तीति नयादिः, दुर्नय इत्यर्थः । तस्मात् यथा यथा विपरीतार्थः प्रकृतार्थासिद्धिः आयासश्च, एवमिहापि इति भावः ॥ २१ ॥

**एषा बुद्धिमतां बुद्धिर्मनीषा च मनीषिणाम् ।**
**यत् सत्यममृतेनेह मर्त्येनाप्नोति माऽमृतम् ॥ २२ ॥**

**एषा** तु मयि भक्तिस्तु **मनीषिणां** ज्ञानिनां **मनीषा** मनसो अपेक्षितार्थः इत्यर्थः । **बुद्धिमतां** मननेन निश्चयवतां निश्चयं कुर्वतां मयि **बुद्धिः** निश्चितार्थः इत्यर्थः । स्वस्मिन् भक्तेः सफलत्वेन अत्युपादेयत्वं चाह- **यत्सत्यमिति । अनृतेन** चञ्चलेन विकारिणा **मर्त्येन** विनाशिना देहेन **सत्यं** कथञ्चिदपि विकाररहितं **अमृतं** नित्यमुक्तं मां **यत्** यया मद्भक्त्या **आप्नोति** अधिकारी सायुज्यं प्राप्नोतीत्यर्थः ॥ २२ ॥

**एष तेऽभिहितः कृत्स्नो ब्रह्मवादस्य सङ्ग्रहः ।**

**समासव्यासविधिना देवानामपि दुर्गमः ॥ २३ ॥**

**एष** एतादृशः भक्तियोगः **दुर्गमः** मदनुग्रहं विना प्राप्तुमशक्यः । **अभिहितः, ब्रह्मवादस्य** ब्रह्मप्रतिपादकशास्त्रस्य **सङ्ग्रहश्च ।** क्वचित् शब्दस्य समासः= सङ्ग्रहः व्यासः= अर्थस्य विस्तारः, एवंरूपेण विधिना नियोगवचनेन **कृत्स्नः** न्यूनतां विना **अभिहितः ॥** २३ ॥

साधुलोकस्यापि तव प्रश्नः, मम उत्तराभिधानं च परमपुरुषार्थप्रद इत्याह- **अभीक्ष्णश** इति ।

**अभीक्ष्णशस्ते गदितं ज्ञानं विस्पष्टयुक्तिमत् ।**

**एतद् विज्ञाय मुच्येत पुरुषो नष्टसंशयः ॥ २४ ॥**

**सुविविक्तं तव प्रश्नं मयोक्तमपि धारयन् ।**

**सनातनं ब्रह्मगुह्यं परब्रह्माधिगच्छति ॥ २५ ॥**

**पुरुषः** अन्योऽपि साधुः **अभीक्ष्णशः** बहुधा **गदितम् अभीक्ष्णशः** बहुधा **विज्ञाय** ज्ञानदार्ढ्येनेति भावः । अहङ्कारबन्धात् **विमुच्येत । धारयन्** विस्मरणरहितः, सदा

मयोक्तं अनुसन्दधानः **ब्रह्मगुह्यं** ब्रह्मणः= वेदस्य गुह्यं गोप्यार्थम् अयोग्ये उपदेशानर्हं परं ब्रह्म **धारयन्** ध्यायन् **अधिगच्छति** अपरोक्षीकरोति ॥ २५ ॥

**य एतन्मम भक्तेषु सम्प्रदद्यात् सुपुष्कळम् ।**
**तस्याहं ब्रह्मदायस्य ददाम्यात्मानमात्मना ॥ २६ ॥**

**सुपुष्कळम्** पुष्कळसाधनं **आत्मना** मनसा सह भक्त्या सह इत्यर्थः **संप्रदद्यात्** विविच्य स्पष्टं उपदिशेत् । **तस्य ब्रह्मदायस्य** ब्रह्म दायः अपेक्षितार्थः यस्य सः तस्य, ब्रह्मदश्चासौ आयश्च तस्य ब्रह्मदानपुरस्सरं शुभावहस्येत्यर्थः वा । **आत्मना** मनसा परमप्रसादेन इत्यर्थः । **आत्मानं** स्वरूपानन्दप्रकाशं ददामि इति, सायुज्यं **ददामीति** वा ॥ २६ ॥

**य एतत् समधीयीत पवित्रं परमं शुचि ।**
**स पूयेताहरहर्मां ज्ञानदीपेन दर्शयन् ॥ २७ ॥**

**य एतच्छ्रद्धया नित्यमव्यग्रं शृणुयान्नरः ।**
**मयि भक्तिं परां कुर्वन् कर्मभिर्न स बध्यते ॥ २८ ॥**

**अप्युद्धव त्वया ब्रह्म सखे समुपधारितम् ।**
**अपि ते विगतो मोहः शोकश्चासौ मनोभवः ॥ २९ ॥**

यत् साधनं **परमं शुचि** तदपेक्षया **पवित्रं एतत्** आस्थानं सांख्यशास्त्रं वा **यः समधीयीत** अध्ययनं कुर्यात् **अहरहः ज्ञानदीपेन मां दर्शयन्** । दर्शनादिति क्वचित् पाठः । **ब्रह्म** तत्वं स्वतन्त्रास्वतन्त्रलक्षणम् । **समुपधारितम् अपि** सम्यक् श्रुतं अविस्मरणेन दृढीकृतं किं इति वा । **मोहः** ममतादिः मनुष्यदेहसंबन्धप्राप्त इति

भावः । तेन **मनोभवः** मनश्चिन्तया प्राप्तः, भूलोकं परित्यज्य श्रीकृष्णो गमिष्यति इति ज्ञापनादिति भावः । **शोकः विगतः** अपि किं ? ।। २९ ।।

**नैतत् त्वया डाम्भिकाय नास्तिकाय शठाय च ।**
**अशुश्रूषोरभक्ताय दुर्विनीताय दीयताम् ।। ३० ।।**

**एतैर्दोषैर्विहीनाय ब्रह्मण्याय प्रियाय च ।**
**साधवे शुचये ब्रूयाद् भक्तिः स्याच्छूद्रयोषिताम् ।। ३१ ।।**

**नैतद् विज्ञाय जिज्ञासोर्ज्ञातव्यमवशिष्यते ।**
**पीत्वा पीयूषममृतं पातव्यं नावशिष्यते ।। ३२ ।।**

ज्ञानोपदेशार्थं मया नियुक्तेन त्वया **नास्तिकाय** ईश्वरापलापकर्तुः **मायिने** वञ्चकाय । **शठाय** विषयासक्ताय इति वा । **एतत्** ज्ञानं **न दीयताम्** । **ब्रह्मण्याय** ब्राह्मणानां प्रियाय, अत एव **प्रियाय** मम प्रियाय, **शूद्रयोषितां** च मध्ये यस्य मयि **भक्तिः स्यात्** तस्यापि ग्रन्थैकदेशेन ब्रूयात् । द्विजेन सह ब्रूयादिति भावः ।। ३२ ।।

ज्ञानादेव सर्वकामः सम्पद्यते इति ज्ञानसामर्थ्यमाह- **ज्ञाने कर्मणीति ।**

**ज्ञाने कर्मणि योगे च वार्तायां अवधारणे[1] ।**
**यावानर्थो नृणां तात तावान् मोक्षश्चतुर्विधः ।। ३३ ।।**

हे **तात** ! सखे ! प्रिय **कर्मणि** अनुष्ठिते सति, **योगे** यमनियमादियोगे अनुष्ठिते सति, **वार्तायां** गुरुशिष्यकथायां सत्यां **अवधारणे** तत्त्वनिर्णये सति **यावानर्थः** स्वर्गादि-लक्षणं फलं भवेत् **ज्ञाने** सति तावत् फलं भवेत् । **चतुर्विधः** कर्मक्षयः उत्क्रान्तिः

---

[1] 'दण्डधारणे' इति पाठान्तरम् ।

मार्गः भोग इति चतुर्विधः मोक्षः, अथवा सालोक्यं सामीप्यं सारूप्यं सायुज्यं चेति चतुर्विधः मोक्षः यथाधिकारं भवति इति भावः ॥ ३३ ॥

अनादिकालमारभ्य संसारे वसतः ज्ञानादिमोक्षोपायश्च मदनुग्रहात् भवतीत्याह- **मर्त्यो यदेति ।**

**मर्त्यो यदा त्यक्तसमस्तकर्मा निवेशितात्मा च चिकार्षितो मे ।**
**तदाऽमृतत्वं प्रतिपद्यमानो मयाऽऽत्मभूयाय च कल्पतेऽसौ ॥ ३४ ॥**

**यदा मे चिकीर्षितः** 'करोमि' इति इच्छाविषयः कृतः[1] **मर्त्यः** चेतनः भवति, तदा त्यक्तानि= अहङ्कारेण रहितानि समस्तकर्माणि येन सः, 'ईश्वरः सर्वकर्मसु स्वतन्त्रकर्ता', तदनु तत्वदेवाः कर्तारः, अहं सर्वकर्मसु अस्वतन्त्रकर्ता' इति निश्चयवान् भवति श्रवणादिपुरस्सरमिति भावः । मयि **निवेशितात्मा** भवति ध्यानादिमान् भवतीत्यर्थः । **मया अमृतत्वं** बन्धात् मुक्तत्वं **प्रतिपाद्यमानः आत्मभूयाय** निर्दुःखत्वाय **कल्पते** समर्थो भवति । क्रियते इति वा ॥ ३४ ॥

**श्रीशुक उवाच-**

**स एवमादर्शितयोगमार्गस्तदोत्तमश्लोकवचो निशम्य ।**
**बद्धाञ्जलिः प्रीत्युपरुद्धकण्ठो न किञ्चिदूचेऽश्रुपरिप्लुताक्षः ॥ ३५ ॥**

**विष्टभ्य चित्तं प्रणयेन पूर्णं धैर्येण राजन् बहुमन्यमानः ।**
**कृताञ्जलिः प्राह यदुप्रवीरं शीर्ष्णा स्पृशंस्तच्चरणारविन्दम् ॥ ३६ ॥**

---

[1] 'करोमि एनं युक्तं करोमीति इच्छाविषयीकृतः' इति स्यात् ।

योगमार्गः विरागो ज्ञानं भक्तिमार्गः स उद्धवः । उत्तमश्लोकस्य= कृष्णस्य । **धैर्येण चित्तं विष्टभ्य** स्थिरं कृत्वा । वियोगो भविष्यतीति चिन्तां परिहृत्येति भावः । **बहुमन्यमानः** एनं कृष्णं ब्रह्मज्ञानान्ते ॥ ३६ ॥

विगतो मोह इत्यस्य उत्तरमाह- **विद्रावित** इति ।

**उद्धव उवाच-**

**विद्रावितो मोहमयोऽन्धकारो य आश्रितो मे तव सन्निधानात् ।**
**विभावसोः किन्नु समीपगस्य शीतं तमोऽभिप्रभवत्यजाद्य ॥ ३७ ॥**

**प्रवर्धिता मे भवताऽनुकम्पिता दत्तो हि विज्ञानमयः प्रदीपः ।**
**हित्वा कृतज्ञस्तव पादमूलं कोऽन्यः[1] समीयाच्छरणं त्वदन्यम् ॥ ३८ ॥**

**वृक्णश्च रूढः स्नेहपाशो मदीयो दाशार्हवृष्ण्यन्धकसात्वतेषु ।**
**प्रसारितः सृष्टिविवृद्धये त्वया स्वमायया ह्यात्मसुबोधहेतिना ॥ ३९ ॥**

मयि **अनुकम्पिता** दयावत्ता **प्रवर्धिता कः कृतज्ञः त्वदन्यं समीयात्** प्राप्नुयात्, न कोऽपि । **अन्यः** कृतज्ञादन्यः तामसस्तु त्वदन्यत् समीयात् नित्यनरके रतेरिति भावः । **त्वया स्वमायया** तव शक्तिविशेषेण । **सृष्टिविवृद्धये** पालनाद्यर्थम् । **प्रसारितः** प्रतिदिनं विवर्धितः । **स्नेहपाशः** आत्मविबोधः= विविधत्वज्ञानं, स एव हेतिः= आयुधं तेन वृक्णः ॥ ३९ ॥

**नमोऽस्तु ते महायोगिन् प्रपन्नमनुशाधि माम् ।**
**यथा त्वच्चरणाम्भोजे रतिः स्यादनपायिनी ॥ ४० ॥**

---
[1] 'कोऽज्ञः' इति पाठान्तरम् ।

**महायोगिन् !** सर्वज्ञ ! बहूपायज्ञ ! इति वा **अनपायिनी** अभिभवरहिता, स्थिरा वा तथा **अनुशाधि** नियमय ॥ ४० ॥

**श्रीभगवानुवाच-**

**गच्छोद्धव मदादेशाद् बदर्याख्यं मदाश्रमम् ।**

**तत्र मत्पादतीर्थोदैः स्नानोपस्पर्शनैः शुचिः ॥ ४१ ॥**

**ईक्षयाऽळकनन्दाया विधूतक्लेशकल्मषः ।**

**वसानो वल्कलान्यङ्ग वन्यभक्षश्च निःस्पृहः ॥ ४२ ॥**

**तितिक्षुर्द्वन्द्वमात्राणां सुशीलः संयतेन्द्रियः ।**

**शान्तः समाहितधिया ज्ञानविज्ञानसंयुतः ॥ ४३ ॥**

**मत्तोऽनुशिक्षितं यत्ते विविक्तमनुभावय ।**

**मय्यावेशितवाक्चित्तो मद्धर्मनिरतो भव ॥ ४४ ॥**

**अतिव्रज्य गतीस्तिस्रो मामेष्यसि ततः परम् ॥ ४५ ॥**

विकर्मणां प्रारब्धदोषाणां बहुविधत्वात् अळकनन्दावीक्षणेन केषाञ्चिन्नाशः, केषाञ्चित् स्नानादिना नाशः, **शुचिः** पवित्रलक्षणातिशयोपेतः, वन्यं= कपित्थबदरीफलादीनि, **निस्पृहः** कलत्रादिस्पृहारहितः, बान्धवानां शीतोष्णादीनां मात्राणां= विषयाणां **तितिक्षुः** तत्कृतदेहमनोविकारसहनसमर्थः सन् **संयतेन्द्रियः** वागादीन्द्रियनियमनवान् **समाहित-धिया** स्ववशान्तःकरणेन निमित्तेन **शान्तः** भगवन्न्यस्तबुद्धिः एतादृशः सन् **ज्ञानं** सर्वतत्वदेवताज्ञानं **विज्ञानं** तेषां स्वरूपसत्वादिप्रदे मयि स्वतन्त्रत्वज्ञानं ताभ्यां युक्तः[1] । मया अनुशिक्षितः= उपदिष्टः यः तं भावय= ध्यायस्व, विविक्तं यथा भवति तथा

[1] अत्र मूलपुस्तके 'विविक्तः वैराग्यभागः भक्तिभागः' इत्यधिकं पठ्यते, सम्पातायतं स्यात् ।

जनसंकुलदेशं परित्यज्य इति वा । मद्धर्माः= भक्तेषु मद्गुणप्रवचनादयः तेषु निरतः, **तिस्रः गतीः** गम्यन्त इति गतयः तेषु निरतः । नरकभूमिस्वर्गान् जाग्रत्-स्वप्न-सुषुप्ति-लक्षणं वा गतीः । **अतिव्रज्य** अतिक्रम्य प्रारब्धं विनाश्य इति भावः ॥ ४५ ॥

**श्रीशुक उवाच-**

**स एवमुक्तो हरिमेधसोद्धवः प्रदक्षिणं तं परिवृत्य पादयोः ।**
**शिरो निधायाश्रुकळाभिरार्द्रधीः सिञ्चन् पदद्वन्द्वमथोनुचक्रमे ॥ ४६ ॥**

**हरिमेधसा** विष्णुना । **आर्द्रधीः** भक्त्या द्रवीकृतचित्तः । **अनुचक्रमे** शनैर्गतवान् ॥ ४६ ॥

**सुदुस्त्यजस्नेहवियोगकातरो न शक्नुवंस्तं परिहर्तुमातुरः ।**
**कृच्छ्रं ययौ मूर्धनि भर्तृपादुके बिभ्रन्नमस्कृत्य ययौ पुनःपुनः ॥ ४७ ॥**

सुदुस्त्यजस्नेहेन= भक्त्या वियोगं= कृष्णपरित्यागं प्रति कातरः= व्यग्रचित्तः ॥ ४७ ॥

**ततस्तमन्तर्हृदि सन्निवेश्य गतो महाभागवतो विशालाम् ।**
**यथोपदिष्टं जगदेकबन्धुना तपः समास्थाय हरेरगाद् गतिम् ॥ ४८ ॥**

सान्निध्यं परित्यज्य दूरे गमनानन्तरं श्रीकृष्णम् **अन्तः हृदि सन्निवेश्य** दृढं ध्यायन् । **विशालां** बदरीं प्रति यन् उपदिष्टं हरेः ध्यानलक्षणं **तपः** तद् आस्थाय कुर्वन् इत्यर्थः । **गतिं** गम्यत इति गतिः तं परमात्मानं **अगात्** ॥

**यदेतदानन्दसमुद्रसम्भृतं ज्ञानामृतं भागवताय भाषितम् ।**
**कृष्णेन योगेश्वरसेविताङ्घ्रिणा सच्छ्रद्धयाऽऽसेव्य जगद् विमुच्यते ॥ ४९ ॥**

आनन्दलक्षणः समुद्रः यस्मात् तत् आनन्दसमुद्रं= पूर्णानन्दसम्पादकम् उपनिषत्सांख्यादिशास्त्रं तस्मात्, सम्भृतं अथवा आनन्दयतीति आनन्दं= भगवच्छास्त्रं स्वविषयश्रवणादिनेति भावः । स एव समुद्रः विस्तृतत्वात् इति भावः । तस्मात् सम्भृतम्= उद्धृतं ज्ञानमेव अमृतं जरामरणपरिहर्तृत्वात् अमृतं तत् **जगत्** साधुजनः **आसेव्य** निषेव्य ॥ ४९ ॥

**भवभयमपहन्तुं ज्ञानविज्ञानसारं निगमकुमुददभ्रं भृङ्गवद् वेद्यसारम् ।**
**अमृतमुदधिकल्पं पाययन् भृत्यवर्गान् पुरुषऋषभमाद्यं विष्णुसञ्ज्ञं नतोस्मि ॥ ५०**

**॥ इति श्रीमद्भागवते एकादशस्कन्धे एकोनत्रिंशोऽध्यायः ॥**

शुकः हर्षात् श्रीकृष्णं नमति । निगमाः= वेदाः, त एव कुमुदानि, तेषां दभ्रं= स्वल्पं रसग्रहम् इत्यर्थः । ज्ञानं= वर्णाश्रमधर्मादिज्ञानं, विज्ञानं= श्रीहरिगुणोत्कर्षज्ञानं, तत्रापि **सारं** पुष्कळसाधनविषयकम् इत्यर्थः । **भृङ्गवत्** भ्रमरवत् । सेवारसज्ञानां वेद्यः= ज्ञानगोचरः अलौकिकरसः यस्य तत् । **अमृतं** ज्ञानामृतं यः **पाययन्** । तं **विष्णुसञ्ज्ञं नतोऽस्मि** ॥ ५० ॥

॥ इति श्रीयादवेन्द्रयतिविरचिते एकादशस्कन्धव्याख्याने एकोनत्रिंशोऽध्यायः ॥

# 30 | त्रिंशोऽध्यायः

**राजोवाच-**

**ततो महाभागवत उद्धवे बदरीं गते ।**

**द्वारवत्यां किमकरोद् भगवान् भूतभावनः ॥ १ ॥**

भूतानि= चेतनान् भावयति= स्वस्वगतिं प्रापयति इति **भूतभावनः** किमकरोत् ? ॥ १ ॥

**ब्रह्मशापोपसंसृष्टे स्वकुले यादवर्षभः ।**

**प्रेयसीं सर्वनेत्राणां तनुं स कथमत्यजत् ॥ २ ॥**

**स** कृष्णः **तनुं कथं अत्यजत्** अतिशयेनाहरत् । भूलोकात् स्वर्गलोकं प्रति कथं देहेन सह गतवान् इत्यर्थः ॥ २ ॥

श्रीकृष्णस्य सौन्दर्यातिशयं महामाहात्म्यं स्तौति- **प्रत्याक्रष्टुमिति** ।

**प्रत्याक्रष्टुं नयनमबला यत्र मग्नं न शेकुः**

**कर्णाविष्टं न सरति यशो यत् सतामात्मलग्नम् ।**

**यच्छ्रीवाक्यं जनयति रतिं कोऽनुमानः कवीनां**

**दृष्ट्वा जिष्णोर्युधि रथगतं यच्च तत्साम्यमीयुः ॥ ३ ॥**

**यत्र** श्रीकृष्णवपुषि **लग्नं** सौन्दर्यातिशयादिति भावः । **प्रत्याक्रष्टुं** आवर्तयितुम् । **यशः** श्रीकृष्णकीर्तिः **कर्णाविष्टं** सत् **आत्मलग्नं** मनोलग्नं **न** निस्सरति= विस्मृतिं

न प्राप्नोति इति भावः । **श्रीवाक्यं** श्रीकृष्णवचः तत्वोपदेशरूपं **रतिं** नित्यसुखं **जनयति कोऽनुमानः कः** सुखरूपः श्रीकृष्णः **कवीनाम् अनुमानः** मानानुसारी स्वतो ज्ञातुमशक्य इति भावः । **जिष्णोः** अर्जुनस्य **रथगतं यद्** वपुः **दृष्ट्वा** सात्विकक्षत्रियाः **तत्साम्यं** निर्दुःखत्वलक्षणम् **ईयुः** प्रापुः, स तादृशगुणमहिमासम्पन्नः श्रीकृष्ण इत्यर्थः ॥ ३ ॥

'कथमत्यजत्' इति जिज्ञासाया उत्तरं वदन् शुकः कृष्णस्य व्यापारम् आह- **दिवि भुवीति ।**

**श्रीशुक उवाच-**

**दिवि भुव्यन्तरिक्षे च महोत्पातान् समुत्थितान् ।**

**दृष्ट्वाऽऽसीनान् सुधर्मायां कृष्णः प्राह यदूनिदम् ॥ ४ ॥**

प्रथमम् उत्पातान् प्रदर्श्य, यादवान् द्वारवत्याः समुत्सार्य, प्रभासे तान् समाप्य, कृष्णः स्वयं स्वर्गम् अगमदिति घट्टार्थः । सुधर्माख्यसभामण्टपे **आसीनान्** ॥ ४ ॥

अपायप्रदर्शिभिः= अत्र स्थितानाम् अनिष्टं भविष्यतीति ज्ञातृभिः अस्माभिः न स्थेयं, किन्तु तत्र देवतादिपूजा कार्येत्याह- **एते घोरा** इति ।

**श्रीभगवानुवाच-**

**एते घोरा महोत्पाता द्वार्वत्यां नाशहेतवः ।**

**मुहूर्तमपि न स्थेयमत्र वो यदुपुङ्गवाः ॥ ५ ॥**

**स्त्रियो बालाश्च वृद्धाश्च शङ्खोद्धारं व्रजन्त्वितः ।**

**वयं प्रभासं यास्यामो यत्र प्रत्यक् सरस्वती ॥ ६ ॥**

**तत्राभिषिच्य शुचय उपोष्य सुसमाहिताः ।**
**देवताः पूजयिष्यामः स्नपनालेपनार्हणैः ॥ ७ ॥**

**ब्राह्मणांस्तु महाभागान् कृतस्वस्त्ययना वयम् ।**
**गोभूहिरण्यवासोभिर्गजाश्वरथवेश्मभिः ॥ ८ ॥**

**विधिरेष ह्यरिष्टघ्नो मङ्गळायनमुत्तमम् ।**
**देवद्विजगवां पूजा भूतेषु परमा दया ॥ ९ ॥**

**इति सर्वे समाकर्ण्य यदुवृद्धा मधुद्विषः ।**
**तथेति नौभिरुत्तीर्य प्रभासं प्रययू रथैः ॥ १० ॥**

**तस्मिन् भगवताऽदिष्टं यदुदेवेन यादवाः ।**
**चक्रुः परमया भक्त्या सर्वश्रद्धोपबृंहिताः ॥ ११ ॥**

**इतः** समुद्रोदकमध्यात्, **शङ्खोद्धारं** स्थलं वृद्धादयो **व्रजन्तु** । गोभूम्यादिदानैः ब्राह्मणांश्च **पूजयिष्यामः** । पूजालक्षण **एष विधिः** आचरणं **मङ्गळायनं** च मङ्गलप्रदम् । तत् **उत्तीर्य** द्वारवत्याः परितः स्थितं समुद्रजलम् इत्यर्थः ॥ ११ ॥

**ततस्तस्मिन् महापानं पपुर्मैरेयकं मधु ।**
**दिष्टविभ्रंशितधियो यादवा नष्टमङ्गळाः ॥ १२ ॥**

**महापानेन मत्तानां वीराणां दृप्तचेतसाम् ।**
**कृष्णमायाविमूढानां सङ्घर्षः सुमहानभूत् ॥ १३ ॥**

**ततः** देवद्विजादिपूजानन्तरं दिष्टेन= अदृष्टप्रेरकपरमात्मना विभ्रंशितधियः= इष्टानिष्टबुद्धिरहिताः, महत्= अत्यन्तं पानं यस्य तत् महापानम् । यतः ऐरेयकमद्यात्

मतिः इष्टानिष्टज्ञानं भ्रंशते तत् ऐरेयकाख्यमधु मद्यं **पपुः** अमर्यादं बहुपपुरित्यर्थः । **महापानेन** बहुपानेन । बहुविवेकिनां मध्ये कस्यापि पानं न कार्यमिति विवेको नाभूदित्याहकृष्णमायेति । कृष्णमाया= विमोहकशक्तिः, तया विमूढानाम् ॥ १३ ॥

**युयुधुः क्रोधसंरब्धा वेलायामाततायिनः ।**
**धनुर्भिरसिभिर्भल्लैर्गदाभिस्तोमरर्ष्टिभिः ॥ १४ ॥**

**पतत्पताकैः रथकुञ्जरार्वभिः खरोष्ट्रगोभिर्महिषैर्नरैरपि ।**
**मिथः समेत्याश्वतरैः सुदुर्मदा न्यहञ्छरैर्दद्भिरिव द्विपा वने ॥ १५ ॥**

**वेळायां** समुद्रोपान्त्ये सैकतेषु पुलिने **आततायिनः** निर्निमित्तम् उद्यतशस्त्रपाणयः **भल्लै** रस्त्रविशेषैः तोमरैः= कुन्तैः आर्ष्टिभिः । इतस्ततः पतन्तः पातकाः येषां तैः, अर्वभिः= अश्वैः, खरोष्ट्रादिभिः, वाहनैः **अश्वतरैः** खरात् अश्वजातैः, **दद्भिः** गजदन्तैः, अहन्= परस्परं प्रहृतवन्तः ॥ १५ ॥

द्वन्द्वं युद्धमाह- **प्रद्युम्नसांबाविति ।**

**प्रद्युम्नसाम्बौ युधि रूढमत्सरावक्रूरभोजावनिरुद्धसात्यकी ।**
**सुभद्रसङ्ग्रामजितौ सुचारुगदौ सुमित्रासुरथौ समीयतुः ॥ १६ ॥**

**अन्ये च ये वै निशठोल्मुकादयः सहस्रजिच्छतजिद्भानुमुख्याः ।**
**अन्योन्यमासाद्य मदान्धकारिता जघ्नुर्मुकुन्देन विमोहिता भृशम् ॥ १७ ॥**

**दाशार्हवृष्ण्यन्धकभोजसात्वता अध्वर्युदा माधुरशूरसेनाः ।**
**विसर्जनाः कुकुराः कुन्तयश्च मिथश्च जघ्नुः सुविसृज्य सौहृदम् ॥ १८ ॥**

**पुत्रास्त्वयुध्यन् पितृभिर्भ्रातृभिश्च स्वस्रीयदौहित्रपितृव्यमातुलैः ।**
**मित्राणि मित्रैः सुहृदः सुहृद्भिर्ज्ञातींस्त्वहन् ज्ञातय एव मूढाः ॥**

**शरेषु हीयमानेषु भज्यमानेषु धन्वसु ।**
**शस्त्रेषु क्षीयमाणेषु मुष्टिभिर्जह्रुरेरकाः ॥ २० ॥**

**ता वज्रकल्पा अभवन् परिघा मुष्टिना हृताः ।**
**जघ्नुर्द्विषस्ते कृष्णेन वार्यमाणास्तु तं च ते ॥ २१ ॥**

**प्रत्यनीकं मन्यमाना बलभद्रं च मोहिताः ।**
**हन्तुं कृतधियो राजन्नापन्ना आततायिनः ॥ २२ ॥**

**अथ तावपि संक्रुद्धावुद्यम्य कुरुनन्दन ।**
**एरकामुष्टिपरिघैश्चरन्तौ जघ्नतुर्युधि ॥ २३ ॥**

**ब्रह्मशापोपसृष्टानां कृष्णमायावृतात्मनाम् ।**
**स्पर्द्धाक्रोधः क्षयं निन्ये वैणवोऽग्निर्यथा वनम् ॥ २४ ॥**

**एवं सर्वेषु नष्टेषु कुलेषु स्वेषु केशवः ।**
**उत्तारितो भुवो भार इति मेनेऽवशेषितः ॥ २५ ॥**

**रामः समुद्रवेलायां योगमास्थाय पौरुषम् ।**
**तत्यजे योगमाविश्य संयोज्यात्मानमात्मनि ॥ २६ ॥**

**एरकाः** परितः सूचीमुखत्वक्सारतृणविशेषाः **मुष्टिभिः जह्रुः । परिघा** प्रहरण-विशेषाः दृढा इत्यर्थः, ताभिः मुष्टिभिः **हृताः ।** एरकाणां दार्ढ्यं प्रहरसामर्थ्यमाह-**वज्रकल्पा** इति । **तं च** कृष्णं च **जघ्नुः । प्रत्यनीकं** विरोधिबलम् । **मुष्टिपरिघैः**

एरकायुक्तपरिघैः । **वैणवः** वेणुसङ्घर्षजः । स्पर्धो क्रोधश्च स्वकीयेषु दाशार्हवृष्ट्यादि-कुलोपेतेषु । **पौरुषं** महापुरुषविषयं **योगं** ध्यानम् **आस्थाय योगं** योगनामानं विष्णुम् । **आविश्य आत्मानं** स्वान्तर्यामिणम् । **आत्मना** व्याप्तपरमात्मना । **संयोज्य** एकत्वेन ध्यात्वा पौरुषं देहं **तत्यजे** त्यक्तवान् ॥ २६ ॥

**रामनिर्याणमालोक्य भगवान् देवकीसुतः ।**
**निषसाद धरोपस्थे तूष्णीमासाद्य पिप्पलम् ॥ २७ ॥**

**पिप्पलम्** अश्वत्थम् । **आसाद्य** प्राप्य । **धरोपस्थे** भूमावेव, रत्नवदासनं विहायेति भावः । **निषसाद** ।

कीदृशः ? इति जिज्ञासायामाह- **बिभ्रदिति** ।

**बिभ्रच्चतुर्भुजं रूपं भ्राजिष्णु प्रभया स्वया ।**
**दिशो वितिमिराः कुर्वन् विधूम इव पावकः ॥ २८ ॥**

**श्रीवत्साङ्कं घनश्यामं तप्तहाटकवर्चसम् ।**
**कौशेयाम्बरयुग्मेन परिवीतं सुमङ्गळम् ॥ २९ ॥**

**सुन्दरस्मितवक्त्राब्जं नीलकुन्तळमण्डितम् ।**
**पुण्डरीकाभिरामाक्षं स्फुरन्मकरकुण्डलम् ॥ ३० ॥**

**कटिसूत्रब्रह्मसूत्रकिरीटकटकाङ्गदैः ।**
**हारनूपुरमुद्राभिः कौस्तुभेन विराजितम् ॥ ३१ ॥**

**वनमालापरीताङ्गं मूर्तिमद्भिर्निजायुधैः ।**
**कृत्वोरौ दक्षिणं पादमासीनं पङ्कजारुणम् ॥ ३२ ॥**

**मुसलावशेषायःखण्डकृतेषुर्लुब्धको जरः ।**
**मृगाकारं तच्चरणं विव्याध मृगशङ्कया ॥ ३३ ॥**

**चतुर्भुजं तं पुरुषं दृष्ट्वा स कृतकिल्बिषः ।**
**भीतः पपात शिरसा पादयोरसुरद्विषः ॥ ३४ ॥**

अतिसुन्दरं वपुः दधानः । वपुषो विशेषणान्याह- **चतुर्भुजमित्यादिना** । निजायुधैः युक्तम् । **पङ्कजारुणं दक्षिणं पादम्** । चूर्णीकृतस्य मुसलस्य अवशेषः= अवशिष्टायःखण्डः, तेन कृतः इषुः= बाणमुखं यस्य सः जराख्यः **लुब्धकः** व्याधः चरणं मृगस्याकारं दृष्ट्वा मृग**शङ्कया विव्याध** । **कृतकिल्बिषः** कृतापराधः ॥ ३४ ॥

**व्याध उवाच-**
**अजानता कृतमिदं पापेन मधुसूदन ।**
**क्षन्तुमर्हसि पापस्य उत्तमश्लोक मेऽनघ ॥ ३५ ॥**

**यस्यानुस्मरणं नृणामज्ञानध्वान्तनाशनम् ।**
**वदन्ति तस्य ते विष्णो मयाऽसाधु कृतं प्रभो ॥ ३६ ॥**

**तमाशु जहि वैकुण्ठ पाप्मानं मृगलुब्धकम् ।**
**यथा पुनरहं त्वेवं न कुर्यां सदतिक्रमम् ॥ ३७ ॥**

उत्तरत्र **सदतिक्रमं** सत्सु अपराधं **यथा** येन **न कुर्यां** तमुपायं कुरु । स चोपायः लुब्धकनिग्रह एवेत्याशयेनाह- **जहीति** । **मृगलुब्धकं** मोचयेति वा ॥ ३७ ॥

त्वां स्तोतुं अस्माकं बुद्धयो न प्रवर्तन्ते, तव महिम्नो अनन्तत्वात् अस्माकं तादृशशक्त्यभावादिति स्तौति- **यस्यात्मयोग** इति ।

**यस्यात्मयोगरचितं न विदुर्विरिञ्चरुद्रादयोऽस्य तनयाः पतयो गिरां ये ।**

**त्वन्मायया पिहितदृष्टय[1] एतदञ्जः किं तस्य ते वयमसद्गतयो गृणीमः ॥ ३८ ॥**

**यस्य** तव आत्मयोगः= स्वतःसिद्धसामर्थ्यं, तेन रचितं प्राकृतं गुणमहदादिकार्यं च **विरिञ्चरुद्रादयः विदुः** त्वदनुग्रहादिति भावः । **अस्य** विरिञ्चस्य **तनयाः** महर्ष्यादयः । **गिरां पतयः** बृहस्पत्यादयः । **एतत् त्वया** सृष्टम् अञ्जसा न विदुः । **वयन्तु त्वन्मायया** त्वदधीनपञ्चपर्वाविद्यया **पिहितदृष्टयः** प्रतिबद्धज्ञानशक्तयः **असद्गतयः** असत्सुविषयेषु गतयो येषां ते तादृशाः वयं तु **तस्य** अपरिमितमहिम्नः आत्मयोगेन= उपायसामर्थ्येन रचितं **गृणीमः, किं स्तौति** असामर्थ्य इत्यर्थः ॥ ३८ ॥

**श्रीभगवानुवाच-**

**मा भैर्जर त्वमुत्तिष्ठ काम एष कृतो हि मे ।**

**याहि त्वं मदनुज्ञातः स्वर्गं सुकृतिनां पदम् ॥ ३९ ॥**

**हे जर** जरसंज्ञव्याध । **उत्तिष्ठ** नमस्काररूपात् विनिपातात् उत्तिष्ठ । **माभैः** मदपराधात् अधःपातभयं त्यज । **कामः** अभीष्टार्थः मया तुभ्यं **कृतः** । कामप्राप्तिमेवाह- **याहि त्वमिति** ।

**श्रीशुक उवाच-**

**इत्यादिष्टो भगवता कृष्णेनेच्छाशरीरिणा ।**

**त्रिः परिक्रम्य तं नत्वा विमानेन दिवं ययौ ॥ ४० ॥**

**दारुकः कृष्णपदवीमन्विच्छन् नाधिगम्य तम् ।**

**वायुं तुळसिकामोदमाघ्रायाभिमुखं ययौ ॥ ४१ ॥**

---

[1] 'विहितदृष्टय' इति पाठान्तरम् ।

स्वेच्छाप्राप्तः शरीरिणो येन । सर्वजीवान्तर्यामिणेत्यर्थः । **पदवीम् अन्विच्छन्** श्रीकृष्णवधस्थानं मृगयन् इत्यर्थः । श्रीकृष्णधृततुळसीमालायाः आमोदयुक्तं वायुम् **आघ्राय** कृष्णाभिमुखम् ॥ ४१ ॥

**तं तत्र तिग्मद्युतिमायुधैर्वृतं ह्यश्वत्थमूले कृतकेतनं पतिम् ।**
**स्नेहप्लुतात्मा निपपात पादयोरथादवप्लुत्य सबाष्पलोचनः ॥ ४२ ॥**

**अदृश्यतस्ते चरणाम्बुजं प्रभो दृष्टिः प्रनष्टा तमसि प्रविष्टा ।**
**दिशो न जाने न लभे च शान्तिं यथा निशायामुडुपे प्रनष्टे ॥ ४३ ॥**

**तिग्मद्युतिं** परितः व्याप्तप्रकाशं, कृतः केतन आश्रयः येन तमित्यर्थः । **अवप्लुत्य** त्वरया अवरुह्य । **दृष्टिः** मे ज्ञानं, **तमसि** कर्तव्यमौढ्ये, **प्रशान्तिं** सुखं **न लभे** । **ते** तव दर्शनादिति भावः । **उडुपे** पूर्णचन्द्रे ॥ ४३ ॥

**इति ब्रुवति सूते वै रथो गरुडलाञ्छनः ।**
**खमुत्पपात राजेन्द्र साश्वध्वज उदीक्षितः ॥ ४४ ॥**

**तमन्वगच्छन् दिव्यानि विष्णुप्रहरणानि वै ।**
**तेनातिविस्मितात्मानं सूतमाह जनार्दनः ॥ ४५ ॥**

**उदीक्षितः** श्रीकृष्णेन प्रेरितः रथ इत्यर्थः । **प्रहरणानि** आयुधानि ॥ ४५ ॥

**श्रीभगवानुवाच-**

**गच्छ द्वारवतीं सूत ज्ञातीनां निधनं मिथः ।**
**सङ्कर्षणस्य निर्याणं बन्धुभ्यो ब्रूहि मद्दशाम् ॥ ४६ ॥**

**द्वारकायां न च स्थेयं भवद्भिश्च स्वबन्धुभिः ।**
**मया त्यक्तां यदुपुरीं समुद्रः प्लावयिष्यति ॥ ४७ ॥**

**स्वं स्वं परिग्रहं सर्वे आदाय पितरौ च नः ।**
**अर्जुनेनान्विताः सर्वे इन्द्रप्रस्थं गमिष्यथ ॥ ४८ ॥**

**त्वं तु मद्धर्ममास्थाय ज्ञाननिष्ठ उपेक्षकः ।**
**मन्मायारचनामेतां विज्ञायोपशमं व्रज ॥ ४९ ॥**

**श्रीशुक उवाच-**
**इत्युक्तस्तं परिक्रम्य नमस्कृत्य पुनः पुनः ।**
**तत्पादौ शीर्ष्ण्युपाधाय दुर्मनाः प्रययौ पुरीम् ॥ ५० ॥**

**॥ इति श्रीमद्भागवते एकादशस्कन्धे त्रिंशोऽध्यायः ॥**

मद्दशा= मम स्वर्गं प्रति प्रयाणम्, **भवद्भिः** न **स्थेयम्** इति मद्वचनं वद । तत्र निमित्तमाह- **मया त्यक्तमिति । इन्द्रप्रस्थं गमिष्यथ** इति च वद । **उपेक्षकः** विषयेषु उपेक्षावान् सन् **एतां** जगतीं मम माया= अघटितघटनाशक्तिः तया रचना= सृष्टिः यस्याः सा । तां **विज्ञाय** मम सामर्थ्यानि ध्यात्वेत्यर्थः । **उपशमं** बन्धपरिहारं सुखं **व्रज । दुर्मनाः** खिन्नचित्तः वियोगादिति भावः । **पुरीं** द्वारवतीम् ॥ ५० ॥

॥ इति श्रीयादवेन्द्रयतिविरचिते एकादशस्कन्दव्याख्याने त्रिंशोऽध्यायः ॥

# 31 | एकत्रिंशोऽध्यायः

**श्रीशुक उवाच-**

**अथ तत्रागमद् ब्रह्मा भवान्या च समं भवः ।**

**महेन्द्रप्रमुखा देवा मुनयः सप्रजेश्वराः ॥ १ ॥**

**पितरः सिद्धगन्धर्वा विद्याधरमहोरगाः ।**

**चारणा यक्षरक्षांसि किन्नराप्सरसो द्विजाः ॥ २ ॥**

**द्रष्टुकामा भगवतो निर्याणं परमोत्सुकाः ।**

**गायन्तश्च गृणन्तश्च शौरेः कर्माणि जन्म च ॥ ३ ॥**

**ववृषुः पुष्पवर्षाणि विमानावलिभिर्नभः ।**

**कुर्वन्तः सङ्कुलं राजन् भक्त्या परमया युताः ॥ ४ ॥**

**अथ** कृष्णस्य पिप्पलसमीपप्राप्त्यनन्तरम् । **निर्याणं** स्वर्गं प्रति गमनं, पृथिवीलोकपरित्यागं वा । **गृणन्तः** स्तुवन्तः । **विमानावलिभिः नभः सङ्कुलं** व्याप्तं **कुर्वन्तः** ॥ ४ ॥

**भवं पितामहं वीक्ष्य विभूतीरात्मनो विभुः ।**

**संयुज्यात्मनि चात्मानं पद्मनेत्रे न्यमीलयत् ॥ ५ ॥**

**लोकाभिरामां स्वतनुं धारणाध्यानमङ्गलाम् ।**

**योगधारणयाऽऽग्नेय्याऽदग्ध्वा धामाविशत् स्वकम् ॥ ६ ॥**

**आत्मनः** अन्याः **विभूतीः** विभूतिपतीन्[1] इन्द्रादीन् **वीक्ष्य, आत्मानं आत्मनि** स्वमूलरूपे संयोज्य **पद्मनेत्रे न्यमीळयत । स्वकं धाम आविशत् ।** तस्मिन् समये कृष्णस्य असुरमोहकव्यापारमाह- **अग्नेय्या धारणयेति ।** देवा इव **अग्नेय्या योगधारणया** स्वकां तनुं **अदग्ध्वा ।** स्वतनुमिव स्थिताम् अन्यां तनुं प्रदर्श्य । तत्क्षणे योगेन सृष्टाम् इति भावः । स्वकं धाम आविशत् ॥ ६ ॥

**दिवि दुन्दुभयो नेदुः पेतुः सुमनसश्च खात् ।**
**सत्यं धर्मो धृतिर्भूतिः कीर्तिः श्रीश्चानु तं ययुः ॥ ७ ॥**

**देवादयो ब्रह्ममुखा आविशन्तं स्वधामनि ।**
**अविज्ञातगतिं कृष्णं ददृशुश्चातिविस्मिताः ॥ ८ ॥**

**सौदामिन्या यथाऽऽकाशे यान्त्या भित्त्वाऽभ्रमण्डलम् ।**
**गतिर्न लक्ष्यते मर्त्यैस्तथा कृष्णस्य दैवतैः ॥ ९ ॥**

**ब्रह्मरुद्रादयस्ते तु दृष्ट्वा योगगतिं हरेः ।**
**विस्मितास्तां प्रशंसन्तः स्वंस्वं धामागमन् नृप ॥ १० ॥**

**सुमनसः** सुमनांसि पुष्पाणि । सत्यधर्माद्यभिमानिदेवताश्च **तमनुययुः ।** तदनन्तरं प्रायशः **सत्यं** धर्मादयो भुवि न सन्तीति भावः । कृष्णं पूर्वं ये **देवादयो ददृशुः** तैः ब्रह्ममुखैः **अविज्ञातगतिम् अतिविस्मिताः** जाताः । श्रीकृष्णतनोः अव्यक्तत्वादिति भावः ॥ १० ॥

श्रीकृष्णस्य देहान्तरदाहः किमर्थम्? इत्याशङ्क्य लीलेयं इत्याह- **राजन् परस्येति ।**

---

[1] 'विभूतिरूपान्' इति पाठः सम्भाव्यते ।

**राजन् परस्य तनुभृज्जननाप्ययेहा मायाविडम्बनमवैहि यथा नटस्य ।**
**सृष्ट्वाऽऽत्मनेदमनुविश्य विहृत्य चान्ते संहृत्य चात्ममहिम्नोपरतः स आस्ते ॥ ११**

तनुभृतां जननवत् अप्ययवच्च ईहा= व्यापारः **परस्य** तनुभृद्विलक्षणस्य मायया= स्वेच्छाशक्तिभिः विडम्बनं= अनुकरणं **नटस्य यथा** । तस्य तत्तद्व्यापारानुकरणम्, न तु स्त्रीत्वादिकं तस्य धर्मः, तथा जननादिकं न तस्य धर्मः इति **अवैहि** । जगत्सृष्ट्यादिकारणत्वेन सर्वसामर्थ्योपेतस्य जननादिदोषो नास्तीत्याह- **सृष्ट्वात्मनेति** । **इदं** कारणं कार्यं च **अनुविश्य** शक्तिप्रेरकरूपैः प्रविश्य । **विहृत्य** ज्ञानाज्ञानादिदानलक्षणं विहरणं कृत्वा, **उपरतः** जगद्व्यापाररहितः सन् आत्ममहिम्ना स्वसामर्थ्येनेत्यर्थः । **आस्ते** ॥ ११ ॥

ननु लुब्धकात् इषुणा प्रहारनिवारणं कुतो न कृतवान्? इत्याशङ्क्याह- **मर्त्येन य** इति ।

**मर्त्येन यो गुरुसुतं यमनीतलोकं त्वां चानयच्छरणदः परमास्त्रदग्धम् ।**
**जिग्ये पुरेऽन्तकमपीशतनावनीशः किं स्यादनीश्वर अथो मृगयोः स देहे ॥ १२ ॥**

**मर्त्येन** देहेन सह यमेन नीतः= प्रापितः लोकः यस्य सः । तं, गुरोः= सान्दीपनेः सुतम् **अनयत्** । **त्वाञ्च** परीक्षितं च **अनयत्** उज्जीवयामास । अन्तकः श्रीमहारुद्रः तं **जिग्ये,** बाणासुरनिग्रहसमये इति भावः । न विद्यते ईशो यस्य **अनीशः** कृष्णः **ईशतनौ** सर्वबलादिसामर्थ्योपेते पुरे देहे स्वभावसिद्धे देहे **सर्वेषाम्** ईशत्वं तनोतीति ईशतनुः इति वा । स्वदेहविषये **मृगयोः** लुब्धकात् **अथो** रक्षणे **अनीश्वरः स्यात् किं?** न स्यादेव ॥ १२ ॥

किन्तु ब्राह्मणशापपालनाय स्वयं तथा वेधादिकं दर्शयामासेति भावेनाह- **तथापीति** ।

**तथाप्यशेषस्थितिसम्भवाप्ययेष्वनन्यहेतुर्यदशेषशक्तिधृक् ।**
**नैच्छत् प्रणेतुं वपुरत्र शेषितं मर्त्येन किं स्वस्य गतिं प्रदर्शयन् ॥ १३ ॥**

न विद्यते अन्यः सहायः यस्य सः अनन्यः, स चासौ हेतुश्च । **प्रणेतुं** विप्रशापप्राप्तमिषुं व्यर्थं कर्तुं **नैच्छत्** । बलरामादिदेहं च भुवि **शेषितं** अवशेषितं **प्रणेतुं नैच्छत्** । तत् कुतः ? इत्यत आह- **मर्त्येनेति** । बलादीनां देवानां मर्त्येन देहेन किं स्यादिति बुद्ध्या, **स्वस्य गतिं** स्थानं **प्रदर्शयन् शेषितं वपुः** तदर्थमपि नैच्छत् इत्यर्थः ॥ १३ ॥

**य एतां प्रातरुत्थाय कृष्णस्य पदवीं पराम् ।**
**प्रयतः कीर्तयेद् भक्त्या तामेवाप्नोत्यनुत्तमाम् ॥ १४ ॥**

**दारुको द्वारकामेत्य वसुदेवोग्रसेनयोः ।**
**पतित्वा चरणावास्रैर्न्यषिञ्चत् कृष्णविच्युतः ॥ १५ ॥**

**कथयामास निधनं वृष्णीनां कृत्स्नशो नृप ।**
**तच्छ्रुत्वोद्विग्नहृदया जनाः शोकविमूर्च्छिताः ॥ १६ ॥**

**तत्र वै त्वरिता जग्मुः कृष्णविश्लेषविह्वलाः ।**
**व्यसवः शेरते यत्र ज्ञातयो घ्नन्त आयुधैः ॥ १७ ॥**

**देवकी रोहिणी चैव वसुदेवस्तथा सुतौ ।**
**कृष्णरामावपश्यन्तः शोकार्ता विजहुः स्मृतिम् ॥ १८ ॥**

**प्राणांश्च विजहुस्तत्र भगवद्विरहातुराः ।**
**उपगुह्य पतींस्तात चितामारुरुहुः स्त्रियः ॥ १९ ॥**

**पदवीं** गतिम् । **तामेव** सुगतिमेव । कृष्णेन विच्युतः= प्रेरितः । **आयुधैः घ्नन्तः** परस्परं युध्यन्तः **यत्र व्यसवः** पतिताः **तत्र कृष्णरामावपश्यन्तः स्मृतिं** संज्ञां **विजहुः** मूर्च्छिता इत्यर्थः । **प्राणांश्च तत्र** प्रभासे **जहुः** तत्यजुः । **स्त्रिय** स्तु **चिताम् आरुरुहुः** । दाहकः काष्टसमुदायः चिता । स्त्रियः सहगमनं चक्रुरित्यर्थः ॥ १९ ॥

**रामपत्न्यश्च तं देहमुपगृह्याग्निमाविशन् ।**
**वसुदेवपत्न्यस्तद्गात्रं प्रद्युम्नादीन् हरेः स्नुषाः ।**
**कृष्णपत्न्योऽविशन्नग्निं रुग्मिण्याद्यास्तदात्मकाः ॥ २० ॥**

**स्नुषाः प्रद्युम्नादीन् उपगृह्य अग्निमाविशन् । कृष्णपत्न्यः** नीलभद्रादयः **अग्निम् आविशन् ।** रुग्मिणीसत्यभामे **तदात्मकाः** तेन कृष्णेन सहित आत्मा ज्ञानदेहो ययोस्ते । (गौरवात्) बहुवचनम् । तयोर्ज्ञानदेहान्तर्धानमभूदिति भावः ॥ २० ॥

**अर्जुनः प्रेयसः सख्युः कृष्णस्य विरहातुरः ।**
**आत्मानं सान्त्वयामास कृष्णगीतैः सदुक्तिभिः ॥ २१ ॥**

**बन्धूनां नष्टगोत्राणामर्जुनः साम्परायिकम् ।**
**हतानां कारयामास यथावदनुपूर्वशः ॥ २२ ॥**

**द्वारकां हरिणा त्यक्तां समुद्रोऽप्लावयत् क्षणात् ।**
**वर्जयित्वा महाभाग श्रीमद्भगवदालयम् ॥ २३ ॥**

**नित्यं सन्निहितस्तत्र भगवान् मधुसूदनः ।**
**स्मृत्याऽशेषाशुभहरः सर्वमङ्गळमङ्गळः ॥ २४ ॥**

**स्त्रीबालवृद्धानादाय हतशेषान् धनञ्जयः ।**
**इन्द्रप्रस्थं समावेश्य वज्रं तत्राभ्यषेचयत् ॥ २५ ॥**

**श्रुत्वा सुहृद्वधं राजन्नर्जुनात् ते पितामहाः ।**
**त्वां तु वंशधरं कृत्वा जग्मुः सर्वे महापथम् ॥ २६ ॥**

**य एतद् देवदेवस्य विष्णोः कर्माणि जन्म च ।**
**कार्तयेच्छ्रद्धया मर्त्यः सर्वपापैः प्रमुच्यते ॥ २७ ॥**

**इत्थं हरेर्भगवतो रुचिरावतारं वीर्याणि चास्य चरितानि च सत्तमानि[1] ।**
**अन्यत्र चेह च श्रुतानि गृणन् मनुष्यो भक्तिं परां परमहंसगतौ लभेत ॥ २८ ॥**

**॥ इति श्रीमद्भागवते महापुराणे वैयासक्यामष्टादशसाहस्र्यां पारमहंस्यां संहितायां एकादशस्कन्धे एकत्रिंशोऽध्यायः ॥**

**॥ समाप्तश्चैकादशस्कन्धः ॥**

**कृष्णगीतैः** भगवद्गीतोपनिषद्भिः । **साम्परायिकम्** उत्तरक्रियाम् । **पितामहा** धर्मराजादयः । **त्वां** परीक्षितम् । **महापथं** प्रति वीराध्वानं प्रति । **वीर्याणि** दुष्टनिग्रह-रूपाणि **चरितानि** शिष्टपालनरूपाणि **सत्तमानि** स्मरणेन सौख्यप्रदानीत्यर्थः । **इह** परमात्मनि स्थितानि **अन्यत्र** तदुक्तेषु स्थितानि चरितानि गृणन् परमहंसानां गतौ=

[1] 'चरितानि च सत्तमानि' इति प्राचीनपाठ इति शेषगिर्याचार्याः । 'मङ्गळानि' इति पाठान्तरम् । सुधीन्द्रतीर्थैस्तु 'सम्मतानि' इति पाठो गृहीतः ।

प्राप्ये श्रीनारायणे **भक्तिं लभेत** । भक्त्याधिक्यानुसारेण कर्मबन्धदुःखपरिहाराधिक्यमिति भावः । **अन्यत्र** भारते **इह** भागवते तानि **चरितानि श्रुतानि** इति वा ॥ २८ ॥

॥ इति श्रीयादवेन्द्रयतिविरचिते एकादशस्कन्धव्याख्याने एकत्रिंशोऽध्यायः ॥

॥ श्रीकृष्णार्पणमस्तु । श्रीहयग्रीवाय नमः । शुभमस्तु ॥

॥ श्रीमध्वेशः प्रीयताम् ॥

